Srimaddinkar Bhatta
karikavali muktavalidinkar
sahita rama rudi
কারিকাবলী মুক্তাবলী দিনকরী সহিতা
রাম রুদ্রী ।
Sanskrit
Paper — Printed
1943 sambad (133years old)
237 folios
14.8"x 8"
Complete

ॐ श्रीगणेशाय नमः तातस्य तर्कसरसीरुहकाननेषु रामेश्वरस्य तरणेश्चरणे प्रणम्य श्रीरामरुद्रसुकृती कृतिनां हिताय लीलावशाल्कि
मपि कौतुकमातनोति १ जाने कदाचिदपि नैव शिवस्वरूपं तातात्पुनः परमदैवतमन्यदत्र तस्मादिमां कृतिमिहाद्य तरङ्गिणीत्वात्पादाय तत्च
रणयोः परिकल्पयामि २ तरङ्गिणीयं सफलोक्तिवाचोमुदे बुधानां तरसा विदे च भूयात्सदाखिलनिखिलाण्डभाण्डकीर्तिप्रभाजातविभूतिना
नाम् ३ सिद्धांतमुक्तावलीव्याख्यां चिकीर्षुर्महादेवः प्रारिप्सितग्रन्थविघ्नविघाताय कृतं तातनमस्काररूपं मङ्गलं शिष्यशिक्षार्थमादौ
निबध्नाति लक्ष्मीति गूढार्थांस्तनुते विस्तारयतीत्यर्थः अन्यत्र विस्तारो नाम नानाजनसंबंधः प्रकृते तु स्वविषयकज्ञानवत्त्वमेवेति भावः शि
ष्या अप्येवं कुर्युरितीति अत्रेतिशब्दस्य उक्ताकारकाभिप्रायोर्थः इतिशब्दस्याव्ययत्वात्तृतीयांतत्वेन शिष्या अप्येवं कुर्युरित्याकारका

लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाभिधं भारद्वाजकुलांबुधौ विधुमिव श्रीगौरवास्यांबुजात् ज्ञात्वा शेषम
नंमितेन वचसा सिद्धांतमुक्तावलीगूढार्थांस्तनुते यथामति महादेवः परेषां कृते १ तत्र तावद्भाषापरिच्छेदव्याख्या

चूडामणीकृतविधुर्वलयीकृतवासुकिः भवो भवतु भव्याय लीलातांडवपण्डितः १॥

नं चिकीर्षुः विश्वनाथपंचाननो निर्विघ्नपरिसमाप्तये कृतस्येश्वरनतिरूपमंगलस्य शिष्या अप्येवं कुर्युरिति शिष्य
शिक्षायै निबंधं कुर्वन्नीश्वरं प्रार्थयते चूडामणीकृतेति लीलेति इदं च विशेष्यं नातः समाप्तपुनरात्तत्वदोषः॥ ॥

भिप्रायेणेत्यर्थः पर्यवसितः एतेन शिष्या अप्येवं कुर्युरित्याकारकज्ञानेच्छाशब्दानां शिष्यशिक्षानात्मकत्वात् कुर्युरिति शिष्यशिक्षायै इति
ग्रन्थासंगतिः स्वकर्तव्यत्वेन ज्ञानस्यैव शिक्षाशब्दार्थत्वादिति निरस्तम् समाप्तपुनरात्तत्वमिति क्रियान्वयेन शांताकांक्षस्य विशेष्यवाचकप
दस्य विशेषणान्तरान्वयार्थं पुनरनुसंधानं समाप्तपुनरात्तत्वं काव्यदोषः प्रकृते हि चूडामणीकृतविधुर्वलयीकृतवासुकिः भवो भवतु भव्याय
लीलातांडवपण्डित इत्यत्र भवो भव्याय भवत्वित्येतावतान्वयबोधे नैव भवपदस्य शांताकांक्षतया उत्तरत्र विद्यमानलीलातांडवपण्डित 
इति विशेषणस्यान्वयार्थं संभवः पुनः कीदृश इत्याकांक्षासंपादनाय भवपदेन भवस्मरणस्यावश्यकत्तया भवति समाप्तपुनरात्तत्वं दोष इति भावः 

ननुजातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां जातिप्रवृत्तिनिमित्तकमेवविशेष्यवाचकमितिनियमः अन्यथानीलोत्पलमित्यादिवदुत्प
लनीलमित्यादेरपिप्रयोगस्यप्रसंगात् तथाहिसमासविधायकसूत्रेयत्प्रथमांतपदनिर्दिष्टंतत्समासेपूर्वंनिपततीतिनियमः विशे
षणंविशेष्येणेतिकर्मधारयविधायकसूत्रेविशेषणवाचकपदस्यप्रथमांतपदनिर्दिष्टत्वात्पूर्वनिपातनियमः नीलोत्पलयोर्विशेषण
विशेष्यभावेनियामकाभावेउत्पलस्यविशेषणत्वविवक्षयाउत्पलनीलमितिप्रयोगःस्यादेवतस्माज्जातिप्रवृत्तिनिमित्तकत्वादुत्प
लपदस्यविशेष्यवाचकत्वमेवेत्यवश्यमंगीकरणीयंतथाचशिवशरीरवृत्तिजातिविशेषप्रवृत्तिनिमित्तकस्यभवशब्दस्यविशेषण
परत्वानुपपत्तिः नचभवःसर्वंजानातीतिप्रतीत्यनुपपत्तिः अवच्छेदकतासंबंधेनज्ञानवत्वबोधकत्वस्येश्वरज्ञानस्यकिञ्चिदनवच्छि
न्नत्वेनस्वीकर्तुमशक्यत्वादितिवाच्यम् स्वाश्रयावच्छिन्नत्वसंबंधेनतादृशवैजात्यविशिष्टेचैतन्यस्यैवभवपदार्थत्वोपगमात् नचैकव्यक्ति

वस्तुतस्तुविधोःकिमितिचूडामणीकरणंकिमर्थंवावासुकेर्वलयीकरणमित्याकांक्षायांनिराकांक्षप्रति
पत्तिर्नसंभवतीतिलीलेत्यादिविशेषणानुक्तौविवक्षितान्वयबोधाभावान्न्यायमन्त्रदोषः॥ ॥

कत्वाद्भवत्वन्नजातिरितिवाच्यम् कल्पभेदेनशिवशरीरस्यापिभिन्नत्वात् नचभवत्यस्माज्जगदितिव्युत्पत्त्याजगत्कारणत्वमेवभवपद
प्रवृत्तिनिमित्तंननुजातिविशेषइतिवाच्यम् योगाद्रूढेर्बलीयस्त्वादित्यभियुक्तोक्त्याशीघ्रोपस्थितिकरूढ्यर्थमादायशांताकांक्षान्वयबोधो
त्पत्तौविलम्बोपस्थितिकयोगार्थमादायान्वयबोधानुपपादनेसमाप्तपुनरात्तत्वदोषस्यावश्यकत्वादित्यत आह· वस्तुतस्त्विति· इत्याकांक्षाया
मिति·सत्यामितिशेषः निराकांक्षाप्रतिपत्तिर्नभवतीतिस्वोत्तरानुत्पन्नाकांक्षाकशाब्दबोधोनभवतीत्यर्थः विवक्षितान्वयबोधेतिविशेष्यवा
चकपदेननिरुक्तनिराकांक्षान्वयबोधजननोत्तरंविशेषणांतरान्वयार्थंविशेष्यवाचकपदस्यपुनरनुसंधानंसमाप्तपुनरात्तत्वमितिसमा
प्तपुनरात्तत्वलक्षणघटकत्वेनविवक्षितोयोनिराकांक्षान्वयबोधस्तदभावादित्यर्थः लीलेत्यादिविशेषणानुक्ताविव्यनेनतादृशविशेष
णोक्तौतादृशविशेषणसहितेतरवाक्यजन्यान्वयबोधएवविवक्षितान्वयबोधोभवतीतिसूचितम्॥



का॰मु॰ नन्वेवंसमाप्तपुनरात्तत्वंक्वापिदोषोनस्यात्शाब्दबोधमात्रेआकांक्षायाःप्रयोजकत्वेनविशेषणांतरान्वयार्थंसकीदृशइत्यादियत्किंचिदाकांक्ष
दि॰रा॰ याःकल्पनीयतयाक्वापिनिराकांक्षाप्रतिपत्तेरसंभवादित्यतआह·उत्थाप्याकांक्षयेति·अनियताकांक्षयेत्यर्थः·क्रियाकारकपदानांपरस्पराकां
२ क्षानियताप्रश्नादिपदानामपिप्रतियोग्याकांक्षानियताएवंप्रयोजनाकांक्षापिनियतैवप्रयोजनाभावेवाक्यार्थस्यैवासिद्धिप्रसंगात्भवःकीदृशइ
त्याद्याकांक्षातुनियतातथाचनियताकांक्षारहितान्वयबोधोत्तरंविशेष्यवाचकपदस्यपुनरनुसंधानमेवसमाप्तपुनरात्तत्वमितिविवक्षितत्वात्
उत्थाप्याकांक्षयाविशेषणान्वयएवतत्प्रसरादितिलीलयाताण्डवंनृत्यंतत्रपण्डितोऽभिज्ञइत्यर्थः·अनेनचनृत्यविशिष्टतयास्म
तिविषयत्वात्प्रार्थितार्थोभवत्येवेतिसूचितम्ननुआभूषणरहितस्यकथंनृत्यंतत्राहचूडामणीकृतेतिअचूडामणिवत्संपद्य
मानइतिचूडामणीकृतःचूडामणीकृतोविधुर्येनसतथेत्यर्थःवलयीकृतेतिअवलयंवलयंसंपद्यतेइतिवलयीकृतःवलयीकृ
तोवासुकिर्येनसतथेत्यर्थः।शिष्यावधानायप्रतिजानीतेनिजनिर्मितेतिनिजेनस्वेननिर्मितारचितायाकारिकावलीताम्अतिअ

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरंतनोक्तिभिः॥ १॥

त्यंतंक्षेपःशब्दसंक्षेपोयासुताःअतिसंक्षिप्तास्तादृश्यश्चताश्चिरंतनानांकणादप्रभृतीनांयाउक्तयोवचांसिवचःप्रतिपाद्यायुक्त
यस्ताभिरहंविशदीकरवाणिप्रकटीकरोमीत्यर्थः·ननुलीलावत्यादिप्राचीननिबंधाध्ययनेनैवकारिकावलीप्रतिपादितोर्थोबोद्धव्यइति
किमनेनभवत्कृतविशदनिबंधेनेत्यतआहअतिसंक्षिप्तेतितथाचलीलावत्यादिप्राचीननिबंधेषुग्रंथबाहुल्येनबहुतरदुःखहेतुप्र
तिपत्तिकतयानबालानांप्रवृत्तिरितिभावःस्वोत्प्रेक्षामूलकताप्रयुक्तानादरणीयतांनिरसितुंचिरंतनेत्युक्तंनन्वित्यवधारणेनयाचको
नुकम्पदेवेत्यर्थः·एतेनस्वस्यग्रंथकरणेक्लेशाभावःसूचितः॥ ॥सकीदृशइत्याद्युत्थाप्याकांक्षयाविशेषणांतरान्वयस्थलएवसमाप्तपुनरात्तत्वदोष
इतिभावःचूडामणिरितिच्विस्सादभूततद्भावेइत्यनेनविहितच्विप्रत्ययांतचूडामणिशब्दघटितत्वात्उक्तवाक्याद्यमर्थोलभ्यतइतिभावः।शिष्यावधा
नायेतिशिष्याणामवधानंशुश्रूषातस्यैइत्यर्थः·वक्तव्यार्थस्यविशिष्याज्ञानेतत्प्रतिपत्तेरिष्टसाधनत्वाग्रहेणशिष्याणांवाक्यश्रवणेच्छानसंभवतिप्र रामः
तिज्ञायास्वकारिकावलीव्याख्यातस्यकर्तव्यत्वज्ञानेकारिकावल्यर्थज्ञानरूपेष्टसाधनत्वस्यग्रन्थकृद्वाक्येषुसुग्रहत्वेनभवत्येवतच्छ्रवणेच्छेतिभावः॥ २

शव्दसङ्क्षेप इतिसंक्षेपोद्विविधः शव्दसंक्षेपोऽर्थसंक्षेपश्च तत्रार्थसंक्षेपेणग्रंथस्यसकलार्थाप्रतिपादकत्वेवालव्युत्पत्तिजनकतानस्यादित्या
शंक्यसंक्षेपपदस्यप्रकृतेशव्दसंक्षेपमात्रपरत्वमुपदर्शितमितिपद्यस्यातिसंक्षिप्तपदस्यप्रयोजनंप्रकटयन्नाह-नन्वित्यादि-स्वोत्प्रेक्षेतिस्व
कीयकल्पनामूलकत्वेत्यर्थः अनेनाऽवधारणेनसज्जातिरूपमितिसामान्यमनुगतधर्ममात्रंतच्चक्वचिदुपाधिरूपंक्वचिज्जातिरूपंप्रकृतग्रंथे
स्वस्यग्रंथकरणेप्रवृत्तौनि मितमाहराजीवेतिराजीवेशिष्येपादयाकृपातयावशंवदस्तदधीनइत्यर्थः २ ननुग्रंथादौश्रोतृप्रवृत्त
येप्रयोजनादिवक्तव्यंभवतितस्यचेहानुक्तत्वादुपेक्षणीयत्वेतद्ग्रंथस्यस्यादित्याशंक्यविषयप्रयोजनसंवंधाधिकारिणःसूचयन्न
तिसंक्षिप्तत्वादेतद्ग्रंथस्यसकलपदार्थाप्रतिपादकतयाकथंवालव्युत्पत्तिरित्याशंकांचैतद्ग्रंथस्यसकलपदार्थप्रतिपादकत्वेप्र
दर्शनेनपरिहरन्यत्करोषियदश्नासियज्जुहोषिददासियत्यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमितिभगवदुक्तेर्मुक्तावलीसमं

विशदीकरवाणिकौतुकान्ननुराजीवदयावशंवदः २ सद्रव्यागुणगुम्फितासुकृतिनांसत्क
र्मणांज्ञापिकासत्सामान्यविशेषनित्यमिलिताऽभावप्रकर्षोज्ज्वला॰ ॥ ३ ॥ ३ ॥

स्वकीयग्रंथंभवतिचार्पयन्स्वकीर्त्यनुवृत्तयेग्रंथस्यस्वस्यचनामनिवध्नातिसद्रव्येतिद्रव्यैःसहितायुक्ताप्रतिपादकतयागुणै
रपिगुम्फितायुक्तासतामुत्क्षेपणादीनांपंचानांकर्मणांज्ञापिकावोधिकासत्जातिरूपंसामान्यंविशेषाःनित्यःसमवायस्तैर्मिलिता
यद्वासंतिसामान्यविशेषनित्यमिलितानियस्यांसानित्यमिलितंनित्यसंवंधःअभावप्रकर्षःप्रागभावादिभेदेनवैलक्षण्यंतस्यउज्वला
प्रकाशिकाएषावुद्धिस्थासिद्धांताएवमुक्तास्तासांआवलीपंक्तिःविष्णोर्नारायणस्यवक्षस्थलेविन्यस्ताविशेषतोर्पितासुकृतिनांपण्डिता
नांमनसःमुदंसंतोषंचिरंवहुकालंवितनुतांविस्तारयत्वित्यर्थः॥३॥जातिरूपसामान्यस्यैवनिरूपणीयत्वेनजातिरूपसामान्यलाभायसत्सामान्येत्यु
क्तमितिभावः ननुसदित्यस्यसत्ताविशिष्टार्थकत्वेनसत्पदस्यजातिरूपार्थकत्वंलक्षणयैववाच्यंसामान्यपदमपिशास्त्रकृत्परिभाषयाजातिरूपसामा
न्यएवसुप्रसिद्धम् अन्यथासामान्येसविशेषकमितिमूलेपिजात्यतिरिक्तसामान्यव्यावर्त्तकविशेषणानुक्त्यामूलकारस्यन्यूनतापत्तेस्सदित्यनर्थकंचे

मु·दि· विपदमनर्थकमितीति इदंचोपसर्गाणांवाचकत्वमताभिप्रायेण अन्यथातेषांद्योतकत्वपक्षेकिंचिदर्थावाचकतयाउपसर्गाणांशक्तत्वरूपपद
रा· त्वासंभवेनविपदमित्यसंगतमेवस्यात्अतएवसमाधानेपिविशिष्टवाचकानांपदानांसतिष्टथग्विशेषणवाचकपदसमवधानेविशेष्यमात्रपर
३ ननुयुक्तीनामत्रासत्वात्कथंविदुषांसंतोषस्तत्राहसद्युक्तिरितिसत्यःयुक्तयोयस्यांसातथामुक्तावलीसादृश्यंग्रंथेद्रव्यादिपदार्थव
त्तयायथाहिमुक्तावलीसद्व्यासाध्यतयाद्रव्यवतीद्रव्यसाध्येतियावत्नानाविधद्रव्यघटितावागुणेनसूत्रेणगुम्फितानिर्मितासुकृति
नांपुण्यवतांयानिसंतिसमीचीनानिभगवद्भजनादिरूपाणिकर्माणितेषांवोधिकासत्सामान्यंसमीचीनाजातिःविशेषोमहत्वनिर्मलत्वादि
स्ताभ्यांनित्यमनवरतंसंवद्धाअभावेतेजोभावेंधकारेसतिप्रकर्षेणोज्ज्वलाःअर्थप्रकाशिकेतियावत्यथामुक्तावलीद्रव्यादिसकल
पदार्थवतीतथायंग्रंथोपीति अत्रमुक्तावलीत्वोक्त्यानिर्दोषत्वंसूचितम् अत्रद्रव्यादिपदार्थप्रतिपादकत्वप्रदर्शनेनद्रव्यादयोवि॰

विस्तोर्वसुससिविश्वनाथकृतिनासिद्धांतमुक्तावलीविन्यस्तामनसोमुदंवितनुतांसद्युक्तिरेषाचिरम् ३ विघ्नविघातायकृतं
मंगलंशिष्यशिक्षायैनिवध्नातिनूतनेति नूतनजलधररुचयेगोपवधूटीदुकूलचौरायतस्मैकृष्णायनमः संसारमही
रुहस्यवीजाय॥ ॰षयाउक्ताःपदार्थतत्वावधारणंचप्रयोजनंसूचितंसंवंधश्चप्रतिपाद्यप्रतिपादकभावः पदार्थतत्वावधारण॰
कामोधिकारीतिग्रंथारंभसमयेकृतस्यमंगलस्यतन्निवंधनस्यचवैयर्थ्यमाशंक्यफलंदर्शयतिविघ्नविघातायेतिप्रारब्धुमिष्ट
स्यग्रंथस्येतिशेषःयद्यपिअत्रघातपदस्योत्पत्तिमदभावपरतयाविपदमनर्थकमितिप्रतिभातितथापिविशिष्टवाचकानांपदानां
सतिपृथक्विशेषणवाचकपदसमवधानेविशेष्यमात्रपरतायाःसकीचकैर्मारुतपूर्णरंध्रैरित्यत्रकीचकावेणवस्तेसुयेस्वना॰
न्त्यनिलोद्धताइतिकोशान्मारुतपूर्णरंध्रत्वविशिष्टवेणुवोधककीचकपदेदृष्टत्वाद्घातपदमभावमात्रपरंद्रष्टव्यम्॥ ॥ ॥
त्वमितिन्यायेनविपद संनिहितघातपदस्यअभावमात्रपरताप्रदर्शनमपिसंगच्छतेअन्यथाविपदस्यकिंचिदर्थावाचकत्वेनविशेषणवाचकत्व
संभवात्विघातपदस्योक्तन्यायविषयतानस्यादितिध्येयंविशिष्टवाचकपद स्यापिविशेषणवोधकत्वरूपविशेषणवाचकत्वस्याप्यस्ततया रामः
तेषांक्वापिविशिष्टवाचकतानस्यादिति[illegible]विशिष्टवाचकपदातिरिक्तमित्यर्थः॥ ३

ननु विघ्नविघातायकृतंमंगलमितिमूलेनमंगलेविघ्नध्वंसजनकत्वस्यैवसूचितत्वेनतदुपरिनन्वित्यादिमूलेनविघ्नध्वंसंप्रतिमंगलंनकारण मित्याशंकायद्यपियुज्यतेतथापिंनवासमाप्तिंप्रतिकारणमित्युक्तिरसंगतेत्यतस्तद्द्वयमभिप्रायांतरेणावतारयतिननुनिष्फलत्वादिति॰फलविशेष शून्यत्वहेतुनेति॰यद्यपिज्योतिष्टोमादावपिपुत्रादिरूपफलविशेषशून्यत्वेनफलविशेषशून्यत्वंननिष्फलत्वव्याप्यंतथापितत्पदेनयावद्॰फल विशेषशून्यत्वस्यविवक्षितत्वात् यावद्विशेषाभावस्यचसामान्याभावव्याप्यत्वान्नोक्तासंगतिरितिभावः नचैवंनिष्फलत्वसिद्धयेयावत्फलविशे षशून्यत्वमेवसाधनीयंमूलेतुमंगलंनविघ्नध्वंसंप्रतिनवासमाप्तिंप्रतिकारणमित्यनेनफलद्वयशून्यत्वमेवसाध्यतेतेनचनयावत्फलविशे षशून्यत्वरूपहेतुसिद्धिरितिकथंप्रकृतोपयोगइतिवाच्यम् पशुपुत्रादिफलशून्यत्वस्यमंगलेसर्वसंमतत्वेनतस्यसाधनानर्हत्तयाप्राची

ननुनिष्फलत्वान्मंगलाचरणमयुक्तंनचनिष्फलत्वमेवासिद्धंतस्यफलविशेषशून्यत्वेनहेतुनासाधनादित्यभिप्रायेणाशंकतेनन्विति मंगलस्यकारणत्वाभावेव्यतिरेकव्यभिचाररूपहेतुमाह विनापीति निर्विघ्नपरिसमाप्तीतिविघ्नध्वंसपूर्वकसमाप्तीत्यर्थः न

ननुमंगलंनविघ्नध्वंसंप्रतिनवासमाप्तिंप्रतिकारणंविनापिमंगलं ॥

चतत्रजन्मान्तरीयमंगलकल्पनान्नव्यभिचारइतिवाच्यंभोगादिनापिनास्तिकात्मनिविघ्ननाशसंभवेनजन्मांतरीयमंगलसंदेहे नव्यभिचारसंशयसंभवात् अत्रकादंबर्यादिग्रंथेमंगलसत्त्वेपिसमाप्तेरदर्शनेनान्वयव्यभिचारोपिदोषोबोध्यःव्यभिचारसंदेहस ननवीनाभ्यांसमाप्तिविघ्नध्वंसयोरेवफलत्वांगीकारेणतदुभयफलशून्यत्वसाधनेयावत्फलविशेषशून्यत्वरूपहेतुसिद्धेरावश्यकत्वादितिभा वःनचैवमपिप्राचीनैःमंगलस्यसमाप्तिंप्रतिविघ्नध्वंसद्वारैवकारणत्वांगीकारात्विघ्नध्वंसंप्रत्यकारणत्वेसमाप्तिंप्रत्यपिविघ्नध्वंसद्वाराकारण त्वमसंभवदुक्तिकमेवेतिपृथक्समाप्तिकारणत्वनिषेधोव्यर्थएवेतिवाच्यम् यतोहिविघ्नध्वंसद्वारैवसमाप्तिंप्रतिमंगलस्यप्राचीनैःसर्वत्रकार णत्वोपगमेविघ्नध्वंसोमंगलफलमितिवादिनोनवीनस्यमतेनचैवंस्वतःसिद्धविघ्नविरहवताकृतस्येत्यादिविघ्नात्यंताभाववताकृतस्यमंगलस्यनि ष्फलत्वापतिःप्राचीनैःकर्तुमशक्यास्वमतेपितत्रविघ्नध्वंसरूपद्वाराभावेनमंगलेनिष्फलत्वस्यैवांगीकरणीयत्वात् तथाचप्राचीनानामपूर्व द्वारैवमंगलस्यसमाप्तिहेतुतासंमतेतिनकश्चिद्दोषइतिभावःनचैवं॥

मु.दि. विघ्नध्वंसस्तु मंगलस्य द्वारमिति प्राचीनोक्तिविरोध इति वाच्यम् द्वारत्वं हि तज्जन्यत्वे सति तज्जन्यजनकत्वं न च अपूर्वं द्वारा मंगलस्य समाप्तिहेतु
रा. त्वेपि मंगलजन्यसमाप्तिं प्रति विघ्नध्वंसस्य प्रतिबंधकसंसर्गाभावविधया कारणत्वेन विघ्नध्वंसस्य मंगलजन्यत्वेन च मंगलस्यापूर्वं द्वारा सम
४ प्तिकारणत्वेपि विघ्नध्वंसस्य द्वारता संभवात् न चैवमपि अपूर्वस्य द्वारतामते स्वजन्यापूर्वसंबंधेनैव मंगलस्य हेतुतया वक्तव्यतया स्वजन्यविघ्न
ध्वंसवत्त्वसंबंधेन मंगलस्य कारणताप्रतिपादनं मुक्तावलीव्याख्यानकृतामसंगतमेवेति वाच्यम् यत्र मंगलजन्यविघ्नध्वंसो वर्त्तते तत्राग्नेतस्थले
षु नानापूर्वव्यक्तीनां कल्पने गौरवात् तादृशमंगले स्वजन्यविघ्नध्वंससंबंधेनैव मंगलस्य समाप्तिहेतुतायुक्तेत्यभिप्रायकतया तदुक्तिसंगतेः न चैव
मपि समाप्तिं प्रति मंगलस्य क्वचित्स्वजन्यविघ्नध्वंससंबंधेन हेतुता क्वचित्स्वजन्यापूर्वसंबंधेनेत्यापातं तथा च श्यथ क्समाप्तिकारणत्वे निषेधस्याव
श्यकत्वेऽपि यत्र स्वजन्यापूर्वसंबन्धेन मंगलं न तत्र स्वजन्यविघ्नध्वंससंबंधेन यत्र च स्वजन्यविघ्नध्वंससंबंधेन मंगलं न तत्र स्वजन्यापूर्वसंबंधे
ग्राह्यसंशयरूपतया कारणताप्रत्यक्षस्यैव प्रतिबंधकत्वं न त्वनुमितौ तत्र तस्यानुकूलत्वादित्यभिप्रायवान् मंगलं समाप्तिफलकं समा

नास्तिकादीनां ग्रंथे निर्विघ्नपरिसमाप्तिदर्शनादिति चेन्न ॥

सन्याफलकत्वे सति सफलत्वादिति परिशेषानुमानेन मंगलस्य समाप्तिफलकतां व्यवस्थापयिष्यन् प्रथमतो विशेष्यासिद्धिनिरा
सायफलवत्तां साधयति अविगीतेति ॥ ऐ नेति समाप्तौ मंगलस्य संबंधद्वयेनापि व्यतिरेकव्यभिचारात्कारणत्वमेवासंभवदुक्तिकमिति वाच्यमतत्सं
बंधेन मंगलाव्यवहितोत्तरत्वस्याऽपि कार्यतावच्छेदककोटिप्रविष्टतया व्यभिचाराभावादिति हृदयं नच व्यतिरेकव्यभिचाररूपहेतुना समाप्तेः कारण
ताभावस्य मंगले पूर्वपक्षिणा साधनात् समाप्त्यन्याफलकत्वे सति सफलत्वहेतुना मंगले समाप्तिकारणत्वानुमानं सिद्धांतिनामसंगतं समाप्तिकारणा
ताभावसाधने हेतौ हेत्वाभासमनुद्भाव्य समाप्तिकारणत्वानुमानस्य सत्प्रतिपक्षत्वापत्तेरित्यतः सिद्धांतग्रंथस्याभावमाहव्यभिचारसंदेहस्येति मंगल
त्वधर्मिकसमाप्तिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसंदेहस्येत्यर्थः ग्राह्यसंशयरूपतयेति अनुमित्याग्राह्यं हि मंगले समाप्तिकारणत्वं तच्च समाप्ति
मन्निष्ठाभावप्रतियोगितानवच्छेदकमंगलत्ववत्त्वं तथा च साध्यसंदेहपर्यवसन्नस्य व्यभिचारसंदेहस्यानुमितौ प्रतिबंधकत्वमिति भावः कारण राम
ताप्रत्यक्षे एव प्रतिबंधकत्वमिति विशेषदर्शनाभावविशिष्टस्य संशयः प्रत्यक्षिकनिश्चयप्रतिबंधक इति मताभिप्रायेणोक्तम् ॥ ॥ ९ ॥ ४

वस्तुतस्तु संशयसामग्र्या एव निश्चयप्रतिबंधकत्वमतएव विशेषदर्शनदशायामेककोटिभानप्रतिबंधेन न संशयसामग्र्यभावान्निश्चय इति मंतव्यम् तत्र तस्येति अनुमितौ साध्यसंशयस्येत्यर्थः अनुकूलत्वादिति सिद्ध्यभावरूपपक्षतासंपादकत्वादिति भावः परिशेषानुमानेनेति यदितरविशेषाभावकत्वे सति सामान्यवत्त्वरूपो हेतुः परिशेषानुमानं आचारश्चात्रेति अत्रेति शब्दश्चोत्तरान्वयी तथा च आचारो यद्यपि क्रियैव तथाप्यत्र विषयत्वश्रुतेः कृतिरेव विवक्षितेत्यर्थः ननु श्येनयागस्यापि शत्रुवधरूपेष्टसाधनत्वात्सफलत्वमस्त्येवातस्तत्र हेतुसत्त्वेपि न व्यभिचार इति हेतावविगीतत्वविशेषणं व्यर्थमित्याशंकां निराकर्तुमविगीतपदाभावे व्यभिचारमुपपादयन्नाह तेनेत्यादि प्रवृत्त्युपयुक्तेति मंगलाचरणे प्रवृत्तिनिर्वा

विषयत्वं च ज्ञानविषयसुखे ऽतिप्रसक्तमत आचारेति आचारश्चात्र यद्यपि क्रियैव तथापि विषयत्वश्रुतेः कृतिरेव विवक्षिता तद्विषयत्वं च विधेयतयाबोध्यं तेन फलेन व्यभिचारः तस्योद्देश्यतयाकृतिविषयत्वात् विधेयतयाकृतिविषयत्वं चैत्यवंदनादावप्यस्त नः शिष्टेति शिष्टत्वं च फलसाधनतांशे भ्रांतिरहितत्वं ननु वेदप्रामाण्याभ्युपगंतृत्वं तेन व्युत्क्रमेण कृतेर्दर्शादेर्निष्फलत्वेपि न व्यभि०

अविगीतशिष्टाचारविषयत्वेन मंगलस्य सफलत्वे सिद्धे तत्र फलजिज्ञासायां संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात्॥ २२

चारः शिष्टाचारविषयत्वं श्येनयागादावप्यस्त्यतो ऽविगीतेति अविगीतत्वं च बलवदनिष्टाननुबंधित्वं तेन श्येनयागादौ प्रवृत्त्युपयुक्तबलवदनिष्टाननुबंधीष्टसाधनत्वरूपसाध्याभावेपि न व्यभिचारः सिद्धे अनुमिते तत्र मंगले फलजिज्ञासायां विशेषतः फलजिज्ञासायां ननु कथं तर्हि गंगास्नानादीनामदृष्टार्थकतेत्यत आह संभवतीति तथा च तत्र दृष्टासंभवेनादृष्टकल्पनेति द्रू

हाय बलवदनिष्टाननुबंधीष्टसाधनत्वरूपसफलत्वमेवानुमेयं तच्च श्येनेनास्त्येवेति हेतावविगीतपदाभावे भवत्येव व्यभिचार इति भावः अनिष्टे बलवत्त्वं च द्वेषोत्पत्तिनांतरीयकभिन्नत्वम् अनिष्टे बलवत्त्वविशेषणात् बहुवित्तव्ययासाध्ययागादौ न प्रवृत्त्यनुपपत्तिः यद्यपि जलताडनादेरपि न कुर्यान्निष्फलं कर्मेत्यादिना निषिद्धतया तदनुकूलकृतेरपि नरकरूपबलवदनिष्टजनकतया ऽविगीताचारविषयत्वं सफलकर्मण्येवेति शिष्टपदमनर्थकं तथापि पश्वादिकृतचेष्टायां व्यभिचारवारकतया शिष्टपदसार्थक्यमेव विधिनिषेधयोर्नराधिकारित्वेन तदीयचेष्टाया निषेधाविषयत्वेन बलवदनिष्टाजनकत्वादिति भावः ननु तर्हीति अदृष्टफलकल्पनाया अन्याय्यत्वे हेत्वर्थः॥

विश्वजिन्न्यायेनेति काम्यप्रकरणे विश्वजिता यजेतेति विधिः श्रूयते काम्यप्रकरणपठितत्वेन तस्य नित्यत्वाभावात् प्रत्यवायपरिहारफलस्याप्यभावा
त् प्रवृत्त्यर्थं किंचित्फलं कल्पनीयं श्रुतौ फलाश्रवणादिति स स्वर्गः स्यात् सर्वान्प्रत्यविशिष्टत्वादिति जैमिनिना सूत्रं प्रणीतं स विश्वजिता साध्यः स्वर्गो भवितुमर्ह
ति स्वर्गस्य सर्वान्प्रत्यविशिष्टत्वात् सर्वेषामिच्छाविषयत्वादिति यावत् तथा च विश्वजिद्यागस्य पुत्रादिफलकत्वे पुत्राद्यर्थिनां तत्र प्रवृत्तिर्न स्यात् स्वर्गफल
कत्वे तु तस्य सर्वेषामिच्छाविषयतया सर्वेषां तत्र प्रवृत्तिः संभवतीति स्वर्ग एव फलत्वेन कल्पयितुमुचितो नान्य इति तन्न्यायपर्यवसितार्थः तन्न्यायात्तत्रापि
स्वर्ग एवेष्टं कल्प्यतामित्यर्थः उपस्थितत्वादित्यनेन कस्योपस्थितत्वमुक्तमित्याकांक्षायामाह परिशेषानुमाने प्रवर्तमानस्येति समाप्तन्याय फलकत्वेस
ति सफलत्वहेतुकानुमान इतितदर्थः ननु समाप्तित्वेन समाप्तेरुपस्थितिरकिंचित्करी व्याप्तिघटकाभावादीनाम् उपस्थितत्वाऽविशेषादित्यत आह
नन्वत्तथापि विश्वजिन्न्यायात्स्वर्ग एवेष्टं कल्प्यतामत आह उपस्थितत्वादिति आरब्धं कर्म मे निर्विघ्नं परिसमाप्यतामिति ग्रंथादौ प्रवृत्त
पुरुषकामनाविषयत्वेन परिशेषानुमाने प्रवर्त्तमानस्योपस्थितत्वादित्यर्थः कल्प्यते अनुमीयते अनेन च मंगलस्य समाप्तिहेतुत्वेऽनुमा
नमेव प्रमाणम् न तु शिष्टाचारानुमिता श्रुतिरिदानीमानुपूर्वीविशेषनिर्णयाभावेन तस्या अबोधकत्वादिति सूचितं व्यापकत्वघटितकार

उपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते इत्थं च यत्र मंगलं न दृश्यते तत्रापि जन्मांतरीयं तत्कल्प्यते ॥

पताग्रहप्रतिबंधकज्ञानविषयव्यतिरेकव्यभिचारमुद्धरति इत्थं चेति मंगलस्यासमाप्तिफलकत्वे चेत्यर्थः तत्रापि नास्तिकादिग्रंथेपि
तत् मंगलं कल्प्यते अनुमीयते कार्यरूपसमाप्त्येतिशेषः॥ १२ ग्रंथादौ प्रवृत्तकामनाविषयत्वेनेति तथा च तादृशकामनाविषयत्वप्रकारकोपस्थि
तिविषयत्वं नान्येषामिति भावः ग्रंथादौ प्रवृत्तिसमये ग्रंथसमाप्तावेवेच्छाया औत्सर्गिकत्वात् तथात्वं बोध्यम् व्यतिरेकव्यभिचारमुद्धरतीति यद्यपि व्यति
रेकव्यभिचारनिश्चये सति कारणताया बाधितत्वेन समाप्तेर्मंगलकार्यत्वासिद्ध्या समाप्तिरूपकार्येण मंगलानुमितिरेव न संभवतिपदि तु जन्मांतरीयमं
गलसंदेहान्न व्यतिरेकव्यभिचारनिश्चयोऽपि तु संदेह एव स च न कारणत्वानुमितौ प्रतिबंधक इति समाप्त्या मंगलानुमानं संभवत्येवेत्युच्यते तदा ग्रा
ह्यसंदेहपर्यवसन्नतादृशव्यभिचारसंदेहस्याकिंचित्करत्वेन तादृशव्यभिचारोद्धारो विफल एव तथापि कारणत्वाऽनुमितावपि नास्तिकस्य जन्मां राम
तरीयमंगलसंदेहेन बाधितविषयकत्वसंदेहादृढवत्प्रमाणसंदेहास्कंदितकारणतानिश्चयो न तु स स्वकार्याय समर्थ इति तदुद्धार आवश्यक इति भावः ५

व्यतिरेकव्यभिचारेणसमाप्तेः कार्यत्वासिद्ध्याकथंसमाप्तिकार्येणमंगलानुमानमित्याशंकांनिरस्यति ग्राह्यसंदेहेत्यादिना ननुप्रचुरस्थले यत्किंचिन्मंगलेन यत्किंचिद्विघ्नध्वंसस्यावश्यकतयास्वजन्यविघ्नध्वंससंबंधेनमंगलस्यसत्वात्कथमेतत्रसेसमाप्त्यभावइत्याशंकां निरस्यति तथाचेत्यादिनाविघ्नसमसंख्याकेति तत्तत्स्थलीयविघ्नेतरावृत्तिसकलविघ्नवृत्तिर्यासंख्यातत्सजातीयातत्तत्स्थलीयमंगलेतराव ग्राह्यसंदेहपर्य्यवसन्नस्य पूर्वोक्तव्यभिचारसंशयस्यकारणतानुमितावप्रतिबंधकत्वाद्व्यभिचारनिर्णयस्यचाभावादितिभा वः।नन्वेवमप्य न्वयव्यभिचारज्ञानंकारणताग्रहविरोधिभविष्यत्येवेत्याशंक्यान्वयव्यभिचारंनिरस्यतियत्रचेतितत्रकादम्ब र्य्यादौबलवत्तरत्वंवैजात्यम् नन्वेवमपिकादम्बर्य्यादौकुतोनविघ्नध्वंसइत्यत आहप्रचुरस्येतिप्रचुरस्यैवमंगलस्येत्यर्थः बलव त्तरविघ्ननिवारणेबलवत्तरादिविघ्ननिवारणेतेनप्रचुरविघ्नस्यापिसंग्रहः तथाचमंगलस्यविघ्नसमसंख्याकमंगलत्वेनना

यत्रचसत्यपिमंगलेसमाप्तिर्नदृश्यते तत्रबलवत्तरोविघ्नोविघ्नप्राचुर्य्यंवाबोध्यम् प्रचुरस्यास्यैवबलवत्तर विघ्ननिवारणेकारणत्वम् विघ्नध्वंसस्तुमंगलस्यद्वारमित्याहुः प्राचः॥ २२ शकतयानतत्रविघ्ननाशइतिभावः अ त्रचविघ्नसमसंख्याकमंगलत्वेनहेतुत्वेऽधिकसंख्याकमंगलात्न्यूनसंख्याकविघ्ननाशोनस्यादतःप्राचुर्य्यंवेत्यत्रवाकारोऽना स्थायांबोध्यः बलवत्तरविघ्ननिवारणेबलवत्तरादिविघ्ननिवारणेतेनप्रचुरस्यापिविघ्नस्यसंग्रहः ननुतथापिकादम्बर्य्यादौविघ्न ध्वंसोमाजायतांसमाप्तिः परंजायतांमंगलरूपहेतोःसत्वादित्याशंक्याहविघ्नध्वंसस्त्वितितथाचस्वजन्यविघ्नध्वंससंबंधेनमंग लाभावान्नसमाप्तिरितिभावः आहुरित्यस्वरसोद्भावनंतद्बीजंतुविघ्नध्वंसद्वारामंगलस्यहेतुत्वंनसंभवतिनास्तिकग्रंथसमाप्तौव्य त्तितादृशसकलमङ्गलवृत्तिर्यासंख्यातादृशसंख्यावन्मंगलत्वेनेत्यर्थः अन्यथाविघ्नप्राचुर्येपियत्किंचिद्विघ्नवृत्तिसंख्यामा २२ भिचारात्॥ दा यान्यस्थलीयमंगलस्यतामादायवामंगलान्यवृत्तिसंख्यामादायवासमसंख्यात्वापादनसंभवात् अधिकसंख्याकंमंगलादिति एतच्चापात तोनिरुक्तविघ्ननिष्ठसंख्यासजातीयतत्तत्स्थलीयमंगलेतरावृत्तिसंख्यावन्मंगलत्वेनकारणत्वेअधिकसंख्याकमंगलादपिस्वल्पविघ्ननाशसं

॥ ९॥ भवात्॥ ९॥ ९॥

मु॰दि॰ वस्तुनस्तु प्रतिबंधकसंसर्गाभावविधया सकलविघ्नाभावस्यापि समाप्तिहेतुत्वेन विघ्नध्वंससंबंधेन मंगलसत्त्वेपि यंगलेन यावत्कारणांतरा
रा॰ तयावत्प्रतिबंधकाभावस्याऽसत्त्वादेव नान्वयव्यभिचार इत्यन्ये एवं मूलतात्पर्यान्सम संख्याकगंगलत्वेन कारणतावर्णनमयुक्तमेव परं तु वल
६ वत्तरत्वरूप वैजात्यकल्पने गौरवग्रस्तमित्यभिप्रायेणैव मूले द्वितीयपक्षावलंबनमिति ध्येयम् तच्च स्वजन्यविघ्नेति अत्र स्वजनकविघ्नध्वंसोत्पत्त्यवच्छे
दकतासंबंधेन समाप्तिं प्रति मंगलस्य हेतुत्वात् समाप्तिं प्रति स्वजन्यविघ्नध्वंसावच्छेदकतासंबंधेन मंगलस्य हेतुत्वात् स्वप्रतियोगिचरमवर्णानुकू
लकृतिमत्त्वसंबंधेन समाप्तिं प्रति आश्रयतासंबंधेन मंगलस्य हेतुत्वादित्यन्वयेन कार्यकारणभावत्रयलाभः तत्राद्यद्वयं शरीरनिष्ठप्रत्यासत्त्यावृ
त्तिपरत्वात्मनिष्ठप्रत्यासत्त्या प्रथमकल्पे कारणतावच्छेदकसंबंधः द्वितीयकल्पे कार्यतावच्छेदकसंबंधश्च केवलावच्छेदकत्वेन सच सुगमत्वा

न च स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासंबंधेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसावच्छेदकतासंबंधेन मंगलस्य हेतुत्वात्स्व
प्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबंधेन समाप्तिं प्रति आश्रयतासंबंधेन मंगलस्य हेतुत्वाद्धा जन्मांतरीयमंगलकल्प
नया न व्यभिचार इति वाच्यं तथासति जन्मांतरीयसमाप्तिमुद्दिश्य जन्मांतरीयमंगलकरणापत्तेरतः स्वप्रतियोगिचरमवर्णा
वच्छेदकतासंबंधेन समाप्तिं प्रति स्वोत्पत्त्यवच्छेदकजातीयतासंबंधेन मंगलहेतुत्वस्य वाच्यतया नास्तिकशरीरे व्यभिचार
ऽस्य दुर्वारत्वात्॥

ग्रंथकृता नोक्त इति बोध्यम् एतेन कार्यतावच्छेदकसंबंधस्य कारणतावच्छेदकसंबंधस्य चातिगुरुभूतस्याचरणे प्रयो
जनाभावाद्ग्रंथकृतामनुचितमिति केषांचिदाक्षेपो निरवकाशः अत एवोत्पत्तिपदमपि सार्थकम् अन्यथा स्वजनकविघ्नध्वंसावच्छेदक
तासंबंधेन नास्तिकशरीरेपि समाप्त्युत्पत्त्या तत्रावच्छेदकतासंबंधेन मंगलविरहेपि स्वजन्यविघ्नध्वंसावच्छेदकतासंबंधेन मंगलसत्त्वेन व्य
भिचाराप्रसक्त्या तदुपादानवैयर्थ्यापत्तेरिति ध्येयम् जन्मांतरीयसमाप्तिमिति न चेष्टापत्तिः तथाशिष्टानामाचारानुभवादिति भावः अत्रेदमव
धेयं मंगलाचरणस्य बहुवित्तव्ययायाससाध्यत्वविरहेण ग्रंथारंभसमयेपि कर्तुं शक्यतया जन्मांतरे ग्रंथकर्तृत्वसामर्थ्यविरहदशायामेतदुपे
क्षणसंभवेन समाप्त्यापत्तिः संभवति नहि कश्चिद्बाविराज्यसम्भावनया स्वल्पवित्तसाध्यं म्लेच्छत्रमावश्यकमज्जीयति ग्रन्थकरणसामर्थ्यस रामः
तेग्रन्थसमाप्तिमुद्दिश्य मंगल[illegible]ग्रन्थग्रहीतिरावश्यकी यतःसमाप्तिरिति यदि चक्र॥ ६

दाचिद्विघ्नभूयस्त्वादिनानसमाप्तिस्तथापिनतत्रजन्मांतरीयसमाप्तेरुद्देश्यताभ्रांत्याऐहिकसमाप्तेरेवोद्देश्यतासंभवादिति अतः स्वप्रतियोगीतिनचावच्छेदकतासंबंधेनसमाप्तिंप्रतीत्येववक्तव्यंकिंस्वप्रतियोगिचरमवर्णावच्छेदकतापर्यंतानुधावनेनेतिवाच्यम् यत्रवर्णोत्पत्तिद्वितीयक्षणेशरीरक्रिययाशरीरस्यैतद्देशाद्विभागः तेनचपूर्वसंयोगनाशः तत्रतच्छरीरावच्छेदेननवर्णनाशःकिंतुशरीराधिकरणवृत्तिप्रभाद्यवच्छेदेनैवेतिनावच्छेदकतायाःकार्यतावच्छेदकसंबंधत्वमंगीकृतं स्वोत्पत्त्यवच्छेदकजातीयत्वेति मंगलावच्छेदकशरीरएवसमाप्तिरितिननियमः अवयवोपचयादिनासमाप्तिसमयेमंगलावच्छेदकशरीरनाशात् अतोजातीयतापर्यंतानुधावनंजातिश्चएकक्षणवृत्तिपदार्थद्वयावृत्तित्वेनविशेषणीयातेनजन्मांतरीयशरीरस्यापिपृथिवीत्वादिनामंगलावच्छेदकशरीरसजातीयत्वेपिनक्षतिः तादृशीचजातिःतत्तत्पुरुषीयतत्तज्जन्मीययावच्छरीरवृत्तिचैत्रत्वादिजातिरेवेतिनोक्तक्षतिः यद्वा स्तुतिरूपमंगलस्यमीमांसकमतेनित्यतयातदवच्छेदकत्वं शरीरस्यनसंभवति किंतुप्राकट्यरूपतदुत्पत्तेरेवेतिमीमांसकमतसंग्रहायैवोत्पत्तिपर्यंतनिवेशनम् यद्यपिस्वावच्छेदकजातीयतेत्युक्तावपिनदोषइत्युत्पत्तिप्रवेशवैयर्थ्यंतथापिविघ्नध्वंसस्याप्यनेनैवसंबंधेनहेतुत्वमितिलाभायैवात्रोत्पत्तिप्रवेशःमंगलस्यानेनसंबंधेनहेतुत्वेविघ्नध्वंसस्याप्यनेनसंबंधेनहेतुत्वमितिलाभसंभवात् विघ्नध्वंसस्यतुकारणतावच्छेदकसंबंधेनोत्पत्तिप्रवेशआवश्यकः अन्यथाजन्मांतरीयसमाप्तेरपिविघ्नध्वंसफलत्वापत्तेरितिमंतव्यम्॥ ॥ ॥ छ

मु॰दि॰ पुत्रकामाधिकरणेति पुत्रकामः पुत्रेष्ट्या यजेतेति विधौ पुत्रकामपदमधिकृत्य यो विचारस्तद्विरोध इत्यर्थः स्वावच्छेदकावच्छिन्नेति आ
रा॰ स्तिकनास्तिकाभ्यां युगपद्यत्र ग्रंथसमाप्तिः कृता तत्र नास्तिकीयसमाप्तेरपि आस्तिकीयमंगलजन्यविघ्नध्वंसाव्यवहितोत्तरक्षणोत्पत्तिक
७ त्वेन तत्पूर्वमुक्तसंबंधेन कार्याधिकरणे मंगलविरहाद्व्यभिचार इत्यतः स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वनिवेशः नास्तिकसमाप्तौ
व्यभिचारवारणाय द्वितीयसंबंधप्रवेशः स्वोत्तरत्वं स्वाधिकरणक्षणध्वंसाधिकरणत्वमेव नातो दृशक्षणोत्पत्तिकत्वं च नास्तिकसमाप्तिसाधा
रणमेवेत्यव्यवधाननिवेशेनैव नास्तिकसमाप्तिर्व्यावर्तनीया तच्चाव्यवधानं यदि स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरण
त्वं तदा आस्तिकीयसमाप्तेरप्यसंग्रहः स्वाधिकरणीभूतविघ्नध्वंसोत्पत्त्यधिकरणक्षणध्वंसाधिकरणतद्द्वितीयक्षणध्वंसानधिकरणत्वस्य

नच पुत्रकामाधिकरणविरोधः सहकार्यंतरासमवधाने नैहिकपुत्राभावेप्यामुष्मिकपुत्ररूपफलस्य तत्र सिद्धांतितत्वादिति वा ।
च्यं तत्र पुत्रमात्रकामनाश्रवणादिहे तु विशिष्टशिष्टाचारानुमितश्रुत्या ऐहिकसमाप्तेरेव मंगलफलत्वात् न च स्वावच्छेदकाव
च्छिन्नप्रतियोगिकत्वस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसंबंधेन मंगलजन्यविघ्नध्वंसविशिष्टसमाप्तित्वस्य मंगलकार्यता
वच्छेदकत्वान्न व्यभिचार इति वाच्यम् कारणस्य कार्यतावच्छेदकत्वानुपगमात्॥ द्वैसमाप्त्युत्पत्तिक्षणे क्वाप्यसंभवात् यदि च स्वध्वं
साधिकरणक्षणध्वंसानधिकरणत्वं तदित्युच्यते तदापि ध्वंसस्य ध्वंसाप्रसिद्ध्या तादृशोभयसंबंधेन ध्वंसविशिष्टाप्रसिद्धिरेव यत्तु स्वाधिकरणतत्क्ष
णध्वंसाधिकरणक्षणध्वंसानधिकरणत्वमेवाव्यवहितत्वं तच्च सर्वत्र तत्क्षणपदेन समाप्त्यव्यवहितपूर्वक्षणव्यक्तिमादाय समाप्तिक्षणे सूपपा
दमेव नास्तिकशरीरे व्यभिचारवारणं तु स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वदलेनैवेति कैश्चित्प्रलपितं तन्न द्र्यं न मतत् आत्मन्युत्पन्नस्य विघ्न
ध्वंसस्य ध्वंसाभावेन तदीयभोगायतनजन्मांतरशरीरावच्छेदेनापि तदात्मनि सत्वस्यावश्यकत्वात् प्रथमदलेन नास्तिकसमाप्तिवारणासंभवात्
अन्यथा जन्मांतरार्जितपुण्यपापादेरपि जन्मांतरीयशरीरावच्छेदेनाऽसत्वापत्त्या तदवच्छेदेन भोगजनकता न स्यात् न च स्वावच्छेदके त्वस्य।
स्वोत्पत्त्यवच्छेदकार्थकत्वात् नोक्तदोष इति वाच्यम् तथा सति आस्तिकीयसमाप्तेरपि स्वोत्पत्त्यवच्छेदकावच्छिन्नप्रतियोगिकत्वाभावेना रामः
संग्रहप्रसंगात् न च स्वोत्पत्त्यवच्छेदकावच्छिन्नप्रतियोगिकत्वस्य च तात्पर्यमिति न कोपि दोष इति वाच्यम् ॥ ७

एवमपिनिरुक्ताव्यवधाननिवेशेप्रयोजनविरहेणातद्देयर्थ्यस्यदुरुद्धरत्वादितिचेत्सत्यंस्वोत्तरजन्मानुत्तरत्वमेवप्रकृतेअव्यवहितत्वंजन्मच
आद्यशरीरप्राणसंयोगःशरीरेआद्यत्वंचस्वसजातीयशरीरध्वंसानधिकरणत्वंजातिश्चपूर्वोक्तैवग्राह्याऽतोनाप्रसिद्धिःएवंचनास्तिकीयस
माप्तेर्विघ्नध्वंसोत्तरजन्मोत्तरक्षणोत्पत्तिकत्वेनाव्यवधाननिवेशात्तद्वारणमव्याहतमेवनचआस्तिकीयसमाप्तेरपिस्वोत्तरपुरुषांतरीयजन्मो
त्तरक्षणोत्पत्तिकत्तयाऽसंग्रहोदुर्वारएवेतिवाच्यम्स्वाश्रयशरीरावच्छिन्नभोगाश्रयत्वदैशिकविशेषणत्वोभयघटितसामानाधिकरण्यसं
बंधेनविघ्नध्वंसविशिष्टत्वेनजन्मनोविशेषणीयत्वात्नचैवमपियादृशग्रंथसमाप्त्यनंतरंग्रंथकर्तुर्मुक्तिस्तादृशसमाप्तेरसंग्रहएवस्वोत्तरस्व

अतएवकाशीमरणान्मुक्तिरितिश्रुत्यन्तर्गतपंचम्याःप्रयोजकत्वपरत्वोपवर्णनंग्रंथकृतांसंगच्छतेअन्यथातत्रापिकाशीमरण
विशिष्टमुक्तिंप्रतिकाशीमरणहेतुत्वस्यनिर्दुष्टतयातथोपवर्णनमसंगतंस्यात्अथतमेवविदित्वाऽतिमृत्युमेतिनान्यःपंथाविद्य
तेयनायेतिश्रुत्यातत्वज्ञानस्यमुक्तिसामान्यंप्रतिहेतुत्वंप्रतिपादितं तच्चकाशीमरणस्यमुक्तिहेतुत्वेनसंभवतिकाशीमरणजन्य
मुक्तौतत्वज्ञानस्यव्यभिचारप्रसंगात्अतःकाशीमरणस्यनमुक्तिजनकत्वमपितुतत्वज्ञानद्वारामुक्तिप्रयोजकत्वमेवेतिग्रंथकृतां
तत्रत्यपंचम्याःप्रयोजकत्वपरत्वोपवर्णनंननुकारणस्यकार्य्यतानवच्छेदकत्वात्तथोपवर्णनमितिचेदस्तुकारणस्यकार्य्यता
वच्छेदकत्वमस्तुचपूर्वोक्तरीत्यामंगलजन्यविघ्नध्वंसविशिष्टसमाप्तित्वस्यकार्य्यतावच्छेदकत्वेननास्तिकशरीरेव्यभिचारवारणम्।

समानाधिकरणजन्माप्रसिद्धेरितिवाच्यम्स्वोत्तरचरमशरीरानुत्तरत्वस्यैवाव्यवधानपदार्थत्वेनांगीकरणीयत्वात्चरमत्वंचस्वसजातीयश
रीरप्रागभावानधिकरणत्वंइत्थंचसमाप्त्युत्तरंमुक्तिस्थलेपिस्वोत्तरचरमशरीरप्रसिद्ध्यानासंग्रहः॥ उत्तरत्वनिवेशनंचयत्रनास्तिकेनमंग
लाचरणंविनैवग्रंथांतरसमाप्तिःकृतातदनंतरंतच्छरीरेणैवास्तिकोभूत्वातदनन्तरजातविघ्नंमङ्गलाचरणेननाशयित्वाग्रन्थान्तरसमाप्तिःकृ
तातत्रत्यपूर्वसमाप्तौव्यभिचारवारणायैवेति कारणस्यकार्यतानवच्छेदकत्वेप्राचांसंमतिमाह अतएवेतिकारणस्यकार्यतावच्छेदक
कोटिप्रवेशांगीकारेपिकाशीमरणान्मुक्तिरित्यत्रपंचम्याःप्रयोजकत्वार्थकत्वोपवर्णनमावश्यकंतथाचकारणस्यकार्यतानवच्छेदकत्वे
नप्राचांसंमतिरित्याशयेनशंकतेअथेति॥

मु·टि· कारणस्य कार्यतावच्छेदककोटिप्रवेशसंभवेपि समाप्तिं प्रति मंगलस्य न हेतुतासंभवः अन्यथासिद्धत्वादित्याशयेन समाधत्ते एवमपीति विघ्न
रा· ध्वंसस्य कार्यतावश्यकतयेति तथाच प्राचीनमते समाप्तौ विघ्नध्वंसे च मंगलकार्यत्वं कल्पनीयमिति गौरवमिति भावः विघ्नो मे निवर्त्ततामिति काम
८ नयेति साऽवधारणो यं निर्देशः अन्यथा विघ्नध्वंसद्वारैव समाप्तेर्मंगलफलतया समाप्तिकामनाधीनविघ्नध्वंसकामनाया अपि मंगलाचरणप्रयोज
कतया विघ्नध्वंसकामनया मंगलाचरणस्य प्रकृतानुपयोगप्रसंगात् अथवा ननूभयोर्मंगलकार्यत्वे गौरवेपि विघ्नध्वंसस्यैव मंगलफलत्वं विघ्नध्वं

एवमपि भोगादिनाश्यविघ्नध्वंसपूर्वकसमाप्तौ व्यभिचारनियतपूर्ववृत्तिताकेन ध्वंसेनैव मंगलस्य लीयसमाप्त्युपपत्तेर्मंगलस्यान्यथा
सिद्धत्वं दुर्वारमेव न च व्यापारिणो नान्यथासिद्धिरिति वाच्यम् यत्र व्यापारिणः प्रमाणबोधितकारणतानिर्वाहाय व्यापारस्य का
रणत्वं कल्प्यते यथा यागस्य स्वर्गहेतुतानिर्वाहार्थमपूर्वं तत्रैव व्यापारेण व्यापारिणो नान्यथासिद्धिः अत एव काशीमरण
स्य तत्त्वज्ञानेन मुक्तावन्यथासिद्धत्वात् प्रयोजकत्वपरतया श्रुतिसमर्थनं संगच्छते प्रकृते च प्रतिबंधकाभावस्य कार्यमात्रहे
तुतया मंगलकारणतां विनापि क्लृप्ततया मंगलस्य अन्यथासिद्धत्वं दुष्परिहरमेवेति विघ्नध्वंसस्य द्वारत्वमिच्छतां प्राचां मतेपि
विघ्नध्वंसस्य कार्यत्वावश्यकतया विघ्नो मे निवर्त्ततामिति कामनया मंगलाचरणेन च विघ्नध्वंस एव फलमिति वदतां चिंतामणि
कृतां मतमाह नव्यास्त्विति विघ्नध्वंस एवेत्येवकारेण समाप्तिव्यवच्छेदः फलं प्रवृत्युद्देश्यं ननु समाप्तिस्तर्ह्याकस्मिकी स्यादत
आह समाप्तिस्त्विति बुद्धिज्ञानं प्रतिभा तद्विशेषः स्फूर्त्यापन्नः प्रतिभादीत्यादिना विघ्नसंसर्गाभावपरिग्रहः अनयैव रीत्या कारी
रीष्टिस्थलेप्यवग्रहनिवृत्तिरेव फलम् वृष्टिस्तु स्वकारणादेवेति बोध्यम्॥ ११ सकामनया मंगलानुष्ठानान्न संभवति यस्य यत्फ

लत्वं तत्कामनया तदनुष्ठाननियमादित्याशंकां निराकुरुते विघ्नो मे निवर्त्ततामित्यादिना ननु विघ्नध्वंस एव मंगलफलमिति मूलोक्तिरयुक्ता
फलपदस्य जन्यार्थकतया मंगलध्वंसस्यापि मंगलजन्यतया एवकारासंगतिरित्याशंकां निराकुर्वन्फलपदं व्याचष्टे फलमिति आकस्मिकी
ति यत्किंचित्कारणानियम्येत्यर्थः नन्वेवं कारीरीयागस्यापि वृष्टिः फलं न स्यात् यागेनावग्रहनिवृत्तौ स्वकारणादेव वृष्टिसंभवादित्याशंका रामः
मिष्टापत्त्या परिहरति अनयैवेति अवग्रहो वृष्टिप्रतिबंधको दुरितविशेषः॥ ८

श्रुतेः कारणताबोधकत्वमिति केषांचिन्मते शाब्दीभावना केषांचिदपूर्वं न्यायमते त्विष्टसाधनत्वं तथा च मंगले विघ्नध्वंसकारणताया बाधितत्वेन शिष्टाचारानुमितायाः विघ्नध्वंसकामो मंगलमाचरेदिति श्रुतेरप्रामाण्यापत्तिः न्यायमते तत्र विधिना मंगले विघ्नध्वंसकारणताया एव प्रत्येतव्यत्वादिति भावः ननु सति विघ्ने तन्नाशस्यैव वेदबोधितत्वादिति मूलमसंगतं स्वर्गकामो यजेतेत्यादिवद्विघ्नध्वंसइत्याद्यवयिवि

एवं मंगलस्य विघ्नध्वंसं प्रति जनकत्वे स्वतःसिद्धविघ्नविरहवतेति विघ्नात्यंताभाववतेत्यर्थः ननु निष्फले प्रवृत्तिरेव कथमत आह विघ्नशंकयेति संशयनिश्चयसाधारणविघ्नज्ञानमेव प्रवर्तकमिति भावः तदाचरणात् मंगलाचरणात् ननु विघ्नसंशये मंगलाचरणमेवासिद्धमित्यत्राह तथैवेति शिष्टाचारादिति विषयतासंबंधेन मंगल इति शेषः ननु निर्विघ्नपुरुषानुष्ठितमंगलस्य लेऽन्वयव्यभिचारेण विघ्नध्वंसं प्रति मंगलस्य कारणता बाधिता तथा च बाधितार्थबोधकत्वाद्वेदस्याप्रामाण्यमिति श्रुतेः

नव्यास्तु मंगलस्य विघ्नध्वंस एव फलम् समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात् न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मंगलस्य निष्फलत्वापत्तिरिति वाच्यम् इष्टापत्तेः विघ्नशंकया तदाचरणात् तथैव शिष्टाचारात् न च तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम् सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेपि न तद्बोधकवेदाप्रामाण्यम् ॥ ११ कारणताबोधकत्वमंगीकर्तुमेतेशंकां निरस्यति

न चेति तस्य निर्विघ्नपुरुषानुष्ठितमंगलस्य तद्बोधकेति मंगलविघ्नध्वंसयोः कार्यकारणभावबोधकेत्यर्थः सति विघ्न इति तथा चोपदर्शितस्थले प्रतियोगिरूपकारणाभावेन विघ्नध्वंसरूपकार्यानुदयोपपत्तौ कारणतायाः अबाधितत्वेन न कारणताबोधकवेदाप्रामाण्यमिति भावः अत एव नाशं प्रति प्रतियोगिनः कारणत्वादेव तद्बोधकवेदाप्रामाण्यमिति प्रायश्चित्तस्य पापनाशकत्वबोधकवेदाप्रामाण्यमित्यर्थः ॥ ११ घ्नध्वंसकारणत्वमेव विध्यर्थो वाच्यः ननु सति विघ्न इत्यपि तद्बोधकपदाभावात् अतस्तन्मूलतात्पर्येमाह तथा चेति सति विघ्ने इति मूले मंगलादिति शेषः तथा च केवलदंडाद्घटानुत्पत्तावपि दंडो घटकारणमिति वाक्यस्य नाप्रामाण्यं सर्वदा दंडे घटाव्यवहितपूर्वत्वस्य तात्पर्याविषयत्वात् किंतु दंडेतरयावद्घटकारणसत्वे दंडे घटाव्यवहितपूर्वत्वमेव तात्पर्यविषयस्तद्वत्प्रकृतेपीति मूलाशयः ॥ १ ॥

मु॰टि॰ शमंयांतीत्यादिनेति आदिनागणेशस्तवपाठतइत्युसंग्रहः स्तवपाठस्यविघ्नध्वंसकारणतायास्तादृशवाक्यबोधितत्वेपिपाठजन्यविघ्नध्वं
ए॰ सेमंगलस्यव्यभिचारोदुर्घटएवस्तुतिरूपमंगलस्यपाठकत्तासंबंधेनकार्योधिकरणवृत्तेरित्यर्थः स्थलांतरेव्यभिचारंदर्शयति प्रायश्चि
९ त्तजन्येतिविशेषपदार्थमेवप्रकटयन्नाहतथाचेतिलाघवादाहविजातीयेतिप्रवृत्तिर्नस्यादितियद्वियस्यफलंभवतितत्कामस्यैवतत्रप्रवृ

ननुमंगलंनविघ्नध्वंसेकारणंविनायकस्तवपाठादिजन्यविघ्नध्वंसेव्यभिचारात् विनायकस्तवस्यमंगलत्वेपितद्नुकूलकंठता
ल्वभिघातरूपस्यतत्पाठस्यमंगलत्वाभावात्नचपाठकत्तासंबंधेनविनायकस्तवपाठएवविघ्ननाशकः सचमंगलमेवेतिनव्य
भिचारइतिवाच्यम् सर्वेविघ्नाःशमंयांतीत्यादिनातत्पाठस्यापिविघ्ननाशकत्वबोधनात् प्रायश्चित्तजन्येविघ्नध्वंसेव्यभिचाराच्चे
त्यतआह मंगलंचेतिस्तवपाठादिरित्यादिनाप्रायश्चित्तपरिग्रहःतथाचमंगलस्यस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबंधेन
मंगलविशिष्टविघ्नध्वंसत्वंविजातीयविघ्नध्वंसत्वंवाकार्यतावच्छेदकम् एवंविनायकस्तवपाठादेरुपदर्शितसंबंधेनविनाय

मंगलंचविघ्नध्वंसविशेषेकारणम् विघ्नध्वंसविशेषेचविनायकस्तवपाठादिः क्वचिच्चविघ्नात्यंताभावएवसमा
प्तिसाधनम् प्रतिबंधकसंसर्गाभावस्यैवकार्यजनकत्वात्॥ ११ कस्तवपाठादिविशिष्टविघ्नध्वंसत्वंविजातीयविघ्न

ध्वंसत्वंवाकार्यतावच्छेदकमितिनव्यभिचारइतिभावः ननुविघ्नध्वंसएवयदिमंगलस्यफलंतदासमाप्तिकामस्यमंगलेप्रवृ
त्तिर्नस्यादतःसमाप्तिसाधनविघ्नध्वंससाधनत्वान्मंगलेप्रवृत्तिर्वाच्यातच्चसंभवतिस्वतःसिद्धविघ्नविरहस्थलेव्यभिचारे
णविघ्नध्वंसस्यसमाप्तिसाधनत्वाभावादितिशंकांनिरस्यतिक्वचिदितिनन्वेवमननुगमोतोनुगतेनरूपेणकारणत्वेबीजमाह
प्रतिबंधकेतिसंसर्गाभावस्यसंसर्गाभावत्वेनसंसर्गाभावस्यतथाचविघ्नसंसर्गाभावत्वेनहेतुत्वान्नपूर्वोक्तव्यभिचारइतिभा
तिनियमादितिभावः प्रवृत्तिर्वाच्येतिसमाप्तिकामस्यसमाप्तिसाधनेपाकेप्रवृत्तिरिवेतिशेषः व्यभिचारेणेतिव्यतिरेकव्यभिचारेणेत्यर्थः संसर्गा
भावत्वेनसंसर्गाभावस्येतिसंसर्गाभावत्वेनसंसर्गाभावत्वावच्छिन्नस्येतिपर्यवसितार्थःइदंचविवरणंसंसर्गाभावस्यध्वंसत्वादिनाकार रामः
णत्वेपिनव्यभि[illegible]यथाश्रुतमूलवाक्यस्योक्तशंकाअनिरासकत्वादितिबोध्यम्॥ ९

ननुतत्तद्विघ्नाभावानांयदिविघ्नसंसर्गाभावत्वेनहेतुतातदायत्किंचिद्विघ्नसत्त्वेविघ्नप्रतियोगिकसंसर्गाभावस्यसत्त्वेनसमाप्त्यापत्तिः यदिवि
घ्नत्वावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेनहेतुतातदाध्वंसप्रागभावयोर्नहेतुतातयोस्सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानंगीकारात्
यदिचविघ्नप्रतियोगिकसंसर्गाभावकूटत्वेनहेतुतातदाक्वापिसमाप्तिर्नस्यात्ध्वंसप्रागभावादीनामेकदाएकत्रासत्त्वेनकूटाधिकरणत्वस्यकदाप्य
संभवादित्याशंकांपरिहर्तुमाह अत्रचेति नत्तद्विघ्नाभावत्वेनेति तत्तद्विघ्नप्रतियोगिकसंसर्गाभावत्वेनेत्यर्थः तेनभेदमादायनविघ्नसत्त्वेपिसमा
प्त्यापत्तिः नचैवमपिविघ्नसत्त्वेसमाप्त्यापत्तिर्दुर्वारा तत्तद्विघ्नव्यक्तेरपिद्वित्वादिनाऽत्यंताभावरूपसंसर्गाभावसत्त्वादितिवाच्यंतत्तद्विघ्नत्वेतरधर्मानव
च्छिन्नतत्तद्विघ्ननिष्ठप्रतियोगिताकसंसर्गाभावत्वेनेत्यर्थविवक्षयोक्तदोषप्रतीकारसंभवात् ध्वंसप्रागभावयोरपिविशेषधर्मावच्छिन्नप्रतियोगि

अत्रचतत्तद्विघ्नाभावत्वेनहेतुतानतुविघ्नाभावकूटत्वेनविघ्नप्रागभावादीनामेकत्रासंभवेनसमाप्तिर्नस्यादितिबोध्यम् यत्रचमंगल
लंविनापिसमाप्तिस्तत्रविघ्नध्वंसाभाववतिसमाप्तेर्दर्शनाद्व्यतिरेकव्यभिचारमाशंक्यनिषेधति॥ इत्थंचेति दुरितध्वंसकल्पनेत

इत्थंचनास्तिकादीनांग्रंथेषुजन्मांतरीयमंगलजन्यदुरितध्वंसः स्वतःसिद्धविघ्नात्यंताभावोवास्तीतिनव्यभिचार इ
त्याहुः॥

ज्जनकीभूतमंगलकल्पनेचगौरवादाह स्वतःसिद्धेति यत्रचमंगलेसत्यपिनसमाप्तिस्तत्रमंगलाद्विघ्नध्वंसोभवत्येव ११
समाप्त्यभावस्तुविघ्नभूयस्त्वात्तन्मंगलानंतरोत्पन्नाद्विघ्नाद्वेत्यवधेयम्॥ ११ ताकत्वांगीकारेतुतत्तद्विघ्नत्वावच्छिन्नप्रतियोगिता
कसंसर्गाभावत्वेनेत्यर्थकरणेपिनक्षतिरिति मंतव्यंविघ्नध्वंसाभाववतीति विघ्नसंसर्गाभावसामान्याभाववतीत्यर्थः अन्यथायथाश्रुतेविघ्न
ध्वंसाभाववत्यपिविघ्नात्यंताभावसंभवेनविघ्नसंसर्गाभावत्वेनहेतुत्वेव्यतिरेकव्यभिचारासंभवेनाऽसंलग्नकतापत्तेः तथाचयत्रमंगलंवि
नैवसमाप्तिस्तत्रविघ्ननाशकमंगलासत्त्वेनविघ्नस्यव्यतिरेकव्यभिचारोदुर्वारएवेतिभावः ननुयत्रसत्यपिमंगलेनसमाप्तिर्दृश्यतेतत्रमंगलाद्विघ्न
ध्वंसएवनजातइत्यवश्यमंगीकरणीयं अन्यथातत्तद्विघ्नसंसर्गाभावानांसत्त्वेनसमाप्तिविरहस्योपपादयितुमशक्यत्वात्तथाचान्वयव्यभिचारेणमंग
लस्यविघ्नध्वंसफलकत्वंनशक्यतेवक्तुमित्याशंकांनिराकुरुतेयत्रचेति विघ्नभूयस्त्वादितिनतुमंगलादनंतरोत्पन्नविघ्नाद्पितत्रसमाप्त्यभावसंभ
वेननानाविघ्नव्यक्तीनांतत्कारणीभूतप्रागभावादीनांचकल्पनेगौरवमतस्तथैवाह मंगलानंतरेति॥
इष्टापत्त्या१

मु॰दि॰ स्वप्रतियोगिप्रयोजकत्वेतिस्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबंधेनेत्यर्थः नचस्वप्रयोजकत्वसंबंधेनेत्येवकुतोनोक्तंजीवात्मनिस्वा
रा॰ नुकूलकृतिमत्त्वासंभवेपिस्वजनकचरमवर्णजनककृतिजनकत्वरूपस्यस्वप्रयोजकत्वस्यजीवात्मनिसंभवादितिवाच्यंनिरुक्तप्रयोजकत्वस्यना
१० नाजनकताघटितत्वेनगौरवादितिभावः क्वचिच्चेत्यादिप्रकरणांतरेणव्याचष्टे वस्तुतस्त्वित्यादिना समाप्तिसाधनमित्यस्यसमाप्तिकारणमि
त्यर्थकत्वेक्वचिदित्यस्यासंगतिः तत्तद्विघ्नसंसर्गाभावत्वेनहेतुतायाव्यवस्थापिततयासर्वत्रैवाभावत्रयस्यापिकारणत्वात् नियतपूर्ववर्तितावि
च्छेदकधर्मवत्त्वस्यैवकारणतारूपत्वात् तत्तात्पर्यं व्याचष्टे समाप्त्यव्यवहितेति ननुमंगलाद्विघ्नध्वंसस्यले ध्वंसप्रागभावाभ्यामत्यंताभाव
स्यविरोधात् विघ्नात्यंताभावस्यैवासत्त्वेनकथंतेनविघ्नध्वंसस्यान्यथासिद्धिरित्यत आह ध्वंसप्रागभावेत्यादि अन्योन्याभावभिन्नाभावत्वे

अथसमाप्तिविघ्नध्वंसयोराकाशात्मनिष्ठयोः कथंकार्यकारणभावइतिचेदुच्यते स्वप्रतियोगिप्रयोजकत्वसंबंधेनचरम॰
वर्णध्वंसरूपसमाप्तिं प्रतिविशेषणतासंबंधेनविघ्नसंसर्गाभावत्वेनहेतुत्वमिति वस्तुतस्तु आहुरित्यनेनसूचितामन्य
थासिद्धिंप्रकटयति क्वचिच्चेति विघ्नात्यंताभावएवेत्येवकारेणविघ्नध्वंसस्यतद्द्वारकमंगलस्यचव्यवच्छेदः समाप्ति
साधनंसमाप्त्यव्यवहितपूर्ववर्तितयानिश्चितः तथाचतेनैवमंगलस्यलोपसमाप्तिनिर्वाहेमंगलस्यतज्जन्यविघ्न
ध्वंसस्यचान्यथासिद्धिः ध्वंसप्रागभावयोरत्यंताभावेनविरोधेमानाभावात् ॥

९ नेति सर्वत्रविघ्नात्यंताभावसत्त्वेपिनवि
घ्नात्यंताभावत्वेनहेतुतासंभवतिविघ्नसंसर्गाभावत्वापेक्षयानित्यत्वघटितस्यतस्यगुरुत्वात् सतिचलघुधर्मेगुरुधर्मस्यकारणता॰
वच्छेदकत्वानंगीकारात् तथाचायातमेवत्रयाणामपिकारणत्वमितिभावः तत्तत्संसर्गेति॰ प्रतिबंधकतावच्छेदकसंसर्गेत्यर्थः॰
वाच्यत्वेनेति तथाचप्रतिबंधकसंसर्गाभावस्येतिमूलस्यप्रतिबंधकतावच्छेदकसंसर्गावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थइति
भावः मानाभावादितिसमवायेनघटाधिकरणेसंयोगेनघटोनास्तिसंयोगेनघटाधिकरणेसमवायेनघटोनास्तीतिप्रतीत्युपपत्तये॰
हिसंयोगसमवायसंबंधावच्छिन्नघटाभावयोर्भेदोपपत्तये अत्यंताभावप्रतियोगितायांसंबंधावच्छिन्नत्वमंगीक्रियतेध्वंसेचतादृ॰ राम॰
शत्वासंभवेनसंसर्गावच्छिन्नप्रतियोगिताकत्वस्याभावप्रतियोगिताकत्वेति भावः ॥ ९ ॥ १०

नन्वेवंविघ्नध्वंसस्याकारणत्वेदुरितध्वंसःस्वतःसिद्धविघ्नात्यंताभावोवेत्याद्यग्रिमग्रंथासंगतिरित्यतोदुरितध्वंसपदंव्याचष्टेदुरितध्वं
ससामग्रीति अत्यंताभावस्यनित्यत्वेपिप्रतियोगिसत्वदशायामत्यंताभावसंबंधासत्वेनाधिकरणासंबंधात्यंताभावेदुरितध्वंससामग्री
प्रयुक्तत्वमितिभावः द्वितीयव्याख्यानादरणेस्वयमेववीजंप्रकटयति एतेनेति ननुमंगलस्यविघ्नध्वंसफलकत्वेसमाप्तिकामनयात
त्रप्रवृत्तिःसमाप्तिजनकविघ्नध्वंसजनकत्वेनैवोपपादनीया॥विघ्नध्वंसस्यसमाप्तिहेतुत्वंचव्यभिचारेणासंभवदुक्तिकमित्याशंका॥

ध्वंसस्यलेपि अत्यंताभावसत्वादितिभावः नन्वन्योन्याभावभिन्नाभावत्वेनैवलाघवाद्धेतुतास्त्वत आह
प्रतिबंधकसंसर्गेति प्रतिवंधकसत्वेपिसंवंधांतरावच्छिन्नाभावस्यसत्वात्कार्योत्पत्तिवारणायतत्तत्संसर्गा
वच्छिन्नप्रतियोगिताकाभावत्वेनैवहेतुत्वस्यवाच्यत्वेननध्वंसस्यहेतुता तस्यसंसर्गावच्छिन्नत्वेमानाभावा
दितिभावः दुरितध्वंसः दुरितध्वंससामग्रीप्रयुक्तःस्वतःसिद्धोदुरितकारणाभावप्रयुक्तः एतेनविघ्नध्वंसस्यत
दत्यंताभावस्यवासमाप्तिहेतुताविचारस्याप्रकृततयातद्व्यवस्थापनेप्रकृतानुपयोगः एवंप्रतिवंधकाभाव
कूटस्यहेतुत्वेऽतीतानागतप्रागभावध्वंसयोर्युगपदवस्थानासंभवेनैकदाकूटाप्रसिद्धिः पूर्वोक्तरीत्यातत्त
त्संसर्गावच्छिन्नप्रतियोगिताकत्वस्यप्रतिवंधकाभावविशेषणत्वेध्वंसप्रागभावयोरसंग्रहश्चेतिदूषणानि
निरस्तानि उक्तरीत्याप्रतिवंधकात्यंताभावस्यैवकार्यमात्रेहेतुत्वादिति॥ ९ ॥ ९ ॥ ९ ॥ ९ ॥

यांककश्चिच्चेत्यादिग्रंथस्यावतारितत्वेननप्रकृतानुपयोगइत्यतोदूषणांतरमाह एवमिति ननुप्रतिवंधकसंसर्गाभावकूटत्वेननहेतुता
मंगीक्रुर्मोयेनाप्रसिद्धिःस्यात् अपितुनत्तद्विघ्नसंसर्गाभावत्वेनेत्युक्तमेवेत्याशंक्यदूषणांतरमाह पूर्वोक्तेति द्वितीयव्याख्यानेपितत्तद्दोष
निवारणेहेतुमाह उक्तरीत्येति प्रतिवंधकाभावस्येतिप्रतिवंधकतावच्छेदकसंवंधावच्छिन्नप्रतियोगिताकतत्तत्प्रतिवंधकाभावत्वेनेत्यर्थः

यत्तदोर्नित्यसंबंधात्प्रकृतश्लोके यत्पदाभावात्कथंसंगतिरितिहृद्याशंक्य प्रकृते तच्छब्दस्य प्रसिद्धार्थकतया न यत्पदार्थापेक्षेतिसमा धत्ते यच्छब्द इति· नमस्कारप्रकारीभूतेतिस्वापकर्षबोधानुकूलव्यापारो नमःशब्दार्थः अपकर्षान्वय्यवधित्वं तत्स्यपदोत्तरचतुर्थ्यर्थ इति भावः यद्यप्यवधित्वस्यापादानतारूपतया तदर्थिका पंचम्येव न तु चतुर्थी तथापि क्रियान्वय्यवधित्वस्यैवा·पादानरूपतया नात्र पंचमीप्र सक्तिः परंतु निरुक्तापकर्षावधित्वविवक्षायां नमः स्वस्तीत्यादिसूत्रेण चतुर्थ्येव विहितेतिभावः एवंच श्रीकृष्णावधिकस्वापकर्षबोधानु कूलो मदीयो व्यापार इत्युक्तबोधः उच्चारयितृव्यापारस्यैव नमश्शब्दार्थत्वात् यद्यप्येवं सतिनारायणंनमस्कृत्येत्यादावपिनारायणपदोत्तर

मूलेनूतनेत्यादिनूतनो यो जलधरो मेघस्तस्य रुचिरिव रुचिर्यस्य तस्मै एतेन यथा नूतनजलधरः शीघ्रं वृष्टिप्रदस्तथायम पिस्वाभिलषितफलप्रद इतिसूचितम् नमस्कार्यस्य भगवतः संतुष्टतां सूचयितुमाह मूलेगोपेति गोपानां वध्वः स्नुषाः युवत्यः। स्त्रियस्तासां दुकूलानि वस्त्राणि तेषां चौरायेत्यर्थः तस्मा इति तच्छब्दः सामान्यतः सकलजनप्रसिद्धत्वसूचनाय श्रीकृष्णा

संसारमहीरुहस्य बीजाय इति संसारस्य व महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः ॥ ९ ॥

यन्नम इत्यनेन भगवतो नमस्कारप्रकारीभूतापकर्षावधित्वमुक्तं तद्युक्तं भगवति मानाभावादित्याशंक्य नैयायिकाभिमतेनेश्व रसाधकानुमानसूचनायाह संसारेति संसारस्य महीरुह इति षष्ठीतत्पुरुषभ्रमं व्यावर्तयितुं कर्मधारयमाह मुक्तावल्यां संसारए १२ वेति॥

चतुर्थ्येवापेक्षिता न द्वितीया करोतिकर्मत्वस्य नारायणेऽसंभवेन नमः पदार्थस्यैव तत्कर्मत्तया नमःपदार्थघटकापकर्षाव धित्वस्यैव द्वितीयया बोधनीयत्वात् तथापि नत्र लक्षणया नमस्कारानुकूलकृतिं पर्यंतं करोत्यर्थः नमःपरं तात्पर्यग्राहकमतो नमः पद्यो गाभावान्न चतुर्थी अपकर्षावधिनिरूपितापकर्षनिष्ठप्रकारतानिरूपितावधित्वनिष्ठप्रकारतानिरूपितप्रकारितारूपा विषयतैव द्वितीया र्थः अतएव नमःपदस्य सार्थकत्वविवक्षायां संभवे नमस्कृत्य ब्रह्मणे ऽमिततेजस इत्यादौ चतुर्थ्येव न द्वितीयेति मंतव्यं षष्ठीतत्पुरुषभ्रम इवि सकलप्रपंचहेतोरीश्वरस्य महीरुहबीजत्वमात्रकथनस्यानुचितत्वेन षष्ठीतत्पुरुषस्य भ्रममूलकत्वमितिभावः ॥ ९ ॥ ॥

समवायिकारणमिति वृक्षादिसमवायिकारणत्ववद्वृक्षादेर्बीजव्यवहारादितिभावः यद्यपिबीजंवृक्षादेर्नसमवायिकारणंबीजनाशानंतरमेवतत्स्वयमवैरंकुरारंभात् तथापिसमवायिकारणत्वमपिसमवायिकारणावयवकत्वमेवविवक्षितमतोनासंगतिः ईश्वरेपूर्वोक्तप्रमाणाभावमेवव्युत्पादयन्नाह नहीति लिंगाभावादिति ईश्वरसाधकलिंगाभावादित्यर्थः उपमानस्यशक्तिमात्रसाधकत्वेनतन्निराकरणंनकृतमित्यवधेयम् तथाक्षित्यंकुरादिकमपीतिमूलेक्षित्यंकुरादीनांपक्षत्वंसूचितंक्षित्यंकुरादावनुगतंपक्षतावच्छेदकंकिमि

बीजत्वंसमवायिकारणत्वंतच्चेश्वरेबाधितमत आह निमित्तेति नन्वीश्वरेनमस्काररूपंमंगलाचरणमयुक्तंईश्वरेमानाभावात्नहितत्रप्रत्यक्षंप्रमाणमरूपिद्रव्यत्वेनबाह्यप्रत्यक्षाविषयत्वात् नापिमानसंपरात्मनःपरेणमनसाप्रत्यक्षवारणायात्मप्रत्यक्षंप्रतिपरात्मव्यावृत्तविजातीयात्ममनःसंयोगत्वेनहेतुत्वस्यावश्यकतयाईश्वरेतस्याभावात् नचद्यावाभू

एतेनईश्वरेप्रमाणंदर्शितंभवतितथाहि यथाघटादिकार्यंकर्तृजन्यंतथाक्षित्यंकुरादिकम पिनचतत्कर्तृत्वमस्मदादीनांसंभवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः॥

मीजनयन्नित्यादिश्रुतिरेवप्रमाणंश्रुतीनामीश्वरोच्चरितत्वेनप्रामाण्यादीश्वरसंदेहेश्रुतिप्रामाण्यस्यापिसंदिग्धत्वात्अत आहएतेनेतिप्रमाणमनुमानरूपंप्रमाणम् तथाक्षित्यंकुरादिकमपीति नन्वत्रकिंपक्षतावच्छेदकंनतावत्क्षितित्वं अंकुरादेरपिक्षितित्वेनपृथक्तदुपादानवैयर्थ्यात् किंचक्षितित्वसामानाधिकरण्येनसाध्यसिद्धेरुद्देश्यत्वेदृष्टांतेघटादौ अंशतःसिद्धसाधनम्॥ इत्याशंकतेनन्वत्रेति अंकुरादेरपीति तथाचक्षितित्वस्यैवपक्षतावच्छेदकत्वेअंकुरस्यापिक्षितित्वेनांकुरादेःपृथगुपादानमनर्थकमितिभावः नन्वत्रक्षितिपदंनपृथिवीत्वजात्यवच्छिन्नपरंयेनांकुरादेरुपादानंव्यर्थंस्यात् अपितुभूमंडलपरमेवतथाचभूमंडलांकुरादीनांसर्वेषांपक्षत्वलाभेसर्वानुगतंपक्षतावच्छेदकंकिमित्याशंकायांपृथिवीत्वमेवतथेत्युक्तौनांकुरादेःपृथगुपादानवैयर्थ्यमत आहकिंचेति॥

का० मु० दि० रा० १२

अवच्छेदकावच्छेदेनेति तथात्वेसाध्यसिद्धेरुद्देश्यत्वेइत्यर्थः तथाचावच्छेदकावच्छेदेनानुमितौसामानाधिकरण्येनसाध्यसिद्धेरप्रतिबंधकतयानसिद्धसाधनमितिभावः परमते चार्वाकमतइत्यर्थः जन्यपदेति तैरप्रत्यक्षत्वेननित्यपृथिव्यनंगीकारादितिभावः ननुपक्षतावच्छेदककोटिप्रविष्टविशेषणानांसर्वमतेनप्रयोजनमपेक्षितमितिनियमस्तथाचनित्यपृथिव्यांवाधवारकतयैवजन्यपदंसार्थकमित्यतआहजन्यत्वस्यैवेतिनन्वस्तुजन्यत्वमेवपक्षतावच्छेदकंकिंनः छिन्नमतआहतदपीतिऐक्यप्रसंगात् ननुपक्षतावच्छेदकहेत्वोरैक्येकोदोषः नचव्याप्तिग्रहदशायामेवपक्षतावच्छेदकीभूतहेतौसाध्यसामानाधिकरण्यसिद्धेनसिद्धसाधनमेवदोषइतिवाच्यम् हेतुःसाध्यसमानाधिकरणइतिव्याप्तिग्रहस्यहेतुमान्साध्यवानित्यनुमितितोभिन्नाकारत्वात् समानाकारकसिद्धेरेवानुमितिप्रतिबंधकत्वात् अवच्छेदकावच्छेदेनसाध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्यमात्रावगाहि सिद्धेरप्रतिबंधकत्वात् यद्यप्यवच्छेदकावच्छेदेन अनुमितौसामानाधिकरण्याव॰ धिकं पक्षतावच्छेदकव्यापकत्वमेव

अवच्छेदकावच्छेदेनतथात्वेपरमाणौवाधः जन्यक्षितित्वपक्षतावच्छेदकत्वेपरमतेजन्यपदव्यावृत्त्यसिद्धिस्तन्म वर्त्यां
तेऽजन्यक्षितेरभावात् जन्यत्वस्यैवतथात्वसंभवेनपक्षतावच्छेदककोटौक्षितित्वस्यव्यर्थत्वाच्च नचतदपिसंभ
वतिपक्षतावच्छेदकहेत्वोरैक्यप्रसंगादिति चेन्न स्वरूपसंबंधविशेषरूपकार्यत्वस्यैवपक्षतावच्छेदकत्वात् ॥ ॥

साध्येभासनेव्याप्तिज्ञानेपिसाध्येहेतुव्यापकत्वंभासतेएवेतितुल्यंतथापिव्याप्तिग्रहेव्यापकत्वंप्रकारतयैवानुमितौतुसाध्योपसंसर्गघटकतयाभासतइतिभेदाच्चेतिचेन्नउद्देश्यतावच्छेदकविधेययोरैक्येनोपनयवाक्याच्छाब्दबोधानुपपत्तेरेवदोषत्वात्नचनवीनमतेविधेयांशेऽधिकावगाहिनःशाब्दबोधस्योपगमेनपक्षतावच्छेदकहेत्वोरैक्येपिसाध्यव्याप्यहेतुमान्पक्षइत्याकारकस्योपनयजन्यशाब्दबोधस्यनाऽनुपपत्तिरितिवाच्यम् प्राचीनैरुदाहरणवाक्यादेवव्याप्तिलाभादुपनयेनापितत्प्रतिपादनेपौनरुक्त्यमितिपक्षेहेतुमत्तामात्रमेवोपनयेनबोधनीयम् तथाचायमित्युपनयवाक्यस्यहेतुमान्पक्षइत्येवार्थइत्यंगीकारात्तन्मतानुसारेणैवपक्षतावच्छेदकहेत्वोरैक्यादितिदूषणाभिधानादितिध्येयम् स्वरूपसंबंधरूपेति यद्यपिस्वरूपसंबंधरूपवाक्यतात्वक्तीनांततद्व्यक्तिमात्रपर्यवसन्नत्वेननानुगतपक्षतावच्छेदकलाभस्त रा० म० १२
यायंतत्तद्व्यक्तित्वेनानुगमीकृतानां पक्षतावच्छेदकत्वमिति भावः ॥

प्रागभावप्रतियोगित्वेति॰ नचप्रतियोगित्वस्यापिस्वरूपसंबंधस्वरूपतयातत्तद्धर्मव्यक्तीनामैक्येनपक्षतावच्छेदकहेत्वोरैक्यापरिहारइतिवाच्
म्॥ अभावविरहात्मत्वंवस्तुनःप्रतियोगितेत्याचार्यमताभिप्रायानुसारेणसंयोगेनघटाभावात्समवायेनघटाभावस्यभेदःप्रतियोगिताभेदादेव
समर्थनीयःप्रतियोगिप्रतियोगितावच्छेदकयोरैक्यात् स्वरूपसंबंधरूपप्रतियोगितायाःप्रतियोगिघटव्यक्तेश्चैक्येनभेदोदुरुपपादएवेति
तयोर्भेदोनस्यादतोविषयत्वस्येवप्रतियोगित्वस्यापिपदार्थांतरत्वमेवांगीकरणीयंसप्तपदार्थविभागस्तुतत्वज्ञानोपयोगिज्ञानविषयाणामे
वेतिनतद्विरोधोपीतिनवीनमताभिप्रायेणैतदभिधानम्वस्तुतस्तुप्रागभावप्रतियोगित्वरूपकार्यत्वस्यहेतुत्वादिग्रंथस्यप्रतियोगिता
स्वरूपसंबंधेनप्रागभावस्यहेतुत्वादित्यर्थेतात्पर्यान्नकोपिदोषइतिध्येयंवस्तुतस्तुक्षित्यंकुरादिकमितिमूलस्यक्षितित्वस्यांकुरत्वस्यतद्वयि
तपक्षतावच्छेदकत्वेतात्पर्यं तत्रक्षितिस्सकर्तृकेतिप्रथमप्रयोगेक्षितित्वसामानाधिकरण्येनसाध्यसिद्धेरुद्देश्यत्वेघटादावंशतःसिद्धसाध
प्रागभावप्रतियोगित्वरूपकार्यत्वस्यैवहेतुत्वेनतयोरैक्याभावात् साध्यंचनस्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृ

नचशरीराजन्यत्वेनकर्त्रजन्यत्वसाधकेनसत्प्रतिपक्षइतिवाच्यम्॥

तिजन्यत्वंकार्यमात्रंप्रतिकृतेरेवान्वयव्यतिरेकाभ्यांहेतुत्वेनतज्जनकज्ञानचिकीर्षयोस्तत्रान्यथासिद्धत्वेनतत्त्रितयज
न्यत्वरूपसाध्यस्य॰॥ ११ नंपक्षतावच्छेदकावच्छेदेनतथात्वेतुपरमाणोवाधइत्यतोऽङ्कुरत्वस्यपक्षतावच्छेदकत्वानुधावनंतत्रचसा
मानाधिकरण्येनसाध्यसिद्धेरुद्देश्यत्वेक्वाप्यंकुरेजीवीयकृतिसाध्यत्वाभावेननांशतःसिद्धसाधनंनवाबाधोनित्यांकुरस्याभावादितिभावःनन्वक्षि
तित्वावच्छेदेनांकुरत्वावच्छेदेनवाकार्यत्वहेतुनासकर्तृकत्वानुमितिर्नसंभवतिकार्यत्वरूपहेतोरप्रयोजकत्वात् नचकार्यत्वंयदिकृतिजन्यत्वव्य
भिचारिस्यात्तदाकृतिजन्यतावच्छेदकंनस्यादित्यनुकूलतर्कसत्वान्नाऽप्रयोजकत्वमितिवाच्यम्कृतित्वेनकार्यत्वेनकार्यकारणभावेमानाभावेनो
क्ततर्कानवतारात् नचान्वयव्यतिरेकावेवमानमितिवाच्यम्कुलालकृतिसत्वेघटस्तदभावेघटाभावइतिविशिष्यैवान्वयव्यतिरेकग्रहात् तंतुवाय
कृतिकालेघटापत्तिवारणायकुलालकृतित्वेनघटत्वेनविशिष्यकार्यकारणभावस्यावश्यकत्वेनसामान्यतःकृतित्वेनकार्यत्वेनकार्यकारणभावेमाना
भावात् नचयद्विशेषयोरितिनियमस्त्वमानमितिवाच्यम् तस्याप्यप्रयोजकत्वात् नचकार्यसामान्याभावेकुलाला॰॥ ५ ॥ ५ ॥ ५ ॥

दिकृत्यभावकूटस्यप्रयोजकत्वेगौरवंकृतित्वावच्छिन्नाभावस्यैकस्यतथात्वेलाघवम् तच्चकृतित्वस्यकारणतावच्छेदकत्वमन्तरानसम्भव
तिकारणतावच्छेदकधर्मावच्छिन्नाभावस्यैवकार्य्यतावच्छेदकधर्मावच्छिन्नाभावप्रयोजकत्वात् तथाचलाघवमूलकएवयद्विशेषयो
रित्यादिन्यायइतिवाच्यम् कारणतावच्छेदकधर्मावच्छिन्नाभावएवकार्याभावेप्रयोजकइतिननियमः किंतुस्वरूपसंबंधरूपप्रयोज
कत्वप्रतीत्यनुरोधेनलघ्वनतिप्रसक्तधर्मावच्छेदेनकल्प्यतइतिनियमः तथाचलाघवादेवकारणतानवच्छेदककृतित्वावच्छिन्नप्रतियो
गिताकैकाभावस्यकार्याभावप्रयोजकत्वंकृतित्वेनकार्यत्वेनकार्यकारणभावमंतरापिसूपपादनमेवेतितत्रप्रमाणाभावएवेत्यभिप्रेत्यादि
पदमुपात्तंतेनसर्गाद्यकालीनघटनिष्ठतद्व्यक्तित्वस्योपसंग्रहात्तद्व्यक्तौकुलालकृतिजन्यत्वस्यसाधनीयत्वात्कुलालकृतित्वेनघटत्वेनका
र्यकारणभावसत्वेनतत्राप्रयोजकत्वशंकाविरहादितिभावः नचैवमीश्वरस्यकुलालत्वापत्तिरितिवाच्यम् घटकरणसमर्थस्यैवकुलाल
त्वेनेश्वरेतस्येष्टत्वात् अतएवनमःकुलालेभ्यःकुम्भकारेभ्यश्चेत्यादिश्रुतिरपिसंगच्छते यदिचसर्गाद्यस्यविवादग्रस्तत्वेनसर्गाद्यकाली
नस्यघटस्यपक्षत्वेपक्षासिद्धिरितिमन्यते तदाखंडघटएववादिपदार्थः तत्पूर्वमपिकुलालकृतत्वसत्वेननतत्पक्षकानुमानेनेश्वरसिद्धेराव
श्यकत्वादितियुक्तमुत्पश्यामः व्यक्तीभविष्यतिचेदमुपरिष्टात् ननुसकर्तृकत्वंकर्तृजन्यत्वमेववाच्यम् तच्चनसंभवतिकर्तुर्जनकत्वेऽनंतकृ
तिव्यक्तीनांकारणतावच्छेदकत्वापत्त्यागौरवात् लाघवेनस्वरूपतःकृतित्वजातेरेवकारणतावच्छेदकत्वादित्याशंकांनिराकुर्वन्प्राचीन
मतनिराकरणपूर्वकंस्वमतेनसकर्तृकत्वंनिर्वक्तुमारभते साध्यं चेति नित्यज्ञानेच्छाकृतिमानेवेश्वरःसकर्तृकत्वानुमानेनसाधनी
यः अन्यथाईश्वरेनित्यज्ञानेच्छयोरसिद्धिप्रसंगादतःसकर्तृकत्वमुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वमेवसाधनीयं· त
थाचैतदनुमानेननित्यज्ञानेच्छाकृतीनांसिद्धौतत्पक्षकगुणत्वहेतुकानुमानेनलाघवादेकद्रव्याश्रितत्वसिद्धौतदेवद्रव्यमीश्वरइति
नित्यज्ञानेच्छाकृतिमानेकईश्वरःसिद्ध्यतीतिप्राचामभिप्रायः॥

का॰मु॰ रा॰ अभावीयविशेषणतेति दाहस्वरूपध्वंसरूपतयाविशेषणतयैवतदुत्पत्तेरितिभावः उद्देश्यतादैशिकविशेषणतान्यतरेति मंत्रस्यउद्देश्य
दि॰रा॰ तासंबंधेनैववन्ह्यधिकरणदेशेसत्वात् उद्देश्यतानिवेशः मण्यादिरूपोत्तेजकस्यसत्वेपिकिंचिदवच्छेदेनसंयोगेनतदभावसत्वाद्दाहानुत्प
२६ त्तिरितिदैशिकविशेषणतानिवेशः दैशिकविशेषणतयातुनद्व्यस्याव्याप्यवृत्तित्वमितिनदाहानुपपत्तिरितिभावः इदंचभावाभावसाधारण
दैशिकविशेषणतामभ्युपेत्योक्तं मण्यादेरिति आदिनामंत्रादेः परिग्रहः अतएवसंबंधकोटौउद्देश्यताप्रवेशः संयोगस्यानैदैशिकविशेषणताप्र
वेशइत्युक्तैवयुक्तिः वह्निद्व्यणुकैकत्वमिति वह्निद्व्यणुकवृत्तिपरिमाणव्यक्तिमित्यर्थः तेनवन्हिद्व्यणुकत्वस्यनानाद्व्यणुकेषुसत्वेपिनक्षतिः ननुम

दि॰ अभावीयविशेषणतासंबंधेनदाहत्वावच्छिन्नंप्रति उद्देश्यतादैशिकविशेषणतान्यतरसंबंधावच्छिन्नप्रतियोगिताका
नांततदुत्तेजकाभावानांसामानाधिकरण्यरूपंयद्वैशिष्ट्यंतदवच्छिन्नस्यमण्यादेर्दैशिकविशेषणतोद्देश्यतान्यतरसंबंधा
वच्छिन्नप्रतियोगिताकाभावस्याभावीयविशेषणतासंबंधेनहेतुत्वमिति एतेनसंयोगसंबंधावच्छिन्नप्रतियोगिताकमण्य
भावस्यतत्संयुक्तेपिसत्वाद्दाहापत्तिरितिनिरस्तम् नन्वनुमानमेवशक्तौप्रमाणम् तथाहि वह्निर्दाहानुकूलाहिष्ठातीन्द्रि
यधर्मसमवायीदाहजनकत्वाददृष्टवदात्मवदितिवन्हिद्व्यणुकैकत्वमादायभर्जनकपालस्यवन्हिनिष्ठानुद्भूतरूप
मादायवासिद्धसाधनवारणायसाध्येदाहानुकूलेति॥ ११ हत्वविशिष्टवन्हेरेवपक्षत्वात्नसिद्धसाधनमित्यत आह भर्जनकपा

लस्येतिवन्हिद्व्यणुकेंधनसंयोगमादायापिमहद्वन्हेः पक्षत्वेनसिद्धसाधनमतउक्तमदृष्टवदात्मसंयोगमिति स्वाश्रयसंयोगसंवन्धेनकार्य
मात्रेअदृष्टस्यहेतुतयातत्संवन्धेनसंयोगस्यापिहेतुत्वादितिभावः यद्यप्यत्रात्मनोदृष्टान्तत्वमसंगतं तस्यदाहजनकत्वेमानाभावात् तथा
पिकार्यमात्रेकर्तुरेवकारणत्वमताभिप्रायेणैवमुक्तंयद्वादाहजनकत्वमत्रनदाहकारणत्वं अपितुदाहप्रयोजकत्वं तच्चकारणतत्कारणसा
धारणंस्वरूपसम्वन्धरूपमितिकार्यमात्रकारणकृतिकारणात्मन्यप्यक्षतमेवेतिध्येयम् दोषविशेषेणेति अदृष्टादिरूपेणेत्यर्थः अन्यथात्व
न्मतेपिवन्हिगतवैजात्यप्रत्यक्षापत्तेरितिभावः तस्यादोषत्वादिति स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसंवन्धेनजातिविशि रा॰म॰
२६

॥ ॐ ॥ [illegible] ॥ ॐ ॥ ॐ ॥ ॐ ॥

ण्ना्नाधिकरणात्यंताभावप्रतियोगिजातित्वाभावव्याप्यत्वेमानाभावेन सांकर्यस्य जातित्वबाधकत्वेमानाभावादितिभावः स्वरूपतोऽवच्छेदक
त्वासंभवेनेतिजात्यंतरस्यस्वरूपतोभानानंगीकारात् यस्यस्वरूपतोभानंतस्यैवस्वरूपतोऽवच्छेदकत्वनियमादितिभावः स्वरूपसंबन्धरू
पायाइतितत्कारणव्यक्तिरूपायाःकारणतायाःकारणतावच्छेदकभेदेनभेदासंभवादितिभावः अतिरिक्तायाइतिसप्तपदार्थातिरिक्तायाइत्य

र्थः वन्हिद्व्यणुकेंधनसंयोगमादायादृष्टवदात्मसंयोगमादायवातद्वारणायादृष्टेतिवन्हिनिष्ठोष्णस्पर्शमादायतद्वारणा
यातींद्रियेतीतिचेन्नविपक्षबाधकतर्कविरहेणास्यानुमानस्याप्रयोजकत्वात् केचित्तु वह्निंप्रतितृणफूत्कारसंयोगादीनां
तृणफूत्कारसंयोगत्वादिरूपेणकारणतायाव्यभिचारेणासंभवादतिरिक्तशक्तिसिद्धिः नचतृणफूत्कारयोररणिनिर्मथनयोर्म
णितरणिकिरणयोश्चसंबंधस्यजन्यतावच्छेदकंवन्हिवृत्तिवैजात्यत्रयंकल्प्यमितिनव्यभिचारइतिवाच्यम् तज्जन्यतावच्छे
दकवैजात्यत्रयकल्पनामपेक्ष्यतत्तत्संबंधानामेकशक्तिमत्वेनकारणत्वकल्पनायाएवलघुत्वेनन्याय्यत्वादित्याहुस्तन्न तत्सं
बंधसाधारणैकजातेरेवाभ्युपगमात् नचयोग्यवृत्तिजातेर्योग्यत्वापत्तिरितिवाच्यम् दोषविशेषेणशक्तेरिवायोग्यत्वकल्पनात्
नचनोदनत्वादिनासंकरस्तस्यादोषत्वादन्यतमत्वेनकारणतासंभवाच्चनचान्यतमत्वघटकभेदानांमिथोविशेषणविशेष्यभावेविनि
गमनाविरहेणकारणतावच्छेदकभेदात्कारणताबाहुल्यमितिवाच्यम् कारणतावच्छेदकानांसमनियतानामैक्येनकारणता
वच्छेदकैक्यसंभवात् नचभेदानांस्वरूपतोवच्छेदकत्वासंभवेनतृणफूत्कारसंयोगभेदविशिष्टारणिनिर्मथनसंबंधभेदवि
शिष्टमणिकिरणसंबंधभेदावच्छिन्नप्रतियोगिताकभेदत्वादिनावच्छेदकत्वंवक्तव्यम् तथाचावच्छेदकतावच्छेदकभेदाद
वच्छेदकताभेदस्तद्भेदेनचकारणताभेदइतिवाच्यम् स्वरूपसंबंधरूपायाअतिरिक्तायावाकारणतायाअवच्छेदकताभेदे
प्यभेदादित्यन्यत्रविस्तरः॥ ११ र्थः ताद्दशकारणतायाअवच्छेदकताभेदाद्भेदेनानाकारणताव्यक्तिकल्पनागौरवापत्यानानावच्छेद
कतानिरूपितैककारणतायाएवकल्पयितुमुचितत्वादितिभावः व्यापकतारूपकारणतायाएवव्यापकतायाःव्यापकतावच्छेदकतापर्याप्त
वच्छेदकधर्मघटितत्वेनअवच्छेदकत्वादिभेदेनभिन्नत्वादितिध्येयम्॥ २ ॥

रा· यद्यपि घटादिकार्यं प्रति तत्तत्कार्यानुकूलएकशक्तिमत्त्वेन कारणत्वे लाघवं दंडत्वादिना नानाकारणत्वकल्पने गौरवं प्रतिवंधकसम
वधानकालीनकारणेषु शक्त्यभावादेव कार्यानुत्पादसंभवे प्रतिवंधकाभावस्य कारणत्वाकल्पनेन च महालाघवादिति शक्तिकल्पनमेवज्याय:
न च दंडचक्रादिषु सर्वत्रैकशक्तिमंगीकृत्य तद्वत्त्वेन कारणत्वे केवलदंडादपि घटोत्पत्ति: स्यात् अशेषकारणतावच्छेदकावच्छिन्नस्य
सत्त्वादिति वाच्यम् शक्ते: कारणसमुदायपर्याप्तत्वोपगमेन पर्याप्तिसम्बन्धेन शक्तिमत्त्वेनैव कारणत्वाभ्युपगमेन च केवलदंडसत्त्वदशा
यां कारणतावच्छेदकावच्छिन्नस्याभावात् एतन्मते सामग्रीत्वमिति यद्धर्मावच्छिन्नसमुदाये कारणतावच्छेदकपर्याप्ति: तत्तद्धर्मावच्छि
न्नसमुदायत्वमेव तथापि दंडत्वादिना घटकारणत्वाभावे दण्डत्वाद्यवच्छिन्नधर्मिके इष्टसाधनताज्ञानासंभवेन घटार्थिनो नियमतो दण्ड

दि: परे तु तृणादिसंबंधकालीनवायुसंयोगादीनामेकशक्तिमत्त्वेन हेतुतामादाय विनिगमनाविरहान्न शक्तिसि
द्धिरित्याहु: यदाशंकितं सादृश्यमप्यतिरिक्तपदार्थ इति तदपि निराकरोति सादृश्यमपीति: तद्भिन्नत्वे सतीति इदं
च सादृश्यनिरूपकेऽतिव्याप्तिवारणाय अनुयोगितासंबंधविवक्षणे तु न देयमेव तद्गतभूयोधर्मवत्त्वमिति· ॥ ॥

त्वाद्यवच्छिन्नोपादाने न प्रवृत्ति: स्यादिति दण्डत्वादिना घटकारणत्वमावश्यकमिति भाव: सर्वमिदं मनसि निधायैवान्यत्र विस्तर इत्युक्तमि
ति यद्यप्येवमपि तत्तद्धर्मावच्छिन्नसमुदायधर्मिककारणताऽवच्छेदकशक्तिपर्याप्तिज्ञानं तत्तद्धर्मावच्छिन्नोपादानगोचरप्रवृत्ति कारणमि
त्युक्तौ घटार्थिनो नियमतो दंडत्वाद्यवच्छिन्नोपादाने प्रवृत्तिसंभवत्येव तथाप्येतदस्वरसेनैव परे त्वित्यादिना शक्तिखंडनयुक्तं तराभिधायि
नो मतस्य अभिधास्यमानत्वान्नासंगतिरिति ध्येयम् अनुयोगितासंबन्धविवक्षणे इति तद्गतभूयोधर्मवत्त्वं तत्सादृश्यमित्यत्र तद्गतधर्मवत्ताया
अनुयोगितासंबन्धेन विवक्षणे इत्यर्थ: न देयमेवेति तद्गतधर्मरूपसंबंधे तदनुयोगिकत्वानभ्युपगमेनैव सादृश्यप्रतियोगिन्यतिव्याप्तिवा
॥ ॐ ॥ रणसंभवादिति भाव: ॥ ॐ ॥ ॐ ॥

रा॰ ननु पदार्थमात्रस्यैव पदार्थमात्रेणापि सादृश्यं स्यात् तद्गतप्रमेयत्ववाच्यत्वादिधर्मत्वसत्त्वादित्याशंकां निराकुरुते तत्रासाधारण्येनेति सकलपदार्थावृत्तित्वेनेत्यर्थः वैशिष्ट्यं तृतीयार्थः घटभिन्नत्वेन सिंहाकारकयोरपि सादृश्यापत्तिवारणाय भूयांस इति न च चंद्रगतभूयोधर्मस्य चंद्रसंबंधत्वे किं मानमिति वाच्यम् नीलो घट इत्यादौ स्ववृत्ति नीलत्वसंबंधेन घटे नीलस्येव मुखं चंद्र इति रूपकस्थले स्ववृत्तिभूयोधर्मसंबन्धेन मुखे चंद्रस्य प्रकारतायादिमतेन तत्संबन्धत्वस्य क्लृप्तत्वादिति ध्येयम् यद्यपि घटभेदपटभेदादयो भूयांसो धर्मास्तत्रापि संभवंत्येव गोत्वाश्वत्वयोर्नित्यत्वरूपैकधर्ममादाय सादृश्यमंगीकृत्यैवोक्तमिति भूयस्त्वोपादानमसंगतमेव तथापि प्रायेण भूयोधर्मैरेव सादृश्यप्रतीतेः तात्पर्यविषयार्थमेव प्रकृते भूयः पदमिति ध्येयम् नन्विदमिति तद्भिन्नत्वघटितसादृश्यमित्यर्थः विवक्षितत्वादित्यस्य श्लोके इत्याद्यर्थत्वेनेति शेषः युगभेदविवक्षयेति युगभेदप्रयुक्त

दि॰ तत्रासाधारण्येन विद्यमाना ये भूयांसो धर्मास्तद्वत्त्वमित्यर्थः नन्विदं गगनं गगनाकारं सागरः सागरोपमः रामरावणयोर्युद्धं रामरावणयोरिवेत्यादावव्याप्तमिति चेन्न तद्वृत्तिधर्ममात्रस्य तत्र विवक्षितत्वाद्युगभेदविवक्षया भेदसत्त्वाच्च अत एव युगभेदवि

मु॰ सादृश्यमपि न पदार्थांतरं किंतु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्॰ ॥ ६ ॥

वक्षायामिहोपमालंकारोऽन्यथानन्वयालंकार इत्युक्तमालंकारिकैः सादृश्यघटकधर्मश्च क्वचिज्जातिरूपो यथा घटसदृशः पट इत्यादौ क्वचिदुपाधिरूपो यथा गोत्वं नित्यं तथाश्वत्वमपीत्यादौ यथा वा चंद्रसदृशं मुखमित्यादावाह्लादकत्वादिरतिरिक्तकल्पने गौरवादिति ॥

९ तत् तद्युगविशिष्टगगनभेदविवक्षयेत्यर्थः भेदसत्त्वाच्चेति गगने गगनभेदसत्त्वाच्चेत्यर्थः उक्तार्थे आलंकारिकाणां संमतिमाह अत एवेति युगभेदविवक्षायामित्यस्य पूर्वोक्त एवार्थः इहेति गगनं गगनाकारमिति श्लोके इत्यर्थः उपमालंकार इति सादृश्यस्याबाधितत्वादिति भावः अन्यथा विशेषयोर्भेदानंगीकारे अनन्वयालंकार इति प्रतिपाद्यमानार्थस्यान्वयाभावादिति भावः ननु उक्तसादृश्यलक्षणे धर्मपदं यदि जातिपरं तदा गोत्वाश्वत्वयोः सादृश्यानुपपत्तिः यदि च जातिभिन्नोपाधिपरं तदा घटपटयोः कंबुग्रीवादिमत्त्वादिरूपैकोपाधिविरहेण तयोः सादृश्यं न स्यादित्याशंकां निराकरोति सादृश्यघटकधर्म इति॥ चंद्रसदृशं मुखमित्यादौ लक्षणसत्त्वं सूचयितुमाह यथेति ॥ ६ ॥

का॰मु॰ रा॰ आह्लादकरत्वादिति आल्हादः सुखविशेषः यद्यपि चंद्रमुखदर्शनजन्ययोः सुखयोर्भिन्नत्वेन चंद्रमुखयोर्नैकमाह्लादकरत्वं कारणतावच्छेदक
दि॰ रा॰ भेदेन कारणताभेदस्यावश्यकत्वात् तथापि स्वाश्रयोपधायकत्वसंबन्धेन एकवैजात्यविशिष्टत्वमेव प्रकृते साधारणो धर्मः मुखचंद्रदर्शनजन्यं च एक
२८ जातीयमेव सुखमिति भावः आदिना वर्तुलत्वतेजस्वित्वादिपरिग्रहः सादृश्यमिति शेषः अत एवातिरिक्तपदेनोत्तरत्र तस्योपस्थितिः सप्तपदार्थाति
रिक्तेति तदर्थः सप्तपदार्थातिरिक्तविषयतादिपदार्थमंगीकुर्वतां नव्यानां मतमुपदर्शयति नव्यास्त्विति अतिरिक्तमेवेति अन्यथा सदृश इत्याकारकप्र
तीतेः सर्वत्र समानाकारतानुभवापलापापत्तेरिति शेषः प्रतीतेः समानत्वमेकप्रकारकत्वं तथा च चंद्रसदृशं मुखमित्यादौ आल्हादकरत्वादेः प्रकारता

दि॰ नव्यास्तु सादृश्यमतिरिक्तमेव न चातिरिक्तत्वे पदार्थविभागव्याघात इति वाच्यम् तस्य साक्षात्परंपरया वा तत्त्वज्ञानोपयोगिपदा
र्थमात्रनिरूपणपरत्वात् एवमधिकरणत्वमपि तस्य संयोगादिस्वरूपत्वे बदरकुण्डसंयोगस्य द्विष्ठत्वेन कुण्डे बदरमितिवद्बदरे
कुण्डमित्यपि प्रयोगः स्यात् एवं प्रतियोगित्वमपीत्याहुः सादृश्यलक्षणं लक्ष्ये योजयति यथेति इति शब्दः श्लोकव्याख्यासमाप्ति

मु॰ यथा चंद्रभिन्नत्वे सति चंद्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति। २। द्रव्याणि विभजते क्षित्यप्तेजोमरु
द्व्योम कालदिग्देहिनो मनः क्षितिः पृथिवी आपो जलानि तेजो वह्निः॥ १९ द्योतकः। २। स्त्रियां क्तिन्निति सूत्रविहितक्ति
न्प्रत्ययांतक्षितिशब्दस्य क्षयवाचकत्वात् क्षितिपदस्य प्रकृतोपयोगिनमर्थमाह क्षितिः पृथिवीति अपशब्दस्य अम्नन्तजिता
दिपाणिनीयसूत्रे शब्दपरत्वादाह आपो जलानीति प्रतापस्यापि तेजःशब्दवाच्यत्वात् प्रकृते तेजःपदार्थं दर्शयति तेजो वह्नि
रिति वन्ह्यादिरित्यर्थः॥ १९ घटसदृशः पट इत्यादौ तु द्रव्यत्वपृथिवीत्वादेरिति तादृशप्रतीत्योः सादृश्यांशे अनुभवसिद्धायाः समानाकार
तायाः अपलापः उक्तधर्मस्य सादृश्यतावादिमते दुरुद्धरः सादृश्यमतिरिक्तः पदार्थ इति मते तु न तदनुपपत्तिः यद्यपि मुखे चंद्रे च नैकं साद
श्यं अन्यथा पटे चंद्रसादृश्यप्रतीत्यापत्तिः सादृश्यांशे तादृशप्रतीत्योर्न समानाकारतोपपत्तिः तथापि उभयसादृश्यसाधारणस्य सादृश्यत्व रा॰ म॰
रूपाखंडोपाधेरनुगतत्वाद्घटो रूपवान् पटो रूपवानिति प्रतीत्योरिव सादृश्यांशे समानाकारतोपपत्तिरिति ध्येयम्॥ ९ ॥ २८

रा॰ विभागव्याघातइतिपदार्थानांसप्ताधिकत्वादितिभावः तत्वज्ञानोपयोगीति आत्मधर्मिकात्मेतरद्रव्यादिभेदप्रकारकज्ञानं तत्वज्ञानं तत्वज्ञान जनकज्ञानविषयत्वंतदुपयोगित्वंतादृशज्ञाने चज्ञानविधयाआत्मज्ञानस्यप्रतियोगितावच्छेदकप्रतियोगिज्ञानविधयाद्रव्यादि एदार्थज्ञानस्य जनकत्वात् आत्मादीनांतत्वज्ञानोपयोगितानत्रचनादृशानुमितिजनकपरामर्शात्मकज्ञानस्यपक्षरूपात्मविषयकत्वात्तासादात्मनउपयोगित्वंप

दि॰ देवविशेषस्यापिमरुच्छब्दवाच्यत्वात्प्रकृतोपयोगिनमर्थमाह मरुद्वायुरिति व्योमशब्दस्यवेदेब्रह्मणिप्रयोगादाह व्योमआकाशइ तिकालशब्दस्यांतकादिबोधकत्वादाह कालः समयइति दिक्शब्दस्यदिशअतिसर्जनेइतिधातुनानिष्पन्नस्यदानार्थकत्वात्प्रकृतो पयोगिनमर्थमाह दिगाशेति देहविशिष्टार्थवाचकादेहिशब्दाद्देहावयवानामुपस्थितेराह देही आत्माइति अथेश्वरस्यदेहिनांमध्ये ऽन्तर्भावात्कथंद्रव्यत्वमितिचेन्नदृष्टाभूतावेशन्यायेनेश्वरस्यशरीरमिच्छंतिसंसार्यदृष्टवशाच्छरीरमित्यन्येअतएववास्वरसादाहात्मे ति॰ पृथिव्यप्तेजोवाय्वात्मानइतिपंचैवद्रव्याणिव्योमादेरीश्वरात्मन्येवांतर्भूतत्वात्मनसश्चासमवेतभूतेंतर्भावादित्याहुर्नवीनास्तन्म

मु॰ मरुद्वायुः व्योमआकाशः कालः समयः दिगाशा देही आत्मा मनः एतानिनवद्रव्याणीत्यर्थः ननुद्रव्यत्वजातौकिंमानं॰॥ ॥

तंनिराकर्तुंसंख्याबोधकपदपूरणेनार्थमाह एतानिनवेति व्योमत्वस्यावच्छब्दाश्रयतयासिद्धिः नचभगवतएवशब्दाश्रयत्वंप्रत्येकं जीवमादायविनिगमनाविरहात्नचजीवानामाश्रयत्वेशब्दवानहमितिप्रत्ययापत्तिः अदृष्टवद्योग्यत्वस्यैवकल्पनात् कालदिशो सुरतस्मिन्कालेघटः पूर्वस्यांदिशिपटइत्याद्युक्तगताकारप्रत्ययात् मनसश्चासमवेतभूतत्वेपार्थिवादित्रसरेण्वादायविनिगमनावि रहइत्याशयः अधिकमग्रेव्यक्तीभविष्यतिमूलेद्रव्याणीतिद्रव्यपदमद्रव्यत्वरूपजातिविशिष्टार्थकंनतुगुणाश्रयत्वविशिष्टार्थकं॰ गौरवान्मुक्तावल्यांकिंमानमितिकिंशब्दःप्रश्ने॥ १९ रामर्शजनकप्रतियोगिज्ञानविषयद्रव्यादिपदार्थानांपरंपरोपयोगित्वंसामान्यव्याप्यत याधर्मकथनस्यैवविभागतयाद्रव्यविभागवाक्येईश्वरवृत्तिधर्मान्तराणुपदेशादस्यद्रव्यत्वाभावनिश्चयादितिभावः॥२॥ भूतावेशन्यायेनेति प याभू तानाभिभवस्यलेमत्व्यादिशरीरावच्छेदेनभूतस्यनसुखदुःखसाक्षात्काररूपभोगाश्रयतांकिंतुतदीयशरीरावच्छेदेनैवएवमपिभूत॥

रा॰॥ प्रयत्नजन्यव्यापारवन्मनुष्यादिशरीरं तथाचापि रामादिशरीरं नेश्वरस्य भोगावच्छेदकं अपितु तदंतर्गतजीवस्यैव एवमपि ईश्वरप्रय
त्नजन्यरावणवधादिरूपविलक्षणव्यापारवदिति समुदायार्थः यद्यपि एवमपि उक्तसंबन्धेनेश्वरस्य देहविशिष्टत्वाभावात् देहिशब्दान्नेश्वर
लाभः संभवति तथापि स्ववृत्तिचेष्टाजनककृतिमत्वसंबन्धेन देहविशिष्ट एव देहिशब्दार्थ इति नानुपपत्तिरिति भावः नन्वेवं ईश्वरस्य श्रुतावपाणिपादत्वाद्युक्तिर्विरुध्येदित्यतः कल्पान्तरमाह अत एवेति अयंभावः देहिशब्दस्य उक्तसंबंधेन देहविशिष्टार्थकत्वे ईश्वरस्य शरीरानंगीकारे ईश्वरस्य द्रव्यमध्ये अविभजनात् द्रव्यत्वं न स्यादित्यस्वरसात् देहिशब्दार्थो न देहविशिष्टः अपितु आत्मत्वजात्यवच्छिन्न इतीश्वरस्य।
द्रव्यत्वसिद्धिरिति विवरणतात्पर्यम् न चेश्वरस्य अशरीरत्वे ब्रह्मविष्णुमहेश्वरशरीराणामपि ईश्वरीयत्वं न स्यात् जीवादृष्टवशेन सृष्ट्यादि
कार्यार्थमीश्वरस्य ब्रह्मादिशरीरोत्पत्त्यंगीकारेण इष्टापत्तेरयोगादिति वाच्यम् इष्टत्वात् ब्रह्मादिशरीराणां ईश्वरीयत्वं हि तदीयभोगाव
च्छेदकत्वं तददृष्टजन्यत्वं वा तत्कृतिजन्यचेष्टावत्त्वं वा नाद्यद्वितीयौ तस्य भोगादृष्टयोरभावात् नापि तृतीयः समवायेन चेष्टां प्रति अवच्छे
दकतासंबन्धेनैव कृतेः कारणतया व्याप्यवृत्तित्वेनेश्वरकृतेः स्वावच्छेदकतया काप्यसत्वात् कार्यत्वावच्छिन्नकारणताया एव तत्रांगी
कारात् ब्रह्मादीनां जीवन्मुक्तयोगित्वस्याप्युपेयत्वादिति ध्येयम् अयोग्यत्वस्यैवेति मानसप्रत्यक्षायोग्यत्वस्यैवेत्यर्थः तेन शब्दस्य श्राव
णत्वेपि न क्षतिरिति भावः त्रसरेणूनिति नवीनमते अवयवधारायास्त्र्यणुकेष्वेव विश्रांतेस्तेषामेवासमवेतत्वादिति भावः विनिगमनाविरह इति तथाचानेकव्यक्तिषु मनस्त्वस्वीकारापेक्षया एकैकातिरिक्तव्यक्तिषु तत्तन्मनस्त्वं स्वीकर्तुमुचितमिति भावः ननु नव द्रव्याणीति
मूलवाक्यस्यातिरिक्तद्रव्यत्वजात्यभावेपि नानुपपत्तिः गुणवदाद्यर्थकत्वेनापि तद्विवरणासंभवात् अतो मुक्तावल्यां द्रव्यत्वसाधनाप्रयासो
विफल इत्याशंकामपनेतुं मूले द्रव्यपदस्य द्रव्यत्वविशिष्टार्थकतां व्यवस्थापयति द्रव्यपदमिति प्रश्न इति जिज्ञासाबोधकशब्दः प्रश्नः घ
टकत्वं सप्तम्यर्थः तथा च मूलस्य किंशब्दः जिज्ञासार्थक इति पर्यवसितोर्थः उत्तरवाक्येन प्रमाणसामान्यस्य निरासेन किंशब्दस्य आक्षेपा
र्थकत्वासंभवादिति भावः ॥

रा॰॥ घृतादिष्विति नचघटादावित्येवकुतोनोक्तमितिवाच्यम् अनुगतप्रतीत्यभावेवीजाभावसूचनायघृताद्युपादानात् तथाहि अनुगताकृतिव्यं
ग्याहिमनुष्यत्वादिजातिः नहिनवद्रव्येष्वनुगताकृतिः काचित्संभवतिघृतादिष्वेकैकपदार्थेष्वपिसर्वदानैकाकृतिःकाठिनत्वद्रवत्वयोरनियत
त्वादितिभावः पामराणामिति पंडितानांशास्त्रकारीयवाक्यजन्यद्रव्यत्वज्ञानंसंभवतिपामराणांशास्त्रजन्यज्ञानाभावेनपामराणामित्युक्तंद्रव्यत्वस्यप्र
त्यक्षवेद्यत्वेघटादिवत्तस्यापिपामराणांप्रत्यक्षंस्यात् तदभावेननद्रव्यत्वेप्रत्यक्षंननुकिमिदंद्रव्यत्वावच्छिन्नस्यकार्यतावच्छेदकंकार्यत्वंनजातिस्
प्रध्वंससाधारण्यान्नाप्युपाधिरूपंअनुगतावर्तिप्रसक्तस्यतस्यदुर्वचत्वादिपाशंकायां तन्निर्वक्तिकार्यत्वमितिनचेतिद्रव्यकार्यत्वाभाववतिध्वंसेपिप्र

दि॰ ननुद्रव्यंद्रव्यमित्यनुगतप्रतीतिरेवजातिसाधिकाभविष्यतीत्यतआह नहीतितत्रद्रव्यत्वजातौघृतेतितथाचघृतादिषुपामरा
णांद्रव्यत्वज्ञानाभावेनसकलद्रव्यसाधारणद्रव्यत्वजातिसिद्धिर्नभविष्यतीतिभावः कार्य्येतिकार्यत्वंप्रागभावप्रतियोगित्वंनचध्वं
ससाधारण्यंसत्वेनविशेषणीयत्वात् अत्रचकार्यस्यसमवायःप्रत्यासत्तिः कारणस्यतादात्म्यंयत्रसमवायेनकार्यम् तत्रतादात्म्ये

मु॰ नहितत्रप्रत्यक्षंप्रमाणम् घृतजतुप्रभृतिषुद्रव्यत्वाग्रहादितिचेन्नकार्यसमवायिकारणतावच्छेदकतया ॥

नद्रव्यमितिनियमात् ननुजन्यसत्वरूपकार्यत्वावच्छिन्नंप्रतितादात्म्येनद्रव्यत्वेनकारणत्वेमानाभावः नचनीलेनीलोत्पत्ति
वारणाय तथाहेतुत्वमावश्यकमितिवाच्यम् समवायेननीलंप्रतिस्वाश्रयसमवेतद्रव्यत्वसंबंधेननीलस्यहेतुतयैवतद्वारणा
त् कार्यत्वस्यकार्यतावच्छेदकत्वेगौरवात् ॥ ((गभावप्रतियोगित्वस्यसत्वेनातिप्रसक्ततयाद्रव्यकार्यतावच्छेदकत्वानुपपत्तिरितिभावः

नन्विति जन्यत्वस्यकार्यतावच्छेदकत्वेऽनंतस्वरूपाणांकार्यतावच्छेदकतयाघटकसंसर्गतास्वीकरणीयासत्वस्यतथात्वेतुएकस्यसमवाय।
स्यैवतथाविधसंसर्गताकल्पनीयेतिलाघवमभिप्रेत्याह जन्यसत्वरूपेतिस्वाश्रयसमवेतद्रव्यत्वेतिस्वाश्रयसमवेतत्वसंबंधेनस्वस्मिन्नपिनीलस्य
सत्वेनतत्रनीलोत्पत्तिवारणायसंबंधकोटौद्रव्यत्वप्रवेशः नन्वेवमुक्तकार्यकारणभावविरहेप्युक्तकारणतावच्छेदकसंसर्गघटकतयैवद्रव्यत्वजा
तिसिद्धिर्निष्प्रत्यूहैवेतिसिद्धंनःसमीहितमित्यतआहकार्यत्वस्येति ॥

का·मु· रा· ननुतर्हिलाघवात्कालिकसंबंधेनघटत्ववत्त्वमेवकार्यतावच्छेदकमस्त्वत आहकालिकसंबंधेनेतिद्रव्यकार्यतयापरित्यागः द्रव्यकार्यत्वेना
दि·रा· नुक्तिः इदञ्चसंख्यादित्रयस्यचेत्यत्राप्यनुषज्यतेसत्तासामान्यमितिसत्त्वंसमय·संबंधःसमयश्चात्रस्वाधिकरणसमयध्वंसानधिकरणीभूतोग्राह्यः
३१ तेनतादृशसमयसंबन्धस्योत्पत्तिरूपत्वेनउत्पत्तिमत्त्वलाभात् नित्यगुणादिव्यावृत्तिः वस्तुतस्तुउक्तकार्यकारणभावस्यप्रतिव्यक्तिभिन्नतयाघटादौ
नित्यगुणाभावेनतदभिप्रायेणजातिमात्रव्यावर्तनायलाघवेनसत् पदंयथाश्रुतमेवेतिसम्यक् प्रतिभातिगगनादिस्थलएवागत्याजन्यत्वंप्रवे
श्यकार्यकारणभावइतिभावः यद्यप्यभावस्सन्निति प्रतीत्यासमवायसंबन्धमात्रमेवसत्पदार्थः तथापिसामान्यशब्दस्यात्रविशेषपरताभ्युप

दि· कालिकसंबंधेनघटत्वादिकमादायविनिगमनाविरहाच्चेत्यत आह संयोगस्येति अत्रच रूपादिगुणानांसकलद्रव्यसाधा
रण्याभावेनद्रव्यकार्यतायाः परित्यागःसकलद्रव्यवृत्तिसंख्यादित्रयस्यच गगनादिवृत्तेर्नित्यत्वात् नचसंयोगत्वावच्छिन्नंप्र
तिद्रव्यत्वेनसमवायिकारणत्वेमानाभावस्तत्तद्व्यक्तिसमवेतसत्तासामान्यंप्रतितत्तद्व्यक्तित्वेनसमवायिकारणत्वस्यावश्यकतया

मु·॥ संयोगस्यविभागस्यवासमवायिकारणतावच्छेदकतयाद्रव्यत्वजातिसिद्धेरिति· ॥ ९ ॥

गुणादौतदुत्पादासंभवादितिवाच्यम् कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमेनतादृशकारणत्वस्यावश्यकत्वात् नित्य
संयोगांगीकर्तुर्मतसाधारण्येनाह· विभागस्येति द्रव्यत्वसिद्धेः जातिरूपद्रव्यत्वसिद्धेः क्वचित्तथैवपाठः अत्रयद्यपिगुणत्वेनान्य
थासिद्धिः संभवतितथापिसाक्षात्संबद्धधर्मबाधेसत्येवानुमितेः परंपरासंबद्धधर्मविषयत्वमितिभावः ॥ ९ ॥ ९ ॥ ९॥

गमादुक्तार्थलाभः सत्पदस्यसत्तावदर्थकत्वेनित्यगुणव्यावर्तनायजन्यत्वप्रवेशस्यावश्यकतयातत्तएवजातिवारणेतद्द्वारकसत्पदवैयर्थ्यापत्तेः
प्रागभावस्यसर्वमतासिद्धतयाप्रागभावप्रतियोगित्वंनोपात्तमितिध्येयम् आवश्यकतयेति अन्यथाएकत्रसमवेतस्यापरत्रसमवायोनोत्पा
दप्रसंगादितिभावः कार्यमात्रवृत्तिजातेरिति अन्यथातदवच्छिन्नस्याकस्मिकत्वापत्तेरितिभावः गुणत्वेनान्यथासिद्धिरितिस्वाश्रयाश्रयत्वरू राम.
पपरंपरासंबंधेनगुणत्वस्यापिद्रव्यनिष्ठकारणतावच्छेदकत्वसंभवादितिभावः ॥ ९ ॥ ३०

रा०॥ नित्यव्यावृत्तत्वादिति यद्यपि भूतत्वं पृथिव्यादिपरमाणुवृत्तित्वेन न नित्यव्यावृत्तं न चेदं प्रतिबध्यतावच्छेदकं भूतत्वं परमाणुव्यावृत्तमेव स्वीकार्य
मिति वाच्यम् तथा सति पृथिवीत्वादिना सांकर्यापत्त्या तस्य जातित्वानुपपत्तिः तथापि सांकर्यस्यादोषत्वाभ्युपगमेनैवं तदभिहितः ननु द्रव्यत्वस्यापि प्र
तिबंधकतावच्छेदकत्वेपि भूतत्वमूर्तत्वाभ्यां विनिगमनाविरहतादवस्थ्यमत आह द्रव्यत्वस्येति धर्मिग्राहकमानेति द्रव्यत्वसाधकानुमानेत्यर्थः तथा
च तस्य प्रतिबंधकतानवच्छेदकत्वे द्रव्यत्वमेव न सिद्ध्येदिति क्लृप्तयोरेव परस्परं विनिगमनाविरहः न तु क्लृप्तस्याक्लृप्तेनेति भावः सांकर्यवारणायेतिय

दि॰ इदमुपलक्षणं द्रव्यवृत्तिद्रव्यांतराजन्यत्वासमवायेन द्रव्यस्य प्रतिबंधकत्व कल्पनीयमिति प्रतिबंधकतावच्छेदकतया द्रव्यत्वसि
द्धिः प्रतिबध्यतावच्छेदकं तु पृथिव्यादिचतुष्टयमात्रवृत्तिभूतत्वमेव नित्यव्यावृत्तत्वात् भूतत्वस्य प्रतिबंधकतावच्छेदकत्वे तु मूर्तत्व
स्य तथात्वमादाय विनिगमनाविरहापत्तिः द्रव्यत्वस्य प्रतिबंधकतावच्छेदकत्वं तु धर्मिग्राहकमानसिद्धम् न च तस्य गगनादिवृत्तित्वे
मानाभाव इति वाच्यम् भूतत्वेन तुल्यव्यक्तिवृत्तिकत्वापत्त्या विनिगमनाविरहेण गगनादिपंचवृत्तित्वाभ्युपगमात् न च भूतत्वेन तुल्यव्य

मु०॥ ननु दशमं द्रव्यं तमः कुतो नोक्तम् तद्धि प्रत्यक्षेण गृह्यते॰ ॥ ९ ॥

क्तिवृत्तित्ववारणाय मनोवृत्तित्वमेव द्रव्यत्वे कल्प्यतां गगनादिवृत्तित्वकल्पने गौरवात् गगनादिवृत्तित्वकल्पनेपि मूर्तत्वेन सांकर्यवार
णाय मनोवृत्तित्वस्यावश्यकत्वादिति वाच्यम् तथा सति मूर्तत्वजात्या द्रव्यत्वस्य तुल्यव्यक्तिवृत्तित्वापत्तेरिति ननु दशमद्रव्यस्य तम
सस्सत्वान्नवद्रव्याणीत्युक्तमित्यभिप्रायेण मीमांसकः शंकते नन्विति ननु तमसि मानाभावादेव तमो नोक्तमित्याशंक्य तमःसाधकं
प्रत्यक्षप्रमाणमाह तद्धीति तमो हीत्यर्थः प्रत्यक्षेण चक्षुरिंद्रियेण॥ ९ यद्यपि स्वमते सांकर्यं न दोषः तथापि तुष्यतु दुर्जन इति न्यायेन तस्य
दोषत्वमभ्युपेत्यापि दोषांतरमाह तथा सतीति चलतिच्छायेति प्रतीत्येति यद्यपि नीलं तम इति प्रतीतेरिव एतस्या अपि प्रतीतेर्भ्रमत्वकल्पनं
संभवात्पूर्वोक्तावतरणासंगतिः तथापि वन्ह्यादितेजसो पाधिकरक्तादिरूपभ्रमस्य सर्वसिद्धतया रूपवत्ताप्रतीतौ भ्रमत्वकल्पना संभवः क्रियाव
त्ताप्रतीतौ तु न तथात्वसंभवः क्वापि क्रियावत्ताप्रतीतौ न तथात्वादर्शनादिति भावः॥

रा॰॥ यद्यपि वेगवतः पुंसः स्थिरे वृक्षादौ भ्रमरूपा क्रियावत्ताप्रतीतिरनुभूयते तथापि तत्र भ्रांतपुरुषनिष्ठदोषस्यैव क्रियावत्ताभ्रमजनकत्वे नक्लृप्ततया भ्रमविशेष्यसमीपवृत्त्युदासीनपदार्थनिष्ठक्रियारूपदोषस्य क्रियाभ्रमजनकत्वे नकुत्राप्यकल्पनात् तात्रप्रतीतेर्भ्रमत्वकल्पनसंभवइतिभावः नत्वगंधाभावादित्युक्ते गंधप्रतियोगिकाभावहेतुता लभ्यते तथा च न तद्गंधाभावस्यापि तत्तयात्वेन तस्य च पृथिवीत्वाभावव्यभिचारित्वा

दि॰॥ ननु तमसः सिद्धावपि तस्य द्रव्यत्वे किंमानमित्याशंक्यानुमानप्रमाणमाह तस्येति तमस इत्यर्थः चकारो द्रव्यत्वमित्यनेनान्वेति तथा च तमो द्रव्यं रूपवत्त्वादित्यनुमानं तमसो द्रव्यत्वे प्रमाणं सूचितम् इदमुपलक्षणं परत्वाद्याश्रयत्वादित्यपि बोध्यम् इदं तमः परमिदमपरमिति प्रतीतेः ननु तमसि रूपे मानाभावः न च नीलं तम इति प्रतीत्या तत्सिद्धिरिति वाच्यम् प्रतीतेर्भ्रांतित्वात् अतो हेत्वंतरमाह कर्मत्वादिति कर्मवत्त्वं च समवायसंबंधेन विवक्षितं तेन जन्यमात्रस्य कालिकसंबंधेन कर्मवत्त्वेपि न व्यभिचारः न च स्वरूपासिद्धिः चलति च्छायेति प्रतीत्या कर्मवत्त्वसिद्धेः तमसः क्लृप्तद्रव्येष्वंतर्भावं निराकुरुते तद्धीत्यादिना गंधेति गंधाभावस्य हेतुत्वो

मु॰॥ तस्य च रूपवत्त्वात्कर्मवत्त्वाच्च द्रव्यत्वं तद्धि गंधशून्यत्वान्न पृथिवी नीलरूपवत्त्वाच्च न जलादिकम्॰ ॥

क्तौ पटगतगंधप्रतियोगिकाभावमादाय घटे व्यभिचारोऽतः शून्यत्वमुक्तं हेतुश्च प्रतियोगिव्यधिकरणः समवायसंबंधावच्छिन्नप्रतियोगिताकोपि बोध्यः तेन नोत्पत्तिकालीने संयोगसंबंधावच्छिन्नगंधाभाववति च घटे व्यभिचारः नीलरूपेति अनुगतेनैकेनैव नीलरूपेण हेतुना जलाद्यष्टकभेदसिद्धेः स्नेहाभावादीनामननुगतानां न हेतुतयोपन्यासः कृतः जलादिकमित्यादिना तेजःप्रभृतिद्रव्यसंग्रहः तथा च नवसु द्रव्येष्वंतर्भावासंभवेन परिशेषेण तमसोऽधिकद्रव्यत्वसिद्धिरितिभावः तदुक्तम् तमः खलु चलं नीलपरापरविभागवत् प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हतीति॥

रा॰ तद्गंधसामान्याभावस्य हेतुतालाभाय गंधशून्यत्वादित्युक्तमित्यभिप्रायेणाह गंधाभावस्येति संयोगसंबन्धावच्छिन्नगंधाभाववति चेति न च संयोगेन गंधाभावे प्रतियोगिव्यधिकरणत्वस्यैव दुर्घटतया तादृशाभावमादाय व्यभिचारप्रदर्शनमसंगतं संयोगेन प्रतियोग्यधिकरणाप्रसिद्धेरिति वाच्यम् ॥ यादृशसंबंधसामान्ये यदभावप्रतियोगिकत्वं यदभावाधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्व

रा॥ तदधिकरणेतदभावस्यतादृशसंबंधेनप्रतियोगिव्यधिकरणत्वमित्युक्तौतादृशाभावस्यापिप्रतियोगिव्यधिकरणत्वसंभवादितिभा
वः वस्तुतस्तु सुरभ्यसुरभ्यवयवारब्धघटेव्यभिचारोदुर्वारः तत्रपरस्परविरोधेनकस्यापिगंधस्यानुत्पत्त्याप्रतियोगिव्यधिकरणसमवाय
संबंधावच्छिन्नगंधसामान्याभावसत्वादितिप्रतियोगिव्यधिकरणत्वंस्वसमवायिसमवेतत्वसंबंधेनगंधानधिकरणेनिरवच्छिन्नदैशिक
विशेषणतयावृत्तित्वंतद्विशिष्टगंधाभावस्यहेतुत्वेतात्पर्यमुपगंतव्यं उक्तघटेचउक्तसंबंधेनकपालनिष्ठगंधसत्वेनतत्रगंधाभावस्यप्रति
योगिव्यधिकरणत्वासंभवान्नव्यभिचारः पार्थिवपरमाणौगंधनाशदशायांगंधाभावसत्वात्तत्रव्यभिचारवारणायविशेषणतायांनि
रवच्छिन्नत्वप्रवेशः इदंचसंयोगेनगंधाभावस्यापिप्रतियोगिव्यधिकरणत्वात् तद्वारणायसमवायावच्छिन्नप्रतियोगिताकत्वनिवेश
सार्थक्यं एतेनप्रतियोगिव्यधिकरणत्वंयदिप्रतियोग्यधिकरणावृत्तित्वंतदातादृशगंधाभावाप्रसिद्धिः अधिकरणभेदेनाभावभेदेना
भावात् यदिप्रतियोग्यनधिकरणवृत्तित्वंतदागंधाभावप्रतियोगित्वेनगंधोपादानेशिरोवेष्टनेननासिकास्पर्शतुल्यता यदिगंधानधिक
रणवृत्तित्वंतदापिगंधानधिकरणजलादिवृत्तिगंधाभावस्यपृथिव्यामपिसत्वाद्व्यभिचारतादवस्थ्यम् यदिचगंधानधिकरणवृत्तित्व
विशिष्टगंधाभावस्यहेतुत्वान्नव्यभिचारइतिभाव्यते तत्रापितद्घटकगंधानधिकरणत्वमात्रस्यहेतुतासंभवेनशेषवैयर्थ्यमिति
दूषणानिप्रत्युक्तानिस्वाश्रयसमवेतत्वसंबंधेनगंधानधिकरणत्वस्यपार्थिवपरमाणौव्यभिचारित्वेनशेषसार्थक्यादितिविभावनीय
म् नहेतुतयेति एतेनप्राचीनग्रंथेषुजलादिभेदसाधनेननानाहेतूपन्यासोव्यर्थप्रयासइतिसूचितं परिशेषेणेतिपृथिव्यादिभिन्नत्वेसति
द्रव्यत्वरूपहेतुनेत्यर्थः नचविशेष्यासिद्धिः रूपादिनातत्साधनादितिभावः उक्तार्थेमीमांसकानांसम्मतिमाह तदुक्तमितिपरापरयोर्विभा
गौविशेषधर्मौपरत्वापरत्वस्वरूपौतद्वदितिपरापरविभागवदित्यस्यार्थः प्रसिद्धद्रव्यवैधर्म्यादिति प्रसिद्धानियानिपृथिव्यादिद्रव्याणि
तेषांवैधर्म्यात् तद्वृत्तिगंधशून्यत्वादित्यर्थः॥

का॰ मु॰ रा॰॥ ननु तत्प्रत्यक्षे चेत्यादिमूलं प्रकृतानुपयुक्तमित्याशंकां निराकुर्वन् तद्वृत्तमवतारयति नन्विति ननु तेजोभावस्तम इति वादी प्रष्टव्यः किं तेज
दि॰ रा॰ सामान्याभावस्तमश्शब्दार्थः उत तद्विशेषाभावः नाद्यः गाढान्धतमसेऽपि तमःप्रतीत्यनुपपत्तेः सदैव सर्वत्र तेजःपरमाणूनां सत्त्वात् न द्वितीयः
३२ सौरालोकसत्त्वेऽपि यत्किंचित्तेजोभावसत्त्वेन तमःप्रतीत्यापत्तेरित्यतो यादृशतेजोभावस्तमश्शब्दार्थस्तादृशं तेजोभावं दर्शयति प्रकृष्टेति तेज
स्यणुकसत्त्वेऽपि तमःप्रतीतेरनुभवसिद्धत्वात् महत्त्वे प्रकृष्टत्वविशेषणं चक्षुरादितेजस्सत्त्वेऽपि तमःप्रतीतेः उद्भूतत्वनिवेशः हिरण्यादितेजस्सत्त्वे

दि॰॥ ननु तमसो द्रव्यत्वे आलोकनिरपेक्षेण चक्षुरिंद्रियेण ग्रहो न स्यात् द्रव्यग्रहे ह्यालोकसापेक्षचक्षुरिंद्रियस्य हेतुत्वादित्यत आह
तत्प्रत्यक्षे चेति तमःप्रत्यक्षे चेत्यर्थः तमसोऽभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव संयोगसंबंधेनालोकत्वेन कारणत्वावधारणादि
तिभावः आवश्यकतेजोभावेनेति प्रकृष्टमहत्त्वोद्भूतानभिभूतरूपवत्तेजस्त्वावच्छिन्नाभावेनेत्यर्थः अंधकाराभाव एव तेजः किन्न स्या

मु॰॥ तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति चेन्न आवश्यकतेजोभावत्वेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्य
त्वात् रूपवत्ताप्रतीतिस्तु भ्रमरूपा कर्मवत्ताप्रतीतिरप्यालोकापसारणौपाधिकी भ्रांतिरेव॥

१ दिति ननु सम्यग्गुरुस्पर्शाभा
स्वररूपबुद्धेरनुपपत्तेरिति सूचनायावश्यकपदं उपपत्तौ तमोव्यवहारोपपत्तौ ननु तमसस्तेजोभावत्वे रूपवत्ताप्रतीतिः कथं अभा
वे रूपाभावादित्यत आह रूपवत्तेति ननु रूपवत्ताप्रतीतेर्भ्रांतित्वेऽपि चलतीति प्रत्ययसिद्धकर्मवत्त्वहेतुना द्रव्यत्वं सेत्स्यतीत्य
त आह कर्मवत्ताप्रतीतिरपीति नहि द्रव्येऽन्यौपाधिकी कर्मवत्ताप्रतीतिरिति भावः॥

१ पि तमःप्रतीतेः रूपे अनभिभूतत्वस्यापि निवेशः
तथा चैतादृशविशेषणविशिष्टतेजस्सामान्याभावस्य तमश्शब्दार्थत्वे तयोक्तापत्तिरिति भावः ननु तेजोभावे आवश्यकत्वं अवश्यक्लृप्तत्वं तच्च घटो ना
स्तीत्यादिप्रतीत्या यथा घटाभावादिरवश्यं क्लृप्तः तथा तेजो नास्तीति प्रतीत्या तेजोऽभावोऽपीत्युपपादनीयं तच्च न संभवति तेजोरूपद्रव्ये मानाभावा
त् तमोरूपद्रव्याभाव एव तेजस्त्वप्रतीतेरुपगमसम्भवादित्याशङ्कामपनेतुं तेजोरूपद्रव्यस्यावश्यकतां प्रदर्शयति अंधकाराभाव एवेति आ आम.
वश्यकपदमिति तथा च तमोभाव एव तेजः किं न स्यादित्याशंकानिरासाय मूले तेजस्यावश्यकत्वं प्रदर्शितमिति भावः॥ १॥ १॥ ३२

२॥ पश्चोत्तरकालइतिइदं रजतमितिभ्रमानंतरं नेदं रजतमितिबाधनिश्चयादेव पूर्वतनप्रतीतेर्भ्रमत्वं कल्प्यतेन तूत्तरकालेबाधनिश्चयाभावे अन्यथाघटा
दिविषयकप्रतीतीनामपिभ्रमत्वकल्पनापत्त्याशून्यवादापत्तेरितिभावः दूषणांतरमाहेतितथाचधूमोयदिवन्हिव्यभिचारीस्यात्तर्हिवन्हिजन्योनस्या
दितितर्केणव्यभिचारज्ञानप्रतिबन्धकवत्तमोयदिद्रव्यंनस्यात्तर्ह्यलूप्तानन्तावयवसमवेतंस्यादितितर्केणद्रव्यत्वज्ञानप्रतिबंधसंभवात् क्रियादिहे

दि॥ ननुप्रतीतेर्भ्रांतित्वंतत्रैवस्वीक्रियतेयत्रोत्तरकालेबाधज्ञानंप्रकृतेचतमोनचलतीतिउत्तरकालेबाधज्ञानाभावात्कथंप्रतीतेर्भ्रांति
त्वमित्यतोदूषणांतरमाहतमसइति अवयवादीत्यादिना उत्पत्तिध्वंसपरिग्रहः यत्वारोपितंनीलरूपंतमइतिकंदलीकारमतमतन्नइह
अंधकारइतिप्रतीतेरपिभ्रमत्वापत्तेः तमोनीलंननुनीलिमेतिप्रत्ययाच्चनन्नुतमसोऽनतिरिक्तत्वेपिसुवर्णस्यातिरिक्तस्यद्रव्यस्यसत्वान्न
वत्वव्याघातस्तद्वस्यएवेत्यत आहसुवर्णस्येति वक्ष्यत इति तेजोनिरूपणावसरइतिशेषः ३ कंठतइतिरूपरसगंधस्पर्शाः संख्याः प

मु॥ तमसोतिरिक्तद्रव्यत्वे अनंतावयवादिकल्पनागौरवंस्यात् सुवर्णस्ययथा तेजस्यंतर्भावस्तथाग्रे वक्ष्यते। ३। गुणान्विभजते
द्रव्याण्यथगुणारूपंरसोगंधस्ततः परम्।३। स्पर्शः संख्यापरिमितिः पृथक्त्वंचततः परंसंयोगश्चविभागश्चपरत्वंचापरत्वक
म्।४। बुद्धिः सुखंदुःखमिच्छाद्वेषोयत्नोगुरुत्वकम् द्रवत्वंस्नेहसंस्कारावदृष्टंशब्दएवच।५। एतेगुणाश्चतुर्विंशतिसंख्याकाः
कणादेनकण्ठतश्चशब्देनचदर्शिताः॥ १९ रिमाणानिपृथक्त्वंसंयोगविभागौपरत्वापरत्वेबुद्धयः सुखदुःखेइच्छाद्वेषौप्रयत्नाश्चगु

णाइतिविभागसूत्रेसप्तदशकंठेनोक्ताः चशब्देनसूत्रस्थचशब्देनगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः समुच्चिताः तेचसर्वेएकतयाचतु
र्विंशतिगुणाइहव्यवहृताः ननुचतुर्विंशतौकिंनामगुणत्वंनचजातिविशेषस्तत्रप्रमाणाभावादित्यत आहतत्रेतिगुणोपिस्पर्थः अग्रेगुण
निरूपणावसरेवक्ष्यतइतिद्रव्यकर्मभिन्नसामान्यवतियाकारणतासाकिंचिद्धर्मावच्छेद्याकारणतात्वादित्यनुमानंगुणत्वजातौप्रमाणमि

तुनापितमसोनद्रव्यत्वसिद्धिरितिभावः नचैवंधूमेनवन्ह्यनुमितिरपिनस्यात् वन्हिर्यदिपर्वतवृत्तिः स्यात्तर्ह्यलूप्तानंतावयवसमवेतः स्यादितितर्केणव
न्ह्यनुमितिप्रतिबंधसंभवादितिवाच्यंप्रत्यक्षसिद्धमहानसीयवन्ह्यारंभकपरमाणूनांलूप्तत्वात् नचवन्ह्यारंभकपरमाणूनांक्लृप्तत्वेपिपर्वतीयवन्ह्या

भिभावं प्रत्यक्षत्वात्तौ नैतदुक्तरौ भवति च्छुति ॥४॥ २॥
भकाणांतेषामसिद्धेस्यात् नदुमिति कविनाः संभवतीतिवाक्यम् ॥

का॰मु॰ टि॰ग॰ ३३

रा॰॥ महानसीयवन्ह्यारंभकपरमाणुभिरेवपर्वतीयवन्ह्यारंभसंभवात्तमःपरमाणूनांचाप्यक्लृप्तत्वात्नचतमोऽसमवेतत्वमेवसीकार्य्यमितिवा
च्यंतथासतिनिरवयवत्वेनतमसोनाशासंभवादितिभावः इहेतिजलादावित्यर्थः भ्रमत्वापत्तेरितिजलादौभ्रमप्रकारीभूतनीलरूपविरहादिति
भावः॥३॥एकत्वयेति एकसंख्यावत्तयेत्यर्थः तेनगंधरूपादीनामेकत्वासंभवेपिनक्षतिः संख्याचात्रविषयतयाअपेक्षाबुद्धिरूपैवगुणेगुणानंगी
कारादिति इत्यनुमानमितिनन्ववच्छेदकावच्छेदेनसाध्यसिद्धेरुद्देश्यत्वेबाधः गंधादिनिष्ठसमवायसंबंधावच्छिन्नकार्यतानिरूपितस्वसमवा
यिसमवेतद्रव्यत्वसंबंधावच्छिन्नगंधादिनिष्ठकारणतायामतिप्रसक्तत्वेनगुणत्वाव च्छिन्नत्वात् सामानाधिकरण्येनतयात्वे चतुर्विंशतिगुणनिष्ठ

दि॰॥ प्रत्यक्षसिद्धेति चलनाकारानुगतप्रत्ययवेद्येत्यर्थः॥६॥ अधिकतयेति कर्मविभाजकोपाधिभिर्भ्रमणत्वादिभिः॥मूलेगम
नादेवेति अथैवमुत्क्षेपणादीनामपिगमनेंतर्भावात् गमनादेवलाभे उत्क्षेपणत्वादिभिरपिविभागोनुचितः नहिउत्क्षेपण

मु॰॥ तत्रगुणत्वजातिसिद्धिरग्रेवक्ष्यते।४।५। कर्माणिविभजते उत्क्षेपणंततोऽपक्षेपणमाकुंचनंतथाप्रसारणंचग
मनंकर्माण्येतानिपंचच।६। कर्मत्वजातिस्तुप्रत्यक्षसिद्धाएवमुत्क्षेपणत्वादिकमपि।६। ननुभ्रमणादिकमपिपृथ
क्कर्म अधिकतयाकुतोनोक्तमत आह भ्रमणमिति भ्रमणंरेचनंस्पंदनोर्द्ध्वज्वलनमेवच तिर्य्यग्गमनमप्यत्रगमना

दैगमनत्वंनानुभाविकमूर्द्ध्वमधश्चप्रक्षिप्तलोष्ठादावूर्द्ध्वंगच्छत्यधोगच्छतीतिप्रत्ययादितिचेन्नस्वतंत्रेच्छस्य ॥ देवलभ्यते७।
मुनेर्नियोगपर्य्यनुयोगानर्हत्वादिति।७॥ ॥कारणत्वेवपक्षीकर्तव्यातस्याएवानतिप्रसक्तगुणत्वावच्छिन्नत्वसम्भवात्साचाप्रसिद्धैवगुणत्वे
नकिंचित्कार्यंप्रत्यपिसकलगुणानामकारणत्वात् तथाचपक्षाप्रसिद्धिः नचगुणप्रत्यक्षत्वावच्छिन्नंप्रत्येवगुणत्वेनकारणत्वात्नाप्रसिद्धिरितिवाच्य
म्प्रत्यक्षत्वावच्छिन्नंप्रतिविषयत्वेनसामान्यतः तत्तद्व्यक्तिप्रत्यक्षत्वेन तत्तद्व्यक्तित्वेनविशेषतश्चकार्यकारणभावैरेवोपपत्त्याघटप्रत्यक्षस्वपोघटप्रत्य
क्षत्वस्यैवावलोकितमैत्रनिर्मितघटप्रत्यक्षत्वाद्यनंततमध्यवर्तिधर्मावच्छिन्नकारणताकल्पनेप्रयोजनविरहादितिचेन्नज्ञायमानलिंगकरणतावादि एम
मताभिप्रायेणैवतदभिधानात् इदंद्रव्यंगुणादित्यनुमितौ [illegible] कारणतायाआवश्यकत्वात् कथमन्यथागुण ३३

रा॰॥गमनपदादेवेति कारिकार्थः लोष्ठादाविति प्रामादिको पंग्रंथः उत्क्षिपतीति व्यवहारो हि चेतनेष्वेवानुभूयते न त्वचेतने लोष्ठादौ तस्माल्लोष्ठादि निष्ठगत्यनुकूलचेतनव्यापार एव उत्पूर्वकक्षिपधातोरर्थः आश्रयत्वं चाख्यातार्थ इत्यवश्यमंगीकरणीयं तथा चाचेतने घटः प्रक्षिपतीति व्यवहाराभावेन लोष्ठाद्यचेतनक्रियायां गतित्वोपपादनस्य प्रकृतानुपयोगात् परं तु लोष्ठादिकं प्रक्षिपति चैत्रो गच्छतीति प्रत्ययात् उत्तरदेशसंयोगानुकूलक्रियामात्रस्यैव गतित्वादित्येव लेखनीयमिति मंतव्यं नियोगपर्यनुयोगेति अयमाशयः गतित्वं प्रकृते उत्क्षेपणादिभिन्नत्वे सत्युत्तरदेशसंयोगानुकूल

दि॰॥तल्लक्षणं त्विति लक्षणप्रयोजनं त्वितरभेदस्य व्यवहारस्य वा सिद्धिः सामान्यमितरेभ्यो द्रव्यादिभ्यो भिद्यते सामान्यमिति व्यवहारविषयो वा नित्यत्वे सत्यनेकसमवेतत्वात् यन्नैवं तन्नैवं यथा द्रव्यमिति एवं लक्षणांतरेप्यूह्यम् अनेकत्वमेकभिन्नत्वं जलपरमाणुरूपादावतिव्याप्तिवारणाय उक्तो विशेष्यभागः समवेतत्वघटकसमवायफलमाह नित्यत्वे सत्यनेकवृत्तित्वमिति न चैवं नित्यसंयोगेऽतिव्याप्ति

मु॰॥सामान्यं निरूपयति सामान्यं द्विविधं प्रोक्तं परं चापरमेव च तल्लक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वम् अनेकसमवेतत्वं संयोगादीनामप्यस्तीत्यत उक्तं नित्यत्वे सतीति नित्यत्वे सति समवेतत्वम् गगनपरिमाणादीनामप्यस्तीत्यत उक्तमनेकेति नित्यत्वे सत्यनेकवृत्तित्वमत्यंताभावस्याप्यस्ति अतो वृत्तित्वसामान्यं विहाय समवेतेत्युक्तम्॥ ॰॰रिति वाच्यम् तस्य निरस्तत्वात् कुतो निरास इति चेन्न द्रव्यनिष्ठकारणतानिरूपितसंयोगनिष्ठकार्यतावच्छेदककोटौ जन्यत्वनिवेशे गौरवात् नित्यसंयोगांगीकर्तृनये संयोगत्वस्य नित्यवृत्तित्वेन कार्यतानवच्छेदकत्वात् तुल्ययुक्त्या नित्यविभागसिद्ध्यापत्तेश्च नन्वाकाशत्वरूपजातावव्याप्तिस्तस्या अनेकसमवेतत्वाभावादित्याशंकालक्ष्यत्वेनोत्तरमाह॥ ॰॰क्रियात्वमेव विभाजकतावच्छेदकत्वेनाभिमतं तेन द्रव्यत्वपृथिवीत्वाभ्यामिव गतित्वोत्क्षेपणत्वाभ्यामपि विभागस्यानर्हत्वेपि न क्षतिः नन्वेवं पृथिव्यन्यद्रव्यस्य द्रव्यत्वादिना विभागापत्तिरिति चेत् एतदभिप्रायेणैव नियोगपर्यनुयोगानर्हत्वादित्यस्योक्तत्वात् नियोगपर्यनुयोगौ प्रश्ननिंदे॥७॥ ॥अन्वयदृष्टांताभावादाह यन्नैवमिति एकभिन्नत्वमिति न च यत्किंचिदेकत्वावच्छिन्नभेदवति समवेतरूपादौ जातिलक्षणातिव्याप्तिरिति वाच्यम् एकभिन्नत्वप ॥

रा·॥ देनएकत्वावच्छिन्नप्रतियोगिताकभेदकस्यैवोक्तत्वात् नचैवमप्रसिद्धिः ग्रंथकारेणतूभयंनैकमितिप्रतीत्यंगीकारेणउभयत्वावच्छिन्नएव तत्प्रसिद्धेः नचैवमपिजलपरमाणावपिउभयत्वावच्छेदेनतादृशभेदसत्वात् नत्समवेतत्वरूपेअतिव्याप्तितादवस्थ्यमितिवाच्यम् भेदोपदवच्छेदेन वर्ततेतदवच्छेदेनवृत्तित्वस्यैवसमवेतत्वपदेनविवक्षणीयत्वान्नातिव्याप्तिः वस्तुतस्तुस्वप्रतियोगिसमवेतत्वस्वाधिकरणसमवेतत्वोभयसंबंधेन

दि·॥ एकव्यक्तिमात्रेति व्यक्त्यभेदेरूपवाधकसत्वादितिशेषः अनुगतधियोजातिकल्पिकाया अभावादितिभावः ननुव्यक्त्यभेदस्य जातिवाधकत्वमेवासिद्धं निःसामान्यत्वेसतिविशेषान्यत्वेचसतिसमवेतत्वस्यजातिलक्षणत्वादित्यतः संमतिमाह तथाचोक्तमिति द्रव्यकिरणावल्यामुदयनाचार्यैरितिशेषः वहुवृत्त्येकधर्मस्यसामान्यतयासर्वसिद्धत्वादेकव्यक्तौजातिरनभ्युपेयेतिभावः व्यक्तेरभेद एकव्यक्तिकत्वमाकाशत्वादेर्जातित्ववाधकं तुल्यत्वं तुल्यव्यक्तिवृत्तित्वं घटत्वकलशत्वादीनां जातीनां भेदे वस्तुतस्तुतुल्यत्वंसभिन्न

मु·॥ एकव्यक्तिमात्रवृत्तिस्तु नजातिः तथाचोक्तंव्यक्तेरभेदस्तुल्यत्वंसंकरोथानवस्थितिः रूपहानिरसंबंधोजातिवाधक संग्रहः द्रव्यादित्रिकवृत्तिस्तुसत्तापरतयोच्यते।८। परभिन्नातुयाजातिः सैवापरतयोच्यते द्रव्यत्वादिकजातिस्तुपरा परतयोच्यते।९। परत्वमधिकदेशवृत्तित्वमपरत्वमल्पदेशवृत्तित्वं सकलजात्यपेक्षयासत्तायाअधिकदेशवृत्तित्वात्

जातिसमनियतत्वमिति यावत् तच्चजातित्ववाधकमेवेतिध्येयमितिभावः संकरश्चपरस्परात्यंताभावसमानाधिकरणयोर्धर्मयो रेकत्रसमावेशः भूतत्वादेर्जातित्ववाधकः भूतत्वंविहायमनसिवर्तमानस्यमूर्तत्वंविहायगगनेवर्तमानस्यभूतत्वस्यचपृथिव्यादिचतुष्टयेसत्वात् ननुसांकर्यस्यजातिवाधकत्वेकिंमानमितिचेत् स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसंबंधेनजातिविशिष्टजातित्वावच्छेदेनस्वसमानाधिकरणाभावप्रतियोगित्वाभावइतिनियमस्यभंगप्रसंगएवेतितादृशनियमेमानाभावान्नसांकर्यंजा तिवाधकमितिनव्याः॥ ११भेदवैशिष्ट्यस्यैवअनेकसमवेतत्वान्नकाप्यनुपपत्तिः एतेनतादृशभेदानुयोगितावच्छेदकद्वित्वाद्यवच्छिन्नेजातिवृत्तित्वमप्रामाणिकंजातेर्निरवच्छिन्नवृत्तिकत्वादितिदूषणमपास्तं नित्यविभागेतिकदापिपरस्परासंयुक्तपरमाण्वोः नित्यविभागसंभवात् नचसंयोगानंतर [illegible]विभागप्रतीतेः [illegible]परमाण्वोः कदापिविभागाप्रतीतेः॥ रामः

कथंनित्यविभागाभ्युपगमसंभवइतिवाच्यम् तथासतिक्रियानंतरमेवसंयोगप्रतीतेः नित्येषुसंयोगप्रतीत्यसंभवात् नित्यसंयोगाभ्युपगमोपिन
संभवतीतितुल्यमितिभावः नचनित्यविभागानंगीकारेसंयोगनाशकोगुणइतिविभागलक्षणस्यतत्राव्याप्तिरितिवाच्यम् नित्यविभागानंगीकारे
गौवतल्लक्षणप्रणयनात् इदानींतुविभागत्वजातेरेवतल्लक्षणत्वसंभवादिति ध्येयं व्यक्तेरभेदइतिव्यक्तेराश्रयस्यनिष्ठत्वंषष्ठ्यर्थः आश्रयनिष्ठ
भेदप्रतियोगिकाभावइतिसमुदायार्थः नचैवंघटत्वादेरपिजातित्वन्नस्यात्तदाश्रयेयत्किंचिद्भेदप्रतियोगिकाभावसत्वादितिवाच्यम् भेदपदे
नस्वाश्रयप्रतियोगिकभेदस्यविवक्षितत्वात्स्वाश्रयनिष्ठस्वाश्रयप्रतियोगिकभेदसामान्याभावः स्वनिष्ठजातित्वेवाधकइत्यस्यसमुदायार्थत्वा
त् नचगगनत्वाश्रयेपिस्वस्यैवद्वित्वादिनाभेदसत्वाद्गगनत्वादावपिजातित्ववाधोनस्यादितिवाच्यम् स्वाश्रयनिष्ठप्रतियोगितायाः व्यासज्यवृत्तिध
र्मानवच्छिन्नत्वेनविशेषणीयत्वादितिभावः ननुस्वाश्रयनिष्ठस्यस्वाश्रयनिष्ठ व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदसामान्याभावस्यस्वस्मिन् जातित्व
वाधकत्वेकिंमानमित्याशंकायामाह अनुगतधीपइतिनानाधर्मिषुएकप्रकारकधीपइत्यर्थः नानाघटादिव्यक्तिषुएकधर्मप्रकारकबुद्ध्युपप
त्तयेहिघटत्वादिजातिकल्प्यतेएकव्यक्तौतुनतथाप्रत्ययः तद्व्यक्तित्वमादायापितदुपपद्यतइतितदतिरिक्तजातिकल्पनेप्रमाणाभावइत्यर्थः अस्ति
हुमितिघटत्वंजातिरितिप्रतीतिवत् गगनत्वंजातिरितिप्रतीतेरेवतस्यजातित्वसाधिकाभविष्यतीतिभावः ननुगगनत्वादेर्जातित्वेतत्राव्याप्त्यापत्त्यापू
र्वोक्तलक्षणस्यजातिलक्षणत्वासंभवइत्यतोलक्षणांतरमाहनित्यमितिसामान्येतिरूपादावतिव्याप्तिवारणायप्रथमसत्यंतंविशेषेऽतिव्याप्तिवारणायद्वि
तीयसत्यंतंरूपध्वंसादावतिव्याप्तिवारणायविशेष्यदलमितिवोध्यम् संमतिमाहेतिव्यक्तेरभेदस्सजातिवाधकत्वेप्राचामित्यादिः तथाचगगनत्वंनजाति
रितिप्रतीतेरेवप्राचांसंमतेतिभावः एकव्यक्तिकत्वमितिएकाश्रयकत्वमित्यर्थः आश्रयेएकत्वंचस्वसजातीयद्वितीयराहित्यं साजात्यंचतत्तदाश्रय
त्वेनननैवंसिद्धासिद्धाव्याघातः स्वाश्रयनिष्ठभेदाप्रतियोग्याश्रयकत्वंभेदश्चपूर्ववदेवव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनविशे
षणीयइतिध्येयं तुल्यव्यक्तिवृत्तित्वमिति अन्यूनानतिरिक्ताश्रयकत्वमित्यर्थः तथाचस्वनिष्ठजातितुल्याश्रयकत्वंस्वस्मिन् जातित्ववाधक
मित्यायातं तच्चनसंभवतिकलशत्वजातौस्वात्मकघटत्वतुल्याश्रयकत्वसत्वादित्यतोजातिवाधकशब्दस्ययज्जातौयज्जातितुल्याश्रयकत्वंतज्जा
तौतज्जातिभेदवाधकमित्यर्थपरतांसूचयतिजातीनांभेदइतिवाधकमितिपूर्वेणान्वयः नन्वेवंएकस्यैवजातिवाधकपदस्यक्वचिज्जातित्ववा
धकार्थकत्वस्यक्वचिज्जातिभेद ॥

रा॰॥ बाधकत्वार्थकत्वस्यचनसंभवःसकृदुच्चरितःशब्दइतिन्यायादित्यस्वरसादाहवस्तुतस्त्वितिपरस्परेति स्वसमानाधिकरणाभावप्रतियोगिजातिमन्निष्ठाभावप्रतियोगित्वंस्वस्यजातित्वेबाधकमित्यर्थः उभयसंबंधेनेति सामानाधिकरण्यसंबंधेनद्रव्यत्वविशिष्टे पृथिवीत्वादौद्रव्यत्वसमानाधिकरणाभावप्रतियोगित्वस्यैवसत्त्वाद्व्यभिचारवारणायस्वाभावसामानाधिकरण्यप्रवेशः जलत्वाद्यभावसमानाधिकरणेतत्रैवजलत्वसमानाधिकरणाभावप्रतियोगित्वस्यैवसत्त्वात्तद्दोषतादवस्थ्यमतःस्वसमानाधिकरणप्रवेशः नियमस्यभंगप्रसंगएवेति उक्तोभयसंबंधेनयज्जातिविशिष्टजातित्वंयत्रतत्रतज्जातिव्यापकत्वमितिनियमः दृष्टश्चासौपृथिवीत्वव्यापकेद्रव्यत्वादौएतादृशनियमभंगापत्तिरेवसांकर्यस्यजातित्वबाधकत्वेमानंसांकर्य्यस्थलेजातित्वस्वीकारेएतादृशनियमभंगापत्तिरितिभावः

दि॰॥ अनवस्थातुजातेर्जातिमत्वेयद्यपिनिखिलजातिष्वेकवैजात्यांगीकारेपि
तद्वैजात्येनवैजात्यांतरमेकव्यक्तित्वात्तथापिनिखिलजातिष्वेकंवैजात्यं
तद्वैजात्यनदाश्रयजातिषुपुनर्वैजात्यमेवमग्रेपीत्यनवस्थाबोध्यारूप॰
हानिः निःसामान्यघटितलक्षणव्याघातरूपाविशेषस्यजातिमत्वे॰॥ ॥

सांकर्य्यस्थलेएकमात्रस्यजातित्वेपिनैतादृशनियमस्यभंगइति मूर्तत्वंक्रियासमवायिकारणतावच्छेदकतयासिद्धाजातिरितिकेचनवदंतितादृशनियमेमानाभावादितिव्याप्तिग्राहकानुकूलतर्काभावादित्यर्थः एकव्यक्तिवृत्तित्वादितितथाचजात्यंगीकारेपिनानवस्थेतिभावः निस्सामान्यत्वघटितेतिनिस्सामान्यत्वेसतिसमवेतत्वंविशेषलक्षणंविशेषेजात्यंगीकारेतस्यव्याघातः विशेषावृत्तित्वंएतत्स्वविशेषत्वेजातित्वबाधकत्वांगीकारेविशेषेजात्यंतरनिरासादित्यभिप्रायेणजातिबाधकशब्दस्यविशेषेजातिमत्वबाधकतांसूचयतिविशेषस्यजातिमत्वइतिबाधकमितिपूर्वेणान्वयःएतच्चायानतःएकशब्दस्यएकदानानार्थकत्वासंभवेनविशेषवृत्तीनांजातित्वइत्यस्यैव वगुणगुचितत्वात् ॥

रा०॥ ननूक्तं विशेषलक्षणं ग्रंथकृतानोक्तमितितद्व्याघातस्य विशेषजातिमत्त्वबाधकत्वं नग्रंथकृदभिप्रेतं अन्यथा तादृशलक्षणाभिधान स्यग्रंथकर्तुरावश्यकत्वापत्तेः किंतु परमाणूनां परस्परभेदसिद्ध्यर्थमेव विशेषांगीकार इति वदतो मूलकारस्य भेदसाधकत्वमेव तल्लक्षणमि त्यभिप्रायो लभ्यते सचनसंभवति घटभेदसाधकपटत्वादावतिव्याप्तेः अतः स्वतो भेदसाधकत्वं तल्लक्षणमित्यर्थमूलतात्पर्यमंगीकरणीयं तथा चरूपहानिशब्दस्य तादृशव्याघातपरत्वे नैव युक्तेत्यभिप्रायेणाह यद्वेति स्वतः स्वेन रूपेण व्यावर्त्तकत्व भेदानुमापकत्वं विशेषस्य परमाणोपरमाण्वं तरभेदसाधने तद्व्यक्तित्वेनैव हेतुता वाच्या विशेषत्वेन हेतुत्वे परमाण्वंतरेपि विशेषांतरसत्वेन व्यभिचारित्वापत्तेः विशेषनिष्ठं तद्व्यक्तित्वं च तादात्म्य संबंधेन सैव व्यक्तिः अन्यस्य दुर्वचत्वात् तन्मात्रविषयकज्ञानव्यक्तेः तत्वे तादृशजन्यज्ञानव्यक्त्यभाव दशायां तद्व्यक्तौ तद्व्यक्तित्वं नास्तीति प्रत्य यापत्तेः तस्याश्चानवस्थाभयेन तन्मात्रविशेष्यकज्ञाने स्वरूपत एव प्रकारत्वमभ्युपगम्यते तथा च विशेषस्य स्वेन रूपेणैव भेदानुमापकता निर

दि०॥ रूपस्य स्वतो व्यावर्त्तकत्वस्य हानिः तत्र जातिस्वीकारे तयैव व्यावर्त्तकत्वं वाच्यं सामान्याश्रयस्य सामान्यरूपेणैव भेद साधकत्वनियमात् नच सामान्यरूपेण विशेषाणां भेदसाधकत्वं संभवति व्यभिचारात् तादृशनियमानंगीकारे परमा णुगतैकत्वानां तत्तद्व्यक्तित्वेनैव परमाण्वंतरभेदसाधकत्वसंभवेन विशेषस्य वैयर्थ्यप्रसंगादिति तु ज्यायः ॥ ९ ॥

बाधै वह्निदं च विशेषत्वस्य जातित्वेन संभवतीति विशेषस्य जातिमत्वे भवति तादृशलक्षणव्याघात इत्याह तत्र जातिस्वीकार इत्यादिना सामान्यरू पेणैवेति सामान्यावच्छिन्नमेवेत्यर्थः व्यावर्त्तकत्वं भेदसाधने हेतुत्वं नचैवं नियमे सति घटवानितरेभ्यो भिद्यते कंबुग्रीवादिमत्वादित्यनुमितिर्न स्यादिति वाच्यम् तादृशनियमवादिमते दृष्टत्वात् नचैवमपि महानसीयवह्निमत्त्वावच्छेदेन तदितरभेदसाधने महानसीयवह्निरेव हेतुर्वाच्यः म हानसीयत्वं च न सामान्यमिति कथमुक्तनियम इति वाच्यम् तस्य सामान्यत्वाभावेपि वह्नित्वस्य तथात्वेन व्यावर्त्तकतापाः सामान्यावच्छिन्नत्वनिय मात् अतः अथैवं रीत्यानंता विशिष्टविशेषत्वेन विशेषस्य हेतुत्वे विशेषस्य जातिमत्त्वेपि नोक्तनियमक्षतिरिति तथैव स्वीक्रियत इति चेत् न तस्य सत्ता रूपसमानाधिकरणव्याप्यतावच्छेदकधर्मांतरघटितत्वेन व्याप्यत्वावच्छेदकत्वासंभवादिति हृदयं ननूक्तनियमे मानाभावः तथा च विशेषस्य जा तिमत्त्वं स्वतो व्यावर्त्तकत्वेन बाधकमित्याशंकां निराकरोति तादृशनियमेति ज्याय इति ज्यायस्त्वं च मूलकृदभिप्रायानुसारित्वमेव बोध्यम् ॥ ॥

का० मु० रा०॥ प्रतियोगितेतिन त्वाभावत्वादेः जातित्वांगीकारे समवायेनैव नद्धत्वमंगीकार्यमुक्तलक्षणानुसारात् तथा चोक्तान्यतरसंबंधेन समवायाभावः
दि० रा० अभावादौ नोभयवादिसंमतः कथं तेन हेतुनाभावादौ जातिमत्त्वाभावः सिध्यतीति वाच्यम् समवायपदेन जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसम
३६ वायस्य विवक्षितत्वात् इत्थं च अनुयोगितासंबंधेन तादृशसमवायाभाववतिरूपादौ व्यभिचारवारणाय प्रतियोगित्वनिवेशः गगनादौ व्यभिचार
वारणायानुयोगितानिवेशः केचित्तु समवायपदं जातिप्रतियोगिकसमवायातिरिक्तसमवायपरमित्याहुः तदसत् ग्रंथकृता समवायैकत्वस्य
व्यवस्थापनीयतया जातिप्रतियोगिकसमवायेतरसमवायाप्रसिद्धेः जातिप्रतियोगिकत्वविशिष्टसमवायस्तु प्रतियोगितया जातावेव तिष्ठति नान्यत्र भू
तलवृत्तित्वविशिष्टघटस्य भूतलमात्रे सत्त्ववदिति नास्मन्मते समवायैक्यविरोध इति मंतव्यं अथैवमपि जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसम

दि०॥ असंबंधः प्रतियोगितानुयोगितान्यतरसंबंधेन समवायाभावः समवायाभावयोर्जातिमत्त्व इति तदपेक्षया चेति सत्तापेक्ष
याचेत्यर्थः सत्ताजातिश्च द्रव्यसत्गुणसन्नित्याद्यनुगतप्रतीत्यैव सिध्यति अत्र नव्याः सन्निति प्रतीतिविषयोभावत्वमेव अ

मु०॥ तदपेक्षयाचान्यासां जातीनामपरत्वम्॥८॥ १॥ व्यापकत्वात्पराऽपिस्याद्व्याप्यत्वादपराऽपि च॥

तएव सामान्यादिष्वपि सदिति व्यवहारः न त्वतिरिक्ता द्रव्यादित्रिकवर्तिनी सत्ताख्या जातिरिति तेन परमपरं द्विविधं सामान्यमप्रं
मत्तेति वैशेषिकविभागो निर्युक्तिकत्वादनादेय इत्याहुः॥ ११ वायस्य प्रतियोगितया अनुयोगितया च सत्त्वेन जातेर्जातिमत्त्वेऽपि निरुक्त
संबंधस्यैव बाधकत्वसनवादनवस्थायाः जातिबाधकत्वेनोक्तिविरुद्धेदिति चेत्सत्यं जात्यतिरिक्तेत्यत्र जातिपदस्यासमवेतवृत्तिजातिपरत्वे
न सत्तादौ तस्य जातिमत्त्वबाधकत्वे संभवेऽपि रूपत्वादौ तद्बाधकतायाः अनवस्थायामेवाभ्युपेतत्वात् न चासमवेतवृत्तीतिव्यर्थं अखंडाभाव
घटकतयात स्यार्थक्यात् वस्तुतस्तु अनुयोगितापदं सत्तावन्निष्ठोभयवादिसिद्धपक्ष समवायानुयोगित्वं तत्परमतस्समवायपदस्य यथा
श्रुतार्थकत्वेऽपि न क्षतिरिति ध्येयं भावत्वमेवेति न चैवमिह भूतले घटाभावोस्तीति प्रतीत्यनुपपत्तिः घटाभावे भावत्वविरहात् अस्धातोस्तु सा(?) मः
त्वबोधकत्वादिति वाच्यम् तदनुरोधेनापि कालसंबंधस्यैव सत्त्वरूपत्वौचित्यात् तावतापि सत्ताजातेरसिद्धेरिति भावः सत्ताजातिसिद्धेरिति ३६

रा॰॥ ननुप्रतियोगितयाध्वंसंप्रतिसमवायेनसत्वतःकारणत्वेगगनादीनांतदापत्तिरित्याशंकामपनेतुंतादात्म्येनसतःकारणतांग्राहयतियत्रेतिनचैता
दृशकार्यकारणभावानंगीकारेसामान्यादौध्वंसापत्तिरेवदूषणंएतादृशकार्यकारणभावस्वीकारेपिगगनादौतदापत्तिरशक्यपरिहारैवेतिवाच्यम्
कालिकसमवायोभयसंबंधस्यैवकारणतावच्छेदकताघटकत्वादितिभावः नचैवमपिमहाकालेप्रतियोगितयाध्वंसापत्तिःसमवायकालिकविशेष

दि॰॥ तन्नसत् ध्वंसकारणतावच्छेदकतयासत्ताजातिसिद्धेः यत्रप्रतियोगितासम्बन्धेनध्वंसोत्पत्तिस्तत्रैवतादात्म्यसंबन्धेनसदितिसा
मानाधिकरण्यप्रत्यासत्त्याकार्यकारणभावात् नचप्रागभावेव्यभिचारःप्रागभावेसत्ताविरहादितिवाच्यम् प्रागभाववृत्तिप्रतियोगिता
भिन्नप्रतियोगितायाःकार्यतावच्छेदकसम्बंधत्वादितिवस्तुतस्तुसमवायेनसत्तावच्छिन्नंप्रतितादात्म्येनद्रव्यत्वेनकारणतयाजन्यता

मु॰॥ पृथिवीत्वाद्यपेक्षयाद्रव्यत्वस्याधिकदेशवृत्तित्वाद्व्यापकत्वात्परत्वम् सत्तापेक्षयाल्पदेशवृत्तित्वाद्व्याप्यत्वादपरत्वम् विशे
षन्निरूपयति अंत्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः।१०।अन्तेऽवसानेवर्ततइतिअन्त्यः यदपेक्षयाविशेषोनास्ती
त्यर्थः घटादीनान्द्व्यणुकपर्यन्तानान्ततदवयवभेदात्परस्परम्भेदः परमाणूनाम्परस्परंभेदकोविशेषएवसतु॥ ११वच्छेदकत

यासत्ताजातिसिद्धिः तादृशकार्यकारणभावेमानाभावइतितुन स्वाश्रयसमवेतत्वसम्बन्धेननीलादेर्नीलादावपिसत्वात्तत्रनीलोत्पत्ति
वारणायतादृशकार्यकारणभावस्यावश्यकत्वात् नचस्वाश्रयसमवेतत्वविशिष्टद्रव्यत्वसम्बन्धेननीलादेर्हेतुतयैवननदापत्तिरिति
वाच्यम् तादृशसमवेतत्वद्रव्यत्वयोर्विशेषणविशेष्यभावेविनिगमनाविरहेणकारणतावाहुल्यापत्तेः कालिकसमवायोभयसं
बंधस्यकार्यतावच्छेदकतावच्छेदकत्वात्सत्तायानित्यसाधारण्येपिनक्षतिरित्यन्यत्रविस्तरः।८१॥ ११णताभ्यांतस्यापिसत्तावत्त्वादितिवा

च्यम् महाकालिकविशेषणतात्वेनकालिकविशेषणतायाःविशेषणीयत्वादेवमुत्तरत्राप्यनुसंधेयम् व्यभिचारइतिप्रतियोगितयाप्रागभावेध्वंसोत्पत्ते
तिशेषकार्यतावच्छेदकसंबंधत्वादितिप्रागभाववृत्तिप्रतियोगितासंबंधेनध्वंसंप्रतितुप्रागभावत्वेनहेतुत्वांतरमेवेतिभावः नचैतत्कार्यकारणभावस्य
प्रयोजनंप्रागभाववृत्तिप्रतियोगितासंबंधेनप्रागभावभिन्नेध्वंसापत्तिवारणमेवतथाचतुल्ययुक्त्याघटादिवृत्ति—प्रतियोगितासंबंधेनध्वंसंप्रतिघट

त्वादिनापिकारणत्वमावश्यकएवंचरूपमननत्कारण॥

का॰मु॰ दि॰रा॰ ३७

रा॰॥विरहादेवसामान्यादेर्ध्वंसापत्तिवारणात् उक्तकार्यकारणभावो निष्प्रामाणिक एवेत्यस्वरसात्कार्यतावच्छेदकतया सत्तां साधयति वस्तुतस्त्वित्यादिना विनिगमनाविरहेणेति स्वाश्रयसमवेतत्वद्रव्यत्वोभयसंबंधेनैव नीलादेः कारणतांगीकरणीयानातो विनिगमनाविरहापत्तिरिति वाच्यम् द्रव्यत्वस्य नीलादिप्रतियोगिकत्वे मानाभावेन तत्संसर्गकत्वासंभवात् विशिष्टस्य संसर्गत्वे तु विशेषणविधया प्रविष्टस्याश्रयत्वस्य नीलादिप्रतियो

दि॰॥स्वत एवेति स्वतो व्यावृत्तत्वञ्च स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयेतरभेदानुमित्यविषयत्वम् साजात्यञ्च पदार्थविभाजकोपाधिरूपेण तेन घटादेस्तादात्म्येन व्यावृत्तत्वेपि विशेषस्य गुणादिशून्यत्वेनेतरभेदानुमितिविषयत्वेपि द्रव्यादेरपि प्रमेयत्वादिना विशेषसजातीयत्वेपि न क्षतिः नित्यद्रव्यवृत्तिरिति विशेषाणां स्थानकथनन्न तल्लक्षणे प्रविष्टम्प्रयोजनाभावात् तत्र विशेषव्यावृत्तौ नन्वेतत्परमाणुत्वादयो व्यावर्त्तका भविष्यन्ति किं विशेषेणेति चेन्न अव्यावृत्तधर्मस्य व्यावर्तकत्वासंभवात् तत्र व्यावर्तका

मु॰॥स्वतस्स्व व्यावृत्तस्तेन तत्र विशेषान्तरापेक्षा नास्तीत्यर्थः।१।१०। समवायन्दर्शयति घटादीनाङ्कपालादौ द्रव्येषु गुणकर्मणोः तेषु जातेश्च सम्बन्धस्समवायः प्रकीर्तितः॥ ११॥

११ न्तरापेक्षायामनवस्थानात् ननु विशेषेप्येष प्रसंग इति चेन्न तस्य धर्मिग्राहकमानेन स्वतो व्यावृत्ततयैव सिद्धेः एवञ्च नित्यद्रव्येषु विशेषाः सिद्धाः तद्गुणास्तु न विशेषवंत आश्रयरूपेण विशेषेणैव तेषाम्व्यावृत्तत्वात् आश्रयस्य च विशेषवत्तया व्यावृत्तत्वेन विशेषत्वसम्भवादिति भावः ईश्वराकाशयोर्नित्यज्ञानशब्दाभ्याम्व्यावृत्तेः सम्भवान्न तत्र विशेष इत्यप्याहुः नवीनास्तु विशेषे ऽतिरिक्ते मानाभावः यथैव विशेषाणां स्ववृत्तिधर्मं विना व्यावृत्तत्वन्तथैव नित्यद्रव्याणामपीत्याहुः।१।१०॥

११ गिकतया तत्संसर्गत्वसंभवादिति भावः ननु सत्तायाः नित्यसाधारणत्वेन कथं कार्यतावच्छेदकत्वसंभव इत्याशंकां निराकुरुते कालिकेति ननु कालिकसमवाययोरुभयोः कार्यतावच्छेदकताघटकसंबंधत्वे गौरवादुक्तकारणस्य कार्यतावच्छेदकतया जन्यमात्रसमवेतैव सत्ता सिध्येत् ननु जन्यनित्यसाधारणी भवदभिमतसत्तेत्याशंकायामाह अन्यत्र विस्तर इति अयं भावः गगनादौ सत्तानंगीकारे द्रव्यत्वादिना सांकर्यप्रसंगः [illegible] जातिबाधकतायाः प्राचीनैरंगीकारादिति।८।१

रा॥स्वतो व्यावृत्तत्वं चेति विशेषस्यापि स्वलिंगकस्वसजातीयविशेषांतरभेदानुमितिविषयत्वादसंभववारणाय स्वभिन्नलिंगकेति घटो विशेषाद्भि
द्यते कपालसमवेतत्वादित्यनुमितेरपि विशेषभिन्नलिङ्गकत्वाद्विशेषसजातीयविशेषप्रतियोगिकभेदविधेयत्वाच्च तादृशानुमितिविषयत्वमा
दाय पुनस्तद्दोषतादवस्थ्यमतः स्वविशेष्यकेति भेदे स्वसजातियप्रतियोगिकत्वप्रवेशप्रयोजनं ग्रंथकृतैव वक्ष्यते ननु नञ्द्वयप्रवेशगौरवात्स्व
लिंगकस्वविशेष्यकस्वसजातीयेतरभेदानुमितिविषयत्वमेव स्वतो व्यावृत्तत्वं वक्तुमुचितं न तु यथोक्तमित्याशंकां निराकुरुते तेनेति तादात्म्येनाव्यावृत्त
त्वेपीत्यस्य घटादिनेत्यादिः नस्तितिरिति परेणान्वयः तथा च स्वतो व्यावृत्तत्वस्य स्वीकृतरूपत्वे घटादावपि तादात्म्येन घटहेतुकस्वसजातीयघटांतर
प्रतियोगिकभेदानुमितिविषयत्वेन तत्रातिव्याप्तिरेव स्यादिति भावः भेदे स्वसजातीयप्रतियोगिकत्वनिवेशस्य प्रयोजनमाह विशेषस्येति इतरभे
देति विशेषेतरद्रव्यादिभेद इत्यर्थः पदार्थविभाजकोपाधिरूपेण साजात्यप्रवेशस्य प्रयोजनमाह द्रव्यादेरपीति अथात्र स्वविशेष्यकत्वं परित्यज्या
नुमित्यविषयत्वमित्यत्रानुमित्यविशेष्यत्वमित्युक्त्यैव सामंजस्ये गुरुतरारंभो विफल एव तावतैव घटो विशेषाद्भिद्यते कपालसमवेतत्वादित्यनुमिति
मादायासंभववारणसंभवात् उक्तानुमितौ विशेषस्य मुख्यविशेष्यत्वाभावादिति चेन्न स्वत्वं हि नानुगतं किंतु तद्व्यक्तिपर्यवसन्नमेव तत्र च स्वपदेन वि
शेषोपादानं न संभवति विशेषे विशेषांतरभेदसाधने विशेषेतरलिंगाभावादप्रसिद्ध्यापत्तिः किंतु घटादिकमेव तत् तद्व्यक्तित्वेनोपादायलक्षणं संग
मनीयं तथा च स्वविशेष्यकेत्यनुक्तौ विशेषो घटाद्भिद्यते गुणत्वावच्छिन्नत्वादित्यनुमितेरपि घटभिन्नलिंगकत्वेन घटसजातीयप्रतियोगिकभेदविधे
यकत्वेन च तादृशानुमितौ विशेषस्य मुख्यविशेष्यत्वादसंभव एव स्यात् तदुपादाने तु तादृशानुमितेर्घटभिन्नलिंगत्वेपि घटमुख्यविशेष्यकत्वाभावेन तता
मुपादायनासंभव इति ध्येयम् न चैवमपि विशेषकालीनो घटो घटांतराद्भिद्यते एतत्कपालसमवेतत्वादित्यनुमितेरपि घटविशेष्यकत्वात् घटभिन्न
लिंगकत्वात् स्वसजातीयघटांतरभेदविधेयकत्वाच्च तद्विषयत्वस्यैव विशेषसत्त्वादसंभवे तादवस्थ्यमिति वाच्यम् अविषयत्वमित्यस्य मुख्यविशेष्य
ताशून्यतार्थकत्वात् इत्थं च स्वविशेष्यकत्वानुपादाने घटो विशेषाद्भिद्यते कपालसमवेतत्वादित्यनुमितिमादायासंभवासंभवेप्युक्तरीत्या घटादि
कमादायासंभववारणायैव स्वविशेष्यकत्वोपादानमिति मंतव्यं अनुमितिश्च मुख्यविशेष्यताद्रूपशून्यत्वेनापि विशेषणीया अन्यथा विशेषो घटा
द्भिद्यते घटश्च घटाद्भिद्यते गुणशून्यत्वात् घटत्वाच्चेति समूहालंबनानुमितिमादाय स्वपदेन घटव्यक्तिमादायासंभवप्रसंगात् यद्यपि समवायस्य प
दार्थविभाजकोपाधिरूपेण स्वसजातीयांतराभावेन स्वसजा ॥

का॰मु॰ रा॰॥ तीयभेदानुमितौ मुख्यविशेष्यत्वाभावेन समवाये विशेषलक्षणातिव्याप्तिः प्रसज्यते न च समवायेपि द्वित्वादिना समवायभेदसत्त्वात् तादृशभेदा
टि॰रा॰ नुमितिविशेष्यत्वस्य समवाये सत्त्वान्नातिव्याप्तिरिति वाच्यम् तथा सति विशिष्टेपि विशेषघटोभयभेदसत्त्वेन तादृशभेदानुमितिविशेष्यत्वमादाय
३८ संभवापत्त्या भेदे व्यासज्यवृत्तिधर्मानवच्छिन्न प्रतियोगिताकत्वविशेषणस्यावश्यकत्वात् तथापि तादृशानुमितिविषयोपः तद्भिन्नत्वे सति स्वभि
न्नस्वसजातीयकत्वस्य समवायभिन्नत्वस्य वा विशेष्यदलस्य प्रवेश्यत्वान्नातिव्याप्तिरिति ध्येयं अनुमितौ सिषाधयिषाजनकत्वमपि विशेषणं देयं अ
न्यथा विशेषेण परमाणूनां भेदसिद्धौ एतत्परमाणुसमवेतत्वादेः व्यावृत्तत्वेन सिषाधयिषया तेन लिंगेन विशेषे विशेषांतरभेदानुमितावपि नासंभवः
ननु अंत्यो नित्यद्रव्यवृत्तिरिति कारिकायां अंत्यत्वे सति नित्यद्रव्यवृत्तित्वं विशेषलक्षणमुक्तं तत्रांत्यत्वं स्वतो व्यावृत्तत्वमेव अंते व्यावर्तकानामवसा
ने वर्तत इत्यंत्यः इति व्युत्पत्त्या यस्य व्यावर्तकांतरं नास्ति तत्त्वमित्यर्थलाभात् स्वतो व्यावृत्तत्वस्यैव लक्षणत्वसंभवे नित्यद्रव्यवृत्तित्वमनर्थकं समवाय
स्यापि नित्यद्रव्यवृत्तितया समवायातिव्याप्तिवारकत्वस्याप्यसंभवात् न च वृत्तित्वं समवेतत्वमेव विवक्षितं तथा च समवायातिव्याप्तिवारकमेव तदिति वा
च्यं तथापि समवेतत्वमात्रेणैव तत्रातिव्याप्तिवारणसंभवे नित्यद्रव्यांशवैयर्थ्यस्य दुर्वारत्वादित्यभिप्रायेणाह विशेषाणां स्यानकथनमिति अव्यावृत्तध
र्मस्येति यस्माद्भेदसाधकत्वमभिमतं तद्वृत्तित्वेन अज्ञातधर्मस्येत्यर्थः व्यावर्तकत्वासंभवात् तदितरभेदसाधकत्वाभावादित्यर्थः तत्र एतत्परमाणु
त्वादौ व्यावर्तकांतरापेक्षायां एतत्परमाणुत्वे परमाण्वंतरावृत्तित्वसाधकहेत्वंतरापेक्षायां अनवस्थानात् अनवस्थानप्रसंगात् एष प्रसंग इति अन
वस्थाप्रसंगात्मकप्रसंग इत्यर्थः तस्य विशेषस्य धर्मिग्राहकमानेन परमाणुभेदः किंचिल्लिंगज्ञाप्यः भेदत्वात् कपालभेदज्ञाप्यघटभेदवदिति विशेषसा
धकानुमानेन स्वतः प्रमाणांतरनिरपेक्षं व्यावृत्ततयैव परमाण्वंतरावृत्तित्वरूपेणैव सिद्धेरिति अनुमितेरित्यर्थः परमाण्वंतरवृत्तिविशेषस्य परमाण्वंत
रभेदसाधकत्वाभावादिति भावः उपसंहरति एवं चेति आश्रयरूपेण रूपाद्याश्रयपरमाणुस्वरूपेणाविशेषेण व्यावर्तकेन ननु अव्यावृत्तस्य कथं व्याव
र्तकत्वमित्याशंकां परिहरति आश्रयस्येति न तत्रेति नेश्वरगगनयोरित्यर्थः विशेष इति नित्यज्ञानशब्दाभ्यामेव तयोरितरनित्यद्रव्यभेदसिध्या वि
शेषप्रयोजनाभावादिति भावः ईश्वरेत्याद्याहुरित्यंतमेकदेशिनां मतं तत्र च दिक्कालाकाशादीनां परस्परभेदसिद्धेः प्राक् नित्यज्ञानशब्दयोः कालादि
व्यावृत्तत्वासिद्ध्या न कालादिभेदसाधनं संभवति विशेषस्य तु धर्मिग्राहकमानेन तत्सिद्धाविशेषेणैव तत्साधनं संभवतीत्यस्वरससूचनायाहु रा॰म॰
रित्युक्तं यत्तु पार्थिवपरमाणुविशेषे जलपरमाणुविशेषभेदस्य पृथिवीसमवेतत्वेनानुमानासंभवात् स्वतो व्यावृत्तत्वस्य तत्रा॥ ॥ ॥ ३८

रा·॥ वस्यांगीकरणीयत्वात् दैशिकविशेषणतासंबंधावच्छिन्नत्वनिवेश आवश्यक एव अन्यथा घटादिनाशं प्रतिकालत्वेन जनकस्य घटादिनाशस्य प्रतियोगिनि घटादावेव अतिव्याप्तिरिति चेन्न दैशिकविशेषणतया घटादिनाशं प्रति तंतुसंयोगादिनाशस्य तेन संबंधेन कारणत्वे सहकारितंतुकपटस्थले पूर्वं च व्यभिचारस्य प्रदर्शितत्वेन प्रतियोगितया द्रव्यनाशं प्रति पूर्वोक्ततयानादृशसंबंधेन नाशत्वेनैव कारणता पाःवाच्यतया कार्यत्वकारणत्वयोर्दैशिकविशेषणतानवच्छिन्नत्वात् इदमुपलक्षणं रूपनाशजनकनाशप्रतियोगिनि घटादावप्यतिव्याप्तिर्द्रष्टव्येति विभावनीयं इत्यादिविशिष्येत्यादि निरूपकनिष्ठसमवायसंबंधावच्छिन्नकार्यतानिरूपितकारणताशालिरूपत्वं रूपासमवायिकारणलक्षणमित्यादीनां परिग्रहः पाकजरूपे चाग्निसंयोगे निमित्तंतत्वसमवायिकारणं नातस्तत्राव्याप्तिरिति भावः घटानारंभकतंतुद्वयसंयोगे अतिव्याप्तिं परिचिंत्य कारणत्वं पदार्थान्तरमिति मताभिप्रायेणाह अ

दि·॥ यत्तु कार्यनाशजनकनाशप्रतियोगित्वं तत्त्वमिति तन्न द्वित्वनाशप्रयोजकनाशप्रतियोगिन्यामपेक्षाबुद्धावतिव्याप्तेरिति अवयवमात्रसंयोगत्वं द्रव्यासमवायिकारणत्वमित्यादिविशिष्यैव लक्षणं निर्वाच्यम् अखण्डोपाधिरेव वा तदित्यन्ये भिन्नं कारणमिति अत्रे

मु·॥ आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः ॥ १८ ॥ ॥

दस्वोध्यम् समवायिकारणत्वासमवायिकारणत्वभिन्नकारणत्वमेव निमित्तकारणत्वं तेन तुरीपटसंयोगं प्रति तुरीतंतुसंयोगस्यासमवायिकारणत्वेपि न तस्य पटं प्रति निमित्तकारणत्वक्षतिरिति ॥ १८ ॥

९ खंडोपाधिरिति भिन्नं कारणमितीति ननु समवायिकारणासमवायिकारणभिन्नत्वे सति कारणत्वस्य निमित्तकारणलक्षणत्वे पटनिमित्तकारणे तुरीतंतुसंयोगेऽव्याप्तिः तस्य तुरीपटसंयोगासमवायिकारणत्वेन सत्यंतविरहात् न च तत्कार्यसमवायिकारणासमवायिकारणभिन्नत्वे सति तत्कार्यकारणत्वं तत्कार्यं प्रति निमित्तकारणत्वमिति विशिष्यैव लक्षणं वक्तव्यम् तथा च तुरीतंतुसंयोगस्य पटसमवायिकारणासमवायिकारणयोर्भिन्नत्वेन न तत्र पटनिमित्तकारणत्वानुपपत्तिरिति वाच्यं तथा सति ध्वंसं प्रति निमित्तकारणे प्रतियोग्यादावव्याप्तेः तस्य समवायिकारणासमवायिकारणयोरप्रसिद्धेरित्याशंकां निराकुरुते अत्रेद रामः

मित्यादिना समवायिकारणत्वसमवायसंबंधावच्छिन्नकार्यतानिरूपिततादात्म्यसंबंधा· ॥ ९ ॥

र॰॥ वच्छिन्नकारणत्वं असमवायिकारणत्वं ताद्दशकार्यतानिरूपितनिरुक्तान्यतरसंबंधावच्छिन्नकारणत्वमितिबोध्यम् ॥ १८ ॥ यत्कार्यंप्रतीत्यादेः य
थाश्रुतार्थकत्वे तद्व्यक्तित्वेन घटादिवि–षयकप्रत्यक्षव्यक्तिं प्रति पूर्ववृत्तितग्रहविशेष्यतावच्छेदकत्वस्यापि तद्व्यक्तित्वस्य स्वविषयकप्रत्यक्षत्वाव
च्छिन्नतद्व्यक्तिनिष्ठकार्यतानिरूपिताविषयविधयाकारणतातद्व्यत्वेन स्वविषयकप्रत्यक्षत्वावच्छिन्नं प्रत्यपि तद्व्यक्तित्वमन्यथासिद्धंस्यादित्याशंका
निरासायतदर्थमाह यद्धर्मावच्छिन्नमितितथा च तद्व्यक्तित्वस्य तद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नपूर्ववृत्तितग्रहविशेष्यतावच्छेदकत्वेपि न तद्व्य
क्तित्वविषयकप्रत्यक्षत्वावच्छिन्नपूर्ववृत्तितग्रहविशेष्यतावच्छेदकमिति तद्व्यक्तित्वस्य स्वविषयकप्रत्यक्षेत्यनेनान्यथासिद्धत्वप्रसंग इति भावः स्वतं

दि॰॥ यत्कार्यम्प्रतीति यद्धर्मावच्छिन्नम्प्रतीत्यर्थः येन रूपेणेति यद्रूपावच्छेदेनेत्यर्थः इत्यञ्च तद्धर्मावच्छिन्ननिरूपितनियत
पूर्ववृत्तितग्रहविशेष्यतावच्छेदकत्वे सति तद्धर्मावच्छिन्नम्प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नम्प्रति अन्यथासि

मु॰॥ इदानीमन्यथासिद्धत्वमेव कियत्तां तदाह येन सह पूर्वभावः यत्कार्यम्प्रति कारणस्य पूर्ववृत्ति
तायेन रूपेण गृह्यते तत्कार्यम्प्रति तद्रूपमन्यथासिद्धमित्यर्थः यथा घटम्प्रति दण्डत्वमिति द्वितीय
मन्यथासिद्धमाह कारणमादाय वा यस्य यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ नस्तः ॥ ९ ॥ ९ ॥

द्धत्वम्प्रथममित्यर्थः द्वितीयान्यथासिद्धदण्डरूपादिवारणाय सत्यन्तम् कपालसंयोगो घटपूर्ववर्त्तीत्यादिग्रहे कपालस्यापिता
द्दशविशेष्यतावच्छेदकत्वात्तत्रातिव्याप्तिवारणाय विशेष्यम् ॥ १९ तत्रेति अन्वयः स्वाधिकरणे कार्यसत्वं व्यतिरेकः स्वाभावाधिकरणे कार्यास
त्वम् अन्वयव्यतिरेकयोः स्वातंत्र्यं स्वभिन्नप्रकृतकार्यकारणान्वयव्यतिरेकाप्रयुक्तत्वं दंडत्वदंडरूपयोरन्वयव्यतिरेकौ स्वभिन्नदंडरूपकारणान्वय
व्यतिरेकप्रयुक्तौ स्वाश्रयाश्रयत्वसंबंधेन दंडत्वादिसत्वस्य दंडसत्वाधीनत्वात् तयोरन्यथासिद्धत्वमिति भावः तत्रातिव्याप्तिवारणायेति कपाले प्र
यमान्यथासिद्धत्वस्यातिव्याप्तिवारणायेत्यर्थः मूले कारणमादायेति स्वभिन्नकारणं गृहीत्वैवेत्यर्थः ॥ २० ॥ ननु अनन्यथासिद्धत्वशरीरे स्वभिन्नकार
णस्य कारणत्वेन प्रवेशे कारणत्वस्यानन्यथासिद्धत्वघटितत्वेन भवत्यात्माश्रय इत्यत आह कारणत्वं चात्रेति पृथगिति स्वाघटितसंबंधे ॥ ९ ॥

अन्यथासिद्धत्वशरीरे स्वभिन्नकारणस्य कारणत्वेन प्रवेशे कारणत्वस्यानन्यथासिद्धत्वघटितत्वेन भवत्यात्माश्रयः॥ आत्माश्रयत्वं चस्वापेक्षप्रसंगत्वम्॥१॥
अवच्छिन्नेति विशेष्यता विशेषणं स्वनिष्ठेति दंडरूपादिनिष्ठेत्यर्थः ग्रहेति दंडरूपं घटपूर्ववर्तीत्याकारकग्रहेत्यर्थः॥ टि०॥ टि०॥ २॥

का॰ मु॰ रा॰॥ नेत्यर्थः इदं च दंडादेरन्यथासिद्धत्ववारणाय कारणमादायेत्यस्य तत्कार्यकारणावच्छिन्नपूर्ववृत्तित्वग्रहविशेष्यत्वार्थकतया अग्रे वक्ष्यमाणतृतीया

टि॰ ए॰ न्य च कारणपदस्य निपतान्वयव्यतिरेकशाल्यर्थकतया दंडत्वस्यापि स्वाश्रयाश्रयत्वसंबंधेन तथाविधयावद्दंडस्यदण्डत्वावच्छिन्नघटपूर्ववर्तित्वग्रहविशेष्य

५२ त्वादिति पृथगित्युक्तं पृथगित्युक्तौ च दण्डत्वस्य दंडघटितपरंपरासंबंधेनैवान्वयव्यतिरेकशालित्वान्न दंडादेरन्यथासिद्धत्वमिति ध्येयं तत्कार्यकार

टि॰॥ किन्तु कारणमिति कारणत्वज्ञानात्पृथगन्वयव्यतिरेकशालित्वं तेन नात्माश्रयः स्यात्तथा च तत्कार्येण निरूपितान्वयव्यतिरेकशून्यत्वे सति तत्कार्यकारणावच्छिन्नस्वनिष्ठतत्कार्यनिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यताकं यत्त तत्कार्यं प्रत्यन्यथासिद्धमित्यर्थः कपालसंयोगो घटपूर्ववर्तीत्यादिपूर्ववृत्तित्वग्रहविशेष्यतायाः कपालसंयोगनिष्ठायाः कपालावच्छिन्नत्वात्कपालसंयोगे तिव्याप्तिवा

मु॰॥ किन्तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तं प्रति तदन्यथासिद्धम् यथा दण्डरूपं। तृतीयमाह अन्यम्प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम्।१९। अन्यम्प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यम्प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यम्प्रत्यन्यथासिद्धत्वम् यथा घटादिकम्प्रत्याकाशस्य तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात् तद्धि शब्दसमवायिकारणत्वम् एवञ्च तस्य शब्दम्प्रति कारणत्वं गृहीत्वैव घटादिकम्प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम्॥ १९ रणायसत्यन्तम् दण्डत्वादि

कारणायविशेष्यमिति अत्रेतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालित्वमित्युक्तौ प्रथमद्वितीयान्यथासिद्ध्योः सङ्ग्रहेपि भेदेनान्यथासिद्धिद्वयप्रदर्शनं शिष्यबुद्धिवैशद्यार्थमिति बोध्यम् अन्यम्प्रतीति फलाननुगुणमन्यम्प्रतीत्यर्थः तेन न कुलालजनके चतुर्थान्यथासिद्धाश्रये ऽतिव्याप्तिः शङ्क्यते शब्दाश्रयत्वेनेति अन्यम्प्रतीत्यादितृतीयान्यथासिद्धभावादिति भावः॥

१९ णेति यथाश्रुतमूलानुरोधात्तदवच्छिन्नान्वयव्यतिरेकशालिग्रहाधीनपूर्ववर्तित्वग्रहविशेष्यत्वस्य विशेष्यदलत्वे दंडत्वस्यापि द्वितीयान्यथासिद्धत्वापत्तिः दण्डत्वे पूर्ववर्तित्वग्रहस्यापि दंडग्रहाधीनत्वादिति तत्परित्यागः नत्तु प्रथमान्यथासिद्धिलक्षणे विशेषणं द्वितीयान्यथासिद्धिलक्षणे च विशेष्यदलं परित्यज्य उभयसाधारणमेकमेवान्यथासिद्धिलक्षणं कृतो न [illegible] नेतरेति॥ ए॰ मः ५२

ग०॥ इत्यनुमित्यात्मकेति इत्यादिन्यायप्रयोगप्रयोज्यानुमित्यात्मकेत्यर्थः कार्यकारणभावग्रहरूपेति कार्यकारणभावग्रहेण रूप्यं स्वरूपं यस्येत्यर्थः तेन शब्दो यदि द्रव्याश्रितो न स्यात् द्रव्यजन्यो न स्यादित्यनुकूलतर्कस्य कार्यकारणभावानात्मकत्वेपि न क्षतिः सहकृतेनैवेति अन्यथा गुणत्वमस्तु द्रव्याश्रितत्वं मास्त्विति अप्रयोजकत्वाशंकया गुणत्वेन द्रव्याश्रितत्वसिद्ध्यसंभवादिति भावः स्वर्गप्रतीति स्वर्गकामो यजेतेत्यादिविधिनेत्यादि ग्रंथकारानुरोधिनां केषांचिन्मतमुत्थापयति शब्दाश्रयत्वेति अष्टद्रव्येति पृथिव्यादिचतुष्टयं कालादिचतुष्टयं चेत्यष्टौ द्रव्याणि॥ ॥ अन्यं प्रतीति अन्यं प्रति पूर्वव

र्त्ति पञ्चमीति अवश्यक्लृप्तनियतपूर्ववर्त्तिन इत्यादिकेत्यर्थः यद्यपि शब्दो द्रव्यजन्यो जन्यगुणत्वादित्यनुमित्यात्मककार्यकारणभावग्रहरूपानुकूलतर्कसहकृतेनैव शब्दो द्रव्याश्रितो गुणत्वादित्यनुमानेन शब्दाश्रयत्वं गगने गृहीत्वा तेन रूपेण घटपूर्ववृत्तित्वं ग्राह्यम् तथा च शब्दपूर्ववृत्तित्वं गृहीत्वैव गगनस्य घटपूर्ववृत्तित्वग्रहात्तृतीयैवान्यथासिद्धिः सम्भवति तथाप्यन्यम्प्रति इत्यस्य यथाश्रुतार्थकत्वे ऽपूर्वम्प्रति यागस्यान्यथासिद्धिः स्यात्स्वर्गम्प्रति पूर्ववृत्तित्वं गृहीत्वैव गृहीतकारणत्वान्यथानुपपत्त्या यागव्यापारत्वे

मु०॥ ननु शब्दाश्रयत्वेन तस्य कारणत्वेकान्यथासिद्धिरिति चेत्पञ्चमीति गृहाण॥ ५॥ ६॥

नापूर्वकल्पनादतो ऽन्यम्प्रति पूर्ववृत्तित्वघटितरूपेण यस्य यज्जनकत्वन्तस्य तेन रूपेण तम्प्रत्यन्यथासिद्धत्वमित्येतावन्पर्यवसन्नं विवक्षणमावश्यकम् यागस्य स्वर्गपूर्ववृत्तित्वघटितस्वर्गजनकत्वेनापूर्वम्प्रत्यन्यथासिद्धत्वेपि यागत्वेन हेतुत्वे ऽन्यथासिद्ध्यभावात् एवञ्च शब्दपूर्ववृत्तित्वघटितशब्दजनकत्वेन गगनस्यान्यथासिद्धत्वेपि तद्घटितशब्दाश्रयत्वेन हेतुत्वे तृतीयान्यथासिद्ध्यसम्भव इत्यभिप्रायः शब्दाश्रयत्वाष्टद्रव्यातिरिक्तद्रव्यत्वादिना गगनस्य घटम्प्रति हेतुत्वेपि तृतीयैवान्यथासिद्धिः॥ तित्वं गृहीत्वैवान्यथासिद्धमिति पूरणीयं पूर्ववृत्तित्वानुपपादकमित्यत्र पूर्ववृत्तित्वं स्वनिष्ठत्वेन विशेषणीयं अन्यथा शब्दजनककवादिव्यापारं प्रति शब्दत्वकारणत्वेन गगनस्य अन्यथासिद्धत्वं न स्यात् तस्य कृतिनिष्ठशब्दपूर्ववर्त्तित्वघटकत्वात् स्वनिष्ठत्वोक्तौ च उक्तव्यापारस्य कृतिनिष्ठशब्दपूर्ववर्त्तित्वोपपादकत्वेपि आकाशनिष्ठशब्दपूर्ववर्त्तित्वानुपपादकत्वात् तं प्रत्यपि भवति गगनमन्यथासिद्धमिति ध्येयं बहूनां वर्णानामिति ६ ॥ ॥

४॥ त्यादिः गृह्यते इत्यनन्तरं तं प्रतितर

रा॰॥ ननु विशेषस्य कारणतावच्छेदकत्वेपि प्रत्येकं कत्वादिकमादाय विनिगमनाविरहो दुर्वारस्तथा च त्वस्य साक्षादाह वर्णानामिति कारणतावच्छेदकविशिष्टकारणत्वस्यैव कार्योत्पत्तिप्रयोजकत्वेन गगने ककारत्वादेरभावादेकशब्दानन्तरं सर्वशब्दानां तत्सापि शब्दान्तरस्याप्युत्पत्तिर्न स्यादिति भावः कारणतावच्छेदकोपलक्षित कारणत्वसत्तायाः कार्योत्पादप्रयोजकत्वे तु नैतद्दूषणमिति मन्तव्यं यद्यपि शब्दत्वावच्छिन्नं प्रति शब्दकारणत्वेन गगनस्य कारणत्वेपि नान्यथासिद्धिः शब्दस्य शब्दभिन्नत्वाभावात् तथापि स्वस्य स्वावच्छेदकत्वे आत्माश्रयापत्तिः कारणतावच्छेदकज्ञानस्य कारणताग्रहहेतुत्वादिति कत्वादेः कारणता

दि॰। अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव पूर्ववृत्तित्वानुपपादकं यं प्रति यस्य पूर्ववृत्तित्वं गृह्यते इत्यर्थो नापूर्वं प्रति यागस्यान्यथासिद्धिरित्यपि केचित् कत्वादिकमिति विनिगमनाभावेन बहूनां वर्णानां कारणतावच्छेदकत्वे गौरवाद्वर्णानामसार्वकालिकत्वाच्चाह विशे

मु॰॥ नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत् कत्वादिकं विशेषपदार्थो वेति। १९। चतुर्थमन्यथासिद्धमाह जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते यत्कार्यं जनकं प्रति पूर्ववृत्तितां गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तेन तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् यथा कुलालपितुर्घटं प्रति तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वेऽन्यथासिद्धित्वं कुलालत्वेन रूपेण जनकत्वे तु विशिष्टापत्तिः कुलालमात्रस्य घटं प्रति जनकत्वात् पञ्चममन्यथासिद्धमाह अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्ववर्तिनः॥ २०॥ ॥

षपदार्थो वेतीति। १९ यत्कार्यं जनकं प्रतीति अत्रापि अन्यं प्रतीत्याद्यभिधाने तृतीयचतुर्थान्यथासिद्धयोः सङ्ग्रहेपि फलानुगुणानतरङ्गस्तुल्ययोर्विशेषणयो रूपादाने नानयोर्भेदेनाभिधाने प्रयोजनाभावस्तथापि शिष्यबुद्धिवैशद्याय तथोक्तमिति॥ ॥ ६ ॥

वच्छेदकत्वानुधावनं अथ गगनत्वस्य अव्यवहितप्राक्क्षणावच्छेदेन घटाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वेपि रूपनियतपूर्ववर्तितावच्छेदकत्वमेव न संभवति गगनस्यावृत्तित्वेन घटाधिकरणे संयोगादिना तदभावसत्त्वादिति गगनस्य कारणतावारणायान्यथासिद्ध्युपपादनमनर्थकमिति चेन्न अवृत्तेरपि कालिकसंबंधेन वृत्तिता मते कालिकसंबंधेन गगनस्य नियतपूर्ववृत्तित्वसंभवादिति ध्येयं॥१९॥

रा॰॥अवश्यक्लृप्तेनेति यद्यपिगंधरूपयोः समानकालोत्पत्तिकत्वेनगंधरूपप्रागभावयोः तुल्यमवश्यक्लृप्तत्वंतथापिअभावज्ञानेप्रतियोगिज्ञानस्यकारणत्वेनगंधरूपकार्योपस्थित्यनंतरंगंधप्रागभावस्यैवशीघ्रमुपस्थितिःसंभवतिनतुरूपप्रागभावस्यतदुपस्थितेःरूपज्ञानसापेक्षत्वादित्युपस्थितिलाघवेनगंधंप्रतिगंधप्रागभावएवनियतपूर्ववर्तित्वेनअवश्यक्लृप्तःपाकजगंधरूपकार्योपस्थित्यनंतरंतुगंधरूपप्रागभावयोर्युगपदेवोपस्थितिःसंभवतिरूपपरावर्तकतेजःसंयोगस्यैवपाकपदार्थतयारूपावस्थितेरत्यावश्यकत्वात् तथाचापाकजस्थलेगंधंप्रतिअवश्यक्लृप्तनियतपूर्ववर्तिनागंधप्रागभावेनैवपाकजगंधोत्पत्तिसंभवेनंप्रतिरूपप्रागभावोऽन्यथासिद्धइतिपर्यवसितोर्थः घटजातीयमितिघट

दि॰॥अवश्यक्लृप्तेनिगन्धत्वावच्छिन्नम्प्रत्य वश्यक्लृप्तेनगन्धप्रागभावेनैवगन्धोत्पत्तिसम्भवेनतत्सहभूतरूपप्रागभावादिपाकजगन्धम्प्रत्यन्यथासिद्धम् एवंघटजातीयम्प्रत्यवश्यक्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेवघटोत्पत्तिसम्भवेरासभोन्यथासिद्धइत्यर्थः नन्ववश्यक्लृप्तनियतपूर्ववर्तिनापाकजरूपप्रागभावेनगन्धोत्पत्तिसम्भवेरूपप्रागभावेनगन्धप्रागभावस्यान्यथासिद्धिःस्यात्

मु॰॥अवश्यक्लृप्तनियतपूर्ववर्तिनएवकार्यसम्भवेतद्भिन्नमन्यथासिद्धमित्यर्थः

त्कारणत्वमवश्यक्लृप्तमित्युक्तौचात्माश्रयःस्यादितिचेदत्राहुःलघुत्वरूपमवश्यक्लृप्तत्वमिहबोध्यम् लघुत्वञ्च शरीरकृतमुपस्थितिकृतंसम्बन्धकृतञ्चतत्रप्रथममनेकद्रव्यत्वापेक्षयामहत्त्वेलघुत्वंहिती यम् गन्धम्प्रतिरूपप्रागभावापेक्षयागन्धप्रागभावेगन्धात्मकप्रतियोगिज्ञानसत्त्वेनशीघ्रतदुपस्थितेस्तृतीयम् दण्डत्वदण्डरूपाद्यपेक्षयादण्डेस्वाश्रयदण्डसंयोगादिघटितत्वेनतद्घटसजातीयंप्रतीत्यर्थः घटोत्पत्तिसंभवेनद्घटोत्पत्तिसंभवइत्यर्थः नन्वित्यादिगंधरूपयोःयुगपदु परम्परयागुरुत्वादिति त्पन्नत्वेनगंधप्रागभाववद्रूपप्रागभावोपिगंधनियतपूर्ववर्तित्वेनअवश्यक्लृप्तइतिरूपप्रागभावेनैवगंधप्रागभावोमतोनान्यथासिद्धइतिभावः यत्कारणत्वमितिअपाकजगंधस्थलेगंधंप्रतिगंधप्रागभावस्यैवहेतुताक्लृप्तानतुरूपप्रागभावस्य अतोरूपप्रागभावेनतपाकजगंधेगंधप्रागभावोऽन्यथासिद्धइतिभावःगुरुत्वादितीति इदमुपलक्षणंघटत्वावच्छिन्नंप्रतिनियतपूर्ववर्तिनावच्छेदकंदंडत्वादिकंकारण

रा॰॥ ननु तथाविधद्रव्यत्वादिकं कल्पनागौरवात् तथाहि नियतपूर्ववर्तितावच्छेदकद्रव्यत्वस्य घटकारणतारूपत्वे घटनिरूपितत्वविशिष्ट कारणतासंबंधोऽनंतपटादिद्रव्येषु कल्पनीयः दण्डत्वस्य तथात्वे दण्डमात्र एवेति द्रव्यत्वापेक्षया दंडत्वे कल्पनालाघवमित्यपि द्रष्टव्यम् ।२०

दि॰॥ ननु निबन्धान्तरे घन्यत्र क्लृप्तेनि दृश्यते तत्कथमत्रावश्यक्लृप्तेति तत्र मतस्तस्य फलमाह अत एवेति अन्यथा महत्त्वस्यानेकद्रव्यत्वादन्यत्र क्लृप्तनियतपूर्ववर्तित्वाभावेन तस्यान्यथासिद्धिर्महत्त्वेन न स्यादिति भावः अत्रानेकद्रव्यत्वन्नानेकद्रव्यसमवेतत्वं तस्य द्व्यणुकेपि सत्त्वेन द्व्यणुकप्रत्यक्षापत्तेः समवेतसमवेतद्रव्यत्वं तद्दित्यपि नाल्मनितस्याभावेनात्मप्रत्यक्षानुपपत्तेः किन्त्वणुभि

मु॰॥ अत एव प्रत्यक्षे महत्त्वं कारणमनेकद्रव्यत्वमन्यथासिद्धम् तत्र हि महत्त्वमवश्यक्लृप्तं तेनानेकद्रव्यत्वमन्यथासिद्धम् नच वैपरीत्ये किं विनिगमकमिति वाच्यम् महत्त्वजातेः कारणतावच्छेदकत्वे लाघवात् २० एतेन पञ्चान्यथासिद्धा दण्डत्वादिकमादिमं घटादौ दण्डरूपादि द्वितीयमपि दर्शितं ।२१। तृतीयन्तु भवेद्व्योम कुलालजनकोपरः पञ्चमो रासभादिः स्यात् यद्यपि यत्किञ्चिद्घटव्यक्तिम्प्रति रासभस्य नियतपूर्ववृत्तित्वमस्ति तथापि घटजातीयम्प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि सम्भवे रासभोऽन्यथासिद्ध इति भावः एतेष्वावश्यकस्त्वसौ ।२२। एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोन्यथासिद्ध आवश्यकः तेनैव परेषाञ्चरितार्थत्वात् तथाहि दण्डादिभिरावश्यक्लृप्तनियतपूर्ववृत्तिभिरेव कार्यसम्भवे दण्डत्वादिकमन्यथासिद्धम् नच वैपरीत्ये किं विनिगमकमिति वाच्यम् दण्डत्वस्य कारणत्वे दण्डघटितायाः परम्परायाः सम्बन्धत्वकल्पने गौरवात् एवमन्येषामप्यनेनैव चरितार्थत्वं सम्भवति ।२१।२२॥ ((त्व द्रव्यत्वमिति बोध्यं॥२०॥ अन्येषां दंडत्वदण्डरूपाकाशकुलालपितॄणाम् अनेन पञ्चमान्यथासिद्धेन चरितार्थत्वं सङ्गृहः अनियतरासभादेर्वारणाय नियतेत्यादिना नियतरासभादेः पञ्चमान्यथासिद्धत्वात्तेनैव वारणे नियतपदस्य व्यर्थमिति वाच्यम्॥ ((अनियतरासभादेरिति यद्यपीदं पुनरुक्तं घटत्वावच्छिन्नंप्रत्यनन्यथासिद्धे रासभेऽतिव्याप्तिवारणाय नियतेती तस्यापूर्वमुक्तत्वात्तथापि पूर्वमन्यंप्रति क्लृप्तनियतपूर्ववर्तिभिरेव कार्यसं- 

रा०॥ भवेनत्त्सहभूतमन्यथासिद्धमितिप्राचीनैर्निरूक्तायंचमाऽन्यथासिद्धिः घटत्वावच्छिन्नंप्रतिरासभस्यनसंभवतिघटत्वावच्छिन्नादन्यत्रक्लृप्तनि
यतपूर्ववर्त्तिभिः घटोत्पादासंभवादेवंरूपेणरासभस्यघटंप्रति अन्यथासिद्धत्वमुपपाद्यनियतेतिपदस्यसार्थक्यमुक्तंइदानींतुग्रंथकारैरतिरिक्तमथापि
पद्धवेन्नियतावश्यकपूर्वभाविनइत्येवपंचमान्यथासिद्धेर्निर्वचनात्तदनुसारेणरासभोपिघटत्वावच्छिन्नंप्रत्यन्यथासिद्धएवेतितद्वैयर्थ्यमित्याशंकांस
माधातुंपूर्वमुक्तस्यापिपुनरनुवादइतिमंतव्यम् रासभादेरित्यादिना घटादेः परिग्रहः नियतेत्यादेरित्यादिनापूर्ववर्त्तित्वपरिग्रहः तथाच घटंप्रतिघटत्वावच्छिन्नस्य

दि०॥ अवश्यक्लृप्तत्वस्यैकस्याभावेनयत्रयत्रप्रामाणिकानांनकारणत्वव्यवहारस्तद्भेदस्यनिवेशनीयतयागौरवमतोनियतपदेनै
वरासभादेर्वारणेतद्भेदस्याप्रवेशादित्यभिप्रायात् पूर्ववर्त्तित्वञ्चाव्यवहितपूर्ववर्त्तित्वं तेनव्यवहितपूर्ववर्त्तित्वव्युदासः अतएव
चयागादेः स्वर्गकारणत्वानुपपत्त्याऽपूर्वकल्पनयाऽपूर्वसम्बन्धेनाव्यवहितपूर्ववर्त्तित्वोपपादनंग्रन्थकृतांसङ्गच्छते अन्यथा
यागस्यापिनियतपूर्ववृत्तित्वाबाधेनापूर्वकल्पनन्नस्यादिति नचैतादृशस्यकारणत्वेव्यतिरेकव्यभिचारज्ञानस्यानियमाश्रग्र
हेग्राह्याभावावगाहितयाविरोधित्वेपि अन्वयव्यभिचारग्रहस्यकथंकारणतायहविरोधित्वमितिवाच्यम् अवश्यक्लृप्तेत्यादन्य
थासिद्धिज्ञानप्रयोजकत्वात् तदितरनिखिलतत्कार्यकारणसत्त्वेतत्कार्यव्यतिरेकोयद्व्यतिरेकात्तेनावश्यक्लृप्तेननियतपूर्वव
र्त्तिनान्यथासिद्धत्वज्ञानात् तव्याप्तुकारणत्वस्यानन्यथासिद्धनियतपूर्ववर्त्तितावच्छेदकधर्मवत्त्वेप्रतिबन्धकाभावस्यत
त्तद्व्यक्तित्वेनहेतुत्वापत्तिः यत्रनकारणत्वव्यवहारस्तत्तद्व्यक्तिभेदकूटवत्त्वन्तुसर्वज्ञेनैवज्ञेयम्॥ ११ पिव्यापकतयातत्रातिव्याप्ति
वारणायपूर्ववृत्ति त्वप्रवेशइतिभावः मिलितदलद्वयस्यतुघटाव्यवहितप्राक्क्षणावच्छेदेनघटाधिकरणवृत्त्यभावप्रतियोगितानवच्छे
दकधर्मवत्त्वमर्थइतिबोद्धव्यंएकस्याभावेनेतिनिरूपितंत्वेतत् ग्राह्याभावेतिकारणतावच्छेदकत्वेनाभिमतधर्मेकार्यसमानाधिकरणा
भावप्रतियोगितावच्छेदकत्वस्यैवव्यतिरेकव्यभिचाररूपत्वादितिभावः अन्वयव्यभिचारेतिव्यापकस्याधिकदेशवृत्तित्वेव्यापकत्वानपाया ११
दितिभावः अन्यथासिद्धत्वज्ञानादिति तथाचकारणताघटकअनन्यथासिद्धत्वांशज्ञानएवअन्वयव्यभिचारज्ञानस्यप्रतिबंधकत्वमितिभा

रा०॥ तत्तद्व्यक्तित्वेनेति दैशिकविशेषणतासंबंधावच्छिन्नमणित्वावच्छिन्नप्रतियोगिताकाभावस्य मण्यभावनिष्ठतद्व्यक्तित्वापेक्षया गुरुत्वेनान्यथासिद्धिनिरूपकत्वात् लाघवस्यैवान्यथासिद्धिनिरूपकत्वस्य तत्पर्यवसानेनाभावनिष्ठतद्व्यक्तित्वस्यैवान्यथासिद्धिनिरूपकत्वे सति नियतपूर्ववर्तितावच्छेदकत्वादिति भावः नचास्तु तद्व्यक्तित्वेन प्रतिबंधकाभावस्य कारणत्वं किन्नश्छिन्नमिति वाच्यम् दाहादिकं प्रति मण्यभावत्वादिना कारणतायाः सर्वैवादिसंमतायाः विलोपप्रसंगादिति भावः ग्रंथकारमते तत्र त्रेष्टापत्तिरेव शरणमिति द्रष्टव्यम् ननु कारणत्वं नोक्तरूपमंगीकरणीयं किंतु यद्यद्धर्मावच्छिन्नेन । कारणत्वव्यवहारः तत्तद्धर्मभिन्नधर्मस्यैव तथात्वमंगीकरणीयमतो नोक्तदोष इत्यत आह यत्रेति यद्धर्मावच्छिन्न इत्यर्थः भेदकूटवत्त्वमित्यस्यापि भेदकूटवद्धर्मवत्त्वमेवार्थः तेन तद्व्यक्तित्वावच्छिन्नभेदस्य प्रतिबंधकाभावत्वावच्छिन्नेऽसत्त्वेपि न क्षतिः सर्वज्ञेनैवेति कारणतावच्छेदकभिन्नसकलधर्माणां तत्तद्व्यक्तित्वेन अस्मदादीनां ज्ञानासंभवादिति भावः ननु यद्यद्धर्मावच्छिन्नेन कारणत्वव्यवहारः तत्तद्व्यक्तिभेदकूटवत्त्वसंबंधेन प्रकृतकार्यविशि

दि०॥ तत्तद्व्यक्तिभेदकूटवत्त्वसम्बन्धेन कार्यविशिष्टो यो धर्मस्तद्वत्त्वं तदित्यपि न युक्तम् तस्य सम्बन्धत्वसन्देहात् तस्मात्कारणत्वं पदार्थान्तरमेवेत्याहुः तदसत् कारणत्वस्यातिरिक्तत्वे दण्डादौ सर्वदा तत्प्रत्यक्षापत्तेः न चानन्यथासिद्धत्वे सतीत्यादिधर्मस्तद्व्यञ्जक इति वाच्यम् तादृशधर्मज्ञानस्यावश्यकत्वेन तस्यैव कारणताग्रहरूपत्वौचित्यात् अस्तु वा दण्डत्वादिकमेव कारणत्वं घटादिकार्यसम्बन्धितया तद्ग्रहे उक्तधर्मस्य व्यञ्जकत्वादिति ॥

११ष्टो यो धर्मस्तद्वत्त्वमेव कारणत्वमित्युक्तौ नैष दोषः विशिष्टबुद्धौ संसर्गज्ञानस्य अहेतुत्वेन पूर्वमनुपस्थितानामपि तत्तद्व्यक्तिभेदेन संसर्गघटकतया भाने बाधकाभावादित्याशंकां निराचष्टे तत्तद्व्यक्तीति तस्येति तादृशभेदकूट संत्यर्थः सर्वदेति कदाचिद्दंडादौ घटकारणताप्रत्यक्षानुरोधेन कारणतायां योग्यत्वस्यांगीकरणीयतया यदा दण्डप्रत्यक्षं तदा तद्गतघटकारणताया अपि प्रत्यक्षापत्तिरित्यर्थः स्वमते तु कारणताया व्यापकताज्ञाने च सहचारज्ञानव्यभिचारज्ञानाभावयोः कारणत्वेन तद्विलंबान्नैतदापत्तिरिति भावः तद्व्यंजक इति कारणताप्रत्यक्षजनकविषय इत्यर्थः तादृशधर्मज्ञानस्येत्यस्य कारणताग्रहात्पूर्वमित्यादिः ननु तादृशधर्मज्ञानस्य कार्यकारणताज्ञानार्थमपेक्षितत्वेपि न तस्य कारणतारूपत्वसंभवः उक्तदोषस्य तादवस्थ्यादाह अस्तु वेति पदार्थान्तरकल्पने गौरवादिति भावः ननु दंडत्वमः त्वस्य कारणतारूपत्वे पदा यदा दंडप्रत्यक्षं तदा तदैव घटकारणताप्रत्यक्षापत्तिः ॥ ५ ॥ ५५

रा॰॥ दंडसन्निकर्षे दंडत्वेपि तस्यावश्यकत्वादित्याशंकां निराकुरुते घटादिकार्यसंबंधितयेति घटादिनिरूपितत्वेनेत्यर्थः कार्येतिकार्यान्व
यव्यतिरेकौ कार्यप्रतियोगिकसंसर्गकार्यप्रागभावानधिकरणकालपूर्ववर्तित्वं तन्निष्ठध्वंसप्रतियोगित्वं तादृशपूर्वकालवृत्त्यन्वयव्यतिरे
कशालित्वं तद्व्यक्तिसंसर्गप्रतियोगित्वे सति तद्व्यक्तिप्रागभावप्रतियोगित्वं घटसंसर्गकालपूर्वकालवृत्तिसंसर्गप्रतियोगित्वे सति घटप्रागभावका
लपूर्वकालवृत्तिप्रागभावप्रतियोगित्वात् दण्डादेर्घटकारणत्वं अत्रच कार्यान्वयकालपूर्ववर्तित्वं तादृशकालकालव्यापकध्वंसप्रतियोगित्वं तेन न नस्वस्व

दि॰॥ परेतु कार्यान्वयव्यतिरेककालपूर्वकालान्वयव्यतिरेकशालित्वमित्यूचुस्तदयुक्तम् आत्मादेः सुखादिकारणे प्रागभावरूपव्य
तिरेकासम्भवेनाव्याप्तेः॥ २१। २२। मूले गुणकर्ममात्रवृत्त्यसमवायिकारणत्वमित्युक्तं तच्चायुक्तम् आत्मविशेषगुणेष्वव्याप्तेरतो वै
धर्म्यपरतया मूलमव्याचष्टे असमवायिकारणत्वमिति साधर्म्यप्रकरणे वैधर्म्यकथनमयुक्तमित्याशयादाह अथवेति सत्ताभिन्न

मु॰॥ समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयं स्यष्टम् गुणकर्ममात्रवृत्तित्रेयमथाप्यसमवायिहेतुत्वम्॥ २३॥ असम
वायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं नतु गुणकर्मणोः साधर्म्यमित्यत्रतात्पर्यम् अथवाऽसमवायिकारणवृत्ति
सत्ताभिन्नजातिमत्त्वं तदर्थस्तेन ज्ञानादीनामसमवायिकारणत्वविरहेपि नाव्याप्तिः॥ २३॥
॥ द्रव्यत्वरूपजातिमति द्रव्येऽतिव्या
प्तिवारणाय वृत्त्यन्तं तत्रैव सत्ताजातिमादाया तिव्याप्तिवारणाय सत्ताभिन्नेति तत्तत्रैव द्रव्यगुणान्यतरत्वरूपधर्ममादायातिव्या
प्तिवारणाय जातीति वृत्तित्वं जातिमत्त्वञ्च समवा॥ कारणतापत्तिः कार्यव्यतिरेककालपूर्वत्वं तु न तथाविधघटप्रागभावकालव्या
पकध्वंसप्रतियोगिकालाप्रसिद्धेः किंतु तादृशकालवृत्तिध्वंसप्रतियोगित्वमेव व्यतिरेकघटितदलप्रवेशस्तु दंडत्वगगनत्वादीनां कारणता
वारणायेति द्रष्टव्यं आत्मादावपि नि व्यतिरेकपदस्य दंडत्वादिवारणात्तु रोधेन प्रागभावपरताध्रौव्यादिति भावः इदमुपलक्षणं कार्यान्वयपूर्वका
लेकार्यप्रागभावाधिकरणकालप्रागभावानधिकरणत्वविशेषणमुपादाय व्यवहितपूर्ववर्तिनां वारणसंभवेपि दंडरूपरासभादीनां कारणत्वा
पत्तिरशक्यपरिहारैवएवं प्रागभावे कार्यप्रागभावपूर्वकालीनत्वस्य कस्यापि प्रागभावस्याव्यावर्तकतयानदेयत्वमेवेत्यपि द्रष्टव्यम्॥ २१।२२

का॰मु॰ रा॰॥ द्रव्येनातिव्याप्तिरिति तथा च जातिपदं वृत्तित्ववृत्तिमत्त्वयोः समवायेन लाभायैव अतोऽन्यतरत्वस्य तथात्वेपि न वैयर्थ्यमिति भावः॥२३॥ सम
दि॰रा॰ वायादिसंबंधेनेत्यस्य विवरणं सर्वाधारतेत्यादिकं आदिपदेन कालिकस्यापि ग्रहणसंभवात् कालिकसंबंधातिरिक्तेत्यत्र कालिकपदं दिग्विशेषणता
५६ याऽप्युपलक्षणं तस्यापि सर्वाधारताप्रयोजकत्वादिति बोध्यं दैशिकविशेषणताव्यावर्तनाय आह कालिकेति ननु मूले आश्रितत्वमिहोच्यत इत्यत्र इ
हेत्यस्य पूर्वपरामृष्टद्रव्यार्थकत्वेपि नित्यद्रव्यव्यतिरिक्तद्रव्यत्वं लक्ष्यतावच्छेदकमिति लक्ष्येन तथा च गुणादावप्याश्रितत्वसत्त्वात् भवत्यतिव्याप्ति
रित्याशंकां निराकुरुते अत्रेति तथा च इहेत्यस्य न्यायसिद्धान्त इत्येवार्थः वेदान्तिनामते तु नित्यज्ञानस्याप्यनाश्रितत्वाङ्गीकारात्तत्रातिव्याप्तिवारणाशंकानि

दि॰॥ येन विवक्षितं तेन न गुणादौ द्रव्यत्वस्य कालिकेन वृत्तित्वात् द्रव्यस्य च कालिके न गुणत्वादिमत्त्वाद्द्रव्येनातिव्याप्तिः॥२३॥ ननु गग
नादिकं सर्वदैवास्तीत्यादिव्यवहारात् नित्यद्रव्येष्वपि कालिकसम्बन्धेनाश्रितत्वसत्त्वादन्यत्र नित्यद्रव्येभ्य इति मूलमयुक्तमत आ

मु॰॥ अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते। नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं सा
धर्म्यमित्यर्थः आश्रितत्वन्तु समवायादिसम्बन्धेन वृत्तिमत्त्वम् विशेषणतया नित्यानामपि कालादौ वृत्तेः॥

ह आश्रितत्वमिति समवायादिसम्बन्धेन सर्वाधारतानियामककालिकसम्बन्धातिरिक्तसम्बन्धेन विशेषणतयेति कालिकविशेषणत
येत्यर्थः अत्र नित्यद्रव्यातिरिक्तत्वं लक्ष्यतावच्छेदकम् न च संयोगेन परमाणोरपि वृत्तेः परमाणावतिव्याप्तिः तत्संयोगस्य वृत्त्यनिया
रासायनतुपात्तमिति ध्येयम् परमाणोरपीति पतनप्रतिबंधकसंयोगस्यैव वृत्तिनियामकत्वेन गगनादेर्गुरुत्वाभावेनैव पतना ऽऽमकत्वादिति
नुपपत्त्या तत्संयोगस्य पतनप्रतिबंधकत्वाकल्पनेपि पार्थिवजलपरमाण्वोर्गुरुत्ववत्तया तस्य भूतलादिदेशसंयोगे पतनप्रतिबंधकत्वमावश्य
कमिति क्षित्यादिपरमाणोरपि संयोगो वृत्तिनियामक एवेति भावः वृत्त्यनियामकत्वादिति निजजन्यगुरुत्वस्यैव पतनकारणतया तदभावादेव परमा
णोः पतनासंभवेन तत्संयोगस्य पतनप्रतिबंधकत्वे मानाभावात् अन्यथा वाय्वादिप्रतिबंधकाभावदशायां सर्वेषामेव परमाणूनामधःपतनापत्ते राम
रिति भावः इदानीमिति तथा च द्रव्यातिरिक्तसाधारणसाधर्म्यप्रकरणव्यवच्छेदकसूचनाय तु शब्द इति भावः॥ २४॥ ॥ छ ॥ ॥ ॥ ५६

रा॰॥ धात्वर्थः क्रियेति धात्वर्थो हि क्रिया ज्ञेयाभाव इत्यभिधीयते इति हरिकारिकोक्तेरिति शेषः कर्मवत्त्वमितीति तथा च प्रकृते क्रियापदार्थो न धात्वर्थः अपि तु कर्मैवेति भावः वेग इव वेगवत् तस्य भावस्तत्त्वमिति व्युत्पत्त्या वेगसदृशत्वं वेगत्वमिति भ्रमं निरसितुमाह वेगसंबंधित्वमिति नतु न चेत्यादिना मूले परत्वापरत्वयोर्नीत्यादस्त त्राव्याप्त्याशंकनमनुचितं गुणांतरस्येव तयोरपि उत्पत्तिद्वितीयक्षण एव सर्वत्रोत्पत्तिसम्भवात् क्षणिकपदार्थत्वस्य च ग्रंथकारैरनंगीकारादित्याशंकां निराकुरुते दिक्कृतयोरिति इत्यपेक्षाबुद्धिरित्यत्र इति पदस्याप्यर्थकतयाइदमस्माद्विप्रकृष्टमिति बुद्धिसंग्रहः तेन परत्वं प्रतिसन्निकृष्टत्वज्ञानस्याहेतुत्वेपि न क्षतिः एवमुत्तरत्रापि बोध्यम् यद्यपि वाक्यात्संख्याविशेषाच्च साध्यो विभ्

दि॰॥ क्षित्यादीनान्नवानान्विति मूलस्थतुशब्देन सूचितमर्थम्प्रकटयति इदानीमिति॥ २४॥ ननु धात्वर्थः क्रिया तत्रातिप्रसङ्ग इत्यत आह कर्मवत्त्वमिति वेगवत्त्वं वेगसम्बन्धित्वं दिक्कृतयोः परत्वापरत्वयोर्हेतुरिदमस्मात्सन्निकृष्टमित्यपेक्षाबुद्धिः कालकृतयोः परत्वा

मु॰॥ इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते॥ क्षित्यादीनान्नवानान्तु द्रव्यत्वं गुणयोगिता॥ २४॥, स्पष्टम्॥ २४॥
क्षितिर्जलं तथा तेजः पवनो मन एव च परापरत्वमूर्तत्वक्रियावेगाश्रया अमी॥ २५॥ पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वम्मूर्तत्वं वेगवत्त्वं कर्मवत्त्वञ्च साधर्म्यम् न च यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यम्॥ ९

परत्वयोर्हेतुरयमस्माद्ल्पतरकालसम्बद्ध इत्यपेक्षाबुद्धिश्च यत्र नोत्पन्ना तत्र परत्वापरत्वयोरनुत्पादादव्याप्तिमाशङ्क्य निरस्यति न चेत्या

दिव्यय इत्याचार्यकारिकानुरोधेन परमाणुषु द्वित्वं ईश्वरापेक्षाबुद्धिजन्यमित्यवश्यमंगीकरणीयं तथा च नित्यापेक्षाबुद्ध्या सर्वत्र परत्वापरत्वयोरुत्पत्तिः संभवत्येव तथापि द्व्यणुकपरिमाणान्यथानुपपत्त्या परमाणुद्वित्वस्यावश्यकत्वेपि यादृशघटादौ परत्वापरत्वबुद्धिर्नानुभवसिद्धा तादृशघटादौ परत्वापरत्वयोः प्रमाणाभावाज्जन्यापेक्षाबुद्धिरेव परत्वापरत्वयोः कारणमित्याशयः अथवा दिक्पिंडसंयोगस्यापि परत्वापरत्वयोः कारणतया यादृशघटादेस्तृतीयक्षणे नाशस्तादृशघटेऽव्याप्तौ तात्पर्यम् तत्र परत्वापरत्वोत्पादक्षण एव आश्रयनाशेन तदुत्पादासंभवादिति भावः॥ ९॥

का॰ मु॰ रा॰॥ द्रव्यत्वान्यत्वेनापीति वस्तुतस्तु द्रव्यत्वव्याप्यत्वं प्रकृते द्रव्यत्वन्यूनवृत्तित्वमेव लाघवात् न च द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदक
दि॰ रा॰ त्वरूपं न द्रव्यत्वइति तदादायनातिव्याप्तिसंभवः न च गुणत्वादेरपि तथात्वात्तदादायैवातिव्याप्तिरिति शंकनीयं तेषां परत्वापरत्वसामानाधिकरण्यविरहा
५७ दितियुक्तमुत्पश्यामः अपकृष्टेतीति परमाणुपरिमाणस्य कुतोप्यपकृष्टत्वाभावात्तत्राव्याप्तिमाशंक्याह अविभुवृत्तीति अविभुवृत्तिसंयोगे तु वैजात्यम
गीकृत्य तादृशविजातीयसंयोगस्य वेगाद्यजन्यक्रियायां कारणत्वमंगीकृत्यापि विभौ क्रियावारणसंभवेन क्रियासमवायिकारणतावच्छेदकतया मूर्त
त्वजातिसिद्धेर् विनिगमकत्यस्वरससूचनायाह केचिदिति तच्चेतीति चकारसमुच्चयस्यार्थान्तरस्याभावात्तदैपर्थ्यमित्याशंकानिरासायाह चस्त्वर्थइति त्व

दि॰॥ आत्मन्यतिव्याप्तिवारणाय समानाधिकरणान्तम् तत्रैव सत्तामादायातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति द्रव्यत्वान्यत्वेनापि जातिर्वि
शेषणीया तेन न द्रव्यत्वव्याप्यद्रव्यत्वमादायातिव्याप्तिः अपकृष्टेति अविभुवृत्तिपरिमाणवत्त्वमित्यर्थः तेन परमाणौ नाव्याप्तिः क्रियाज

मु॰॥ परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् मूर्तत्वमपकृष्टपरिमाणवत्त्वम् तच्चैषामेव गग
नादिपरिमाणस्य कुतोप्यपकृष्टत्वाभावात् पूर्ववत्कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं वेगवत्त्वं वेगव
द्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वञ्च बोध्यम्॥ २५॥ कालखात्मदिशां सर्वगतत्वम्परमं महत्। कालाकाशात्मदिशां सर्वगतत्वमस
र्वमूर्तसंयोगित्वम्परममहत्त्वे च परममहत्त्वं जातिविशेषः॥ १जकतावच्छेदकतया मूर्तत्वं जातिरित्यपि केचित् तच्चेति निरुक्तमू

र्तत्वञ्चेत्यर्थः चस्त्वर्थे पूर्ववदिति परत्वापरत्वसमानाधिकरणेत्यादिकथितविवक्षितार्थवदित्यर्थः कालादौ स्पन्दाभावेनासम्भवमाशं
क्याह सर्वमूर्तेति॥ १ऐनचेत्यनेन विभुपरिमाणे पृथिव्यादिसमवेतत्वस्याव्यवच्छेदान्न तद्वैयर्थ्यमिति भावः कालादाविति सर्वगतत्वं सर्वमूर्तकर्मतेन स
र्वगतिमत्त्वरूपस्य सर्वगतत्वस्य क्रियारहितकालादावसंभवादिति भावः ॐ नतु परममहत्त्वस्य जातित्वमभिधाय तस्य कारणताद्यनवच्छेदकत्वेन तत्र जा
तित्वसाधकप्रमाणविरहे पा अपकर्षानाश्रयपरिमाणत्वं वा तदिति कल्पांतरमनुसृतं मूले तच्चायुक्तं आत्मगतपरिमाणे तादृशजातेः प्रत्यक्षसंभवेन प्रत्य ॥ रामः
क्षप्रमाणस्यैव तत्साधकस्य सत्त्वादित्याशंकां निरस्यति अदृमित्यादि महानित्यस्य परमेत्यादिः तेन महानिति प्रतीतौ परममहत्त्वस्याविषयत्वेपि न क्षतिः॥ ५७

रा॰॥ यद्यपीत्यादि नच परमाणुपरिमाणे अणुपरिमाणापेक्षया अपकर्षाभावेपि घटादिपरिमाणापेक्षया अपकर्षो वर्त्तत एव प्रत्यक्षसा
धनत्वतदसाधनत्वाभ्यां तयोरप्युत्कर्षापकर्षसंभवादिति वाच्यम् परिमाणनिष्ठोत्कर्षापकर्षयोः परिमाणविभाजकजात्याः स्वसजातीयपरि
माणावधिकत्वस्यैव नियमात् कथमन्यथा विभुपरिमाणे परमाणुपरिमाणापेक्षया नापकर्षः क्रियोपयोगित्वतदनुपयोगित्वाभ्यां तयोरप्यु
त्कर्षापकर्षयोः संभवादिति भावः उत्कर्षापकर्षौ गुणनिष्ठजातिविशेषौ अयमस्मादुत्कृष्ट इत्यादिप्रतीतिबलात्तयोरपि सावधिकत्वस्वी
कार इति बोध्यं महत्परिमाणवत्त्वमिति तथा च परमाणुपरिमाणे अपकर्षानाश्रयत्वेपि महत्त्वाभावादेव न परममहत्त्वमिति भावः॥२५॥ ब

दि॰॥ अत्र महत्त्वानितिप्रतीतिविषयपरममहत्त्वस्य गगनपरिमाणादिसाधारणस्य जातित्वसम्भवेप्यात्मपरिमाणमयोग्यमिति टीका
कृन्मतमनुसृत्याह अपकर्षेति यद्यप्यणुपरिमाणेषु द्व्यणुकपरिमाणमेवापकर्षाश्रयो न परमाणुपरिमाणमिति परमाणावति

मु॰॥ अपकर्षानाश्रयपरिमाणवत्त्वं वा क्षित्यादिपञ्चभूतानि पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम् तच्च
बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् अत्र ग्राह्यत्वं लौकिकप्रत्यक्षविषयत्वं स्वरूपयोग्यत्वं बोध्यम् ॥

व्याप्तिस्तथाप्यपकर्षानाश्रयमहत्परिमाणवत्त्वं बोध्यम्॥२५॥ बहिरिन्द्रियेति आत्मन्यतिव्याप्तिवारणाय बहिः पदं॥ ॥

हिः पदमिति मनोभिन्नत्वमेव बहिष्ट्वं ग्राह्यम् ग्राह्यजातीयेति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयजातिमदिति तदर्थः संयोगप्रत्यक्षे यावदा
श्रयप्रत्यक्षस्य कारणत्वेन तदभावात् कालसंयोगो न प्रत्यक्षविषय इति जातीयपर्यन्तानुधावनमावश्यकमिति आवश्यकं च ग्राह्यसजाती
यत्वविवक्षणमन्यथा परमाणुरूपादेरप्रत्यक्षतया तत्राव्याप्तिप्रसंगादिति भावः ※ वक्ष्यत इति बुद्ध्यादिषट्कमित्यादिकारिकयेति
शेषः द्रव्यत्वमादायेति यद्यपि विशेषगुणत्वं रूपाद्यन्यतमत्वमेवाग्रे वक्ष्यमाणं तत्र च विशेषत्वगुणत्वयोर्न घटकता तथाप्यत्र विशेषत्वसा
मान्यगुणभिन्नत्वेन तत्सहितगुणत्वमेव विशेषगुणत्वमित्यभिप्रायेण द्रव्यत्वस्यापि सामान्यगुणभिन्नतया तदादायातिव्याप्तिरभिहिता ॥

का॰मु॰ ए॰॥ नन्वेवमपि द्रव्यत्वे बहिरिंद्रियग्राह्यजातिविरहादेव तदादायनातिव्याप्तिरिति वाच्यम् द्रव्यत्वपदस्य द्रव्येतरासमवेतार्थकतया क्रियायांअपि
टि॰रा॰ तथात्वेन तामादाय मनस्यतिव्याप्तेरेव तात्पर्यविषयत्वात् अन्यतमत्वस्य भेदकूटावच्छिन्नप्रतियोगिताकभेदरूपस्य गुरुत्वेन सामान्यगुणभेदकू
५८ टवत्त्वे सति गुणत्वस्यैव लक्षणघटकतोचितेति भावः चक्षुरादेरिति यद्यपि चक्षुःसंयुक्तात्मसमवायस्य ज्ञाने सत्त्वात् लौकिकसन्निकर्षाभावादित्य
संगतं तथापि चक्षुःसंयुक्तयोग्यसमवायस्यैव सन्निकर्षत्वमावश्यकं अन्यथा परमाणौ चक्षुःसंयोगदशायां तत्समवेतद्रव्यत्वादिप्रत्यक्षापत्तेरिति आ

दि॰॥ बहिरिन्द्रियग्राह्यजातीयसंयोगादिमति कालादावतिव्याप्तिवारणाय विशेषेति विशेषगुणत्वञ्च गुणनिरूपणे वक्ष्यते द्रव्यत्व
मादायातिव्याप्तिवारणाय गुणेति लौकिकत्वनिवेशस्य फलमाह तेनेति ज्ञातो घट इति ज्ञाने च प्रकारीभूतज्ञानांशे न लौकिकविषयता
चक्षुरादेस्तत्र लौकिकसन्निकर्षाभावादिति भावः स्वरूपयोग्यताप्रवेशस्य फलमाह नवेति न तु परमाणुरूपादेर्योग्यत्वे कुतो न तस्य

मु॰॥ तेन ज्ञातो घट इति प्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात् तद्वत्यात्मनि नातिव्याप्तिः न वा प्रत्यक्षाविषयरूपादिमति
परमाण्वादावव्याप्तिः तस्यापि स्वरूपयोग्यत्वात् महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षत्वम् अथवा त्वग्राह्येति
विशेषगुणवत्त्वम्॥

॥ प्रत्यक्षमत आह महत्त्वेति लौकिकविषयतया द्रव्यसमवेतप्रत्यक्षे सामानाधिकरण्यसम्बन्धेन कारणस्य
महत्त्वस्य परमाणुरूपादावभावान्न तल्लौकिकप्रत्यक्षमिति भावः ननु चक्षुरिन्द्रियादिगतरूपादिविशेषगुणानामनुद्भूतत्वेन बहिरिन्द्रि
यग्रहणायोग्यत्वाच्चक्षुरादावव्याप्तिमाशंक्य लाघवाच्चाह अथवेति॥ त्मनोऽयोग्यत्वात् ज्ञाने न लौकिकसन्निकर्ष इति भावः महत्त्वेतीति न
तु घटरूपादौ महत्त्वाभावेऽपि तत्प्रत्यक्षदर्शनात् परमाणुरूपे तदभावेऽपि तत्प्रत्यक्षं स्यादित्याशंकां निरस्यति लौकिकेति ग्रहणायोग्यत्वादिति बहि
रिंद्रियजन्यलौकिकप्रत्यक्षं प्रति उद्भूतरूपत्वेनैव कारणतया कारणतावच्छेदकधर्मवत्त्वस्यैव योग्यतारूपत्वादिति भावः ननु बहिरिंद्रिय
जन्यलौकिकप्रत्यक्षस्वरूपयोग्यत्वेन लक्षणे निवेश्यते किंतु बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयगुणत्वन्यूनवृत्तिजातिमत्त्वमेव ल राम
क्षणघटकं तथा च तथाविधरूपत्वादिजातेः चक्षुरादिरूपेऽपि सत्त्वेन न चक्षुरादावव्याप्तिरित्यस्वरसादाह लाघवाच्चेति अथवेतीति । ५८

रा॰॥ नन्वत्रकल्पे आत्मावृत्तित्वं समवायेन आत्मवृत्तिज्ञानवच्छेदकधर्मवत्त्वमेव वक्तुमुचितं अन्यथातस्यात्मवृत्तिभिन्नत्वरूपत्वेसामान्यगुणभेदकूटरूपविशेषत्वनिवेशेनगौरवप्रसंगात् इत्थं चविशेषत्वनिवेशनंविनापिकालादावतिव्याप्तिवारणंसंभवतिकालादिनिष्ठसंयोगेतादृशधर्मवत्त्वाभावादितिविशेषत्वनिवेशनं अनर्थकमित्याशंकामपनेतुं तन्निवेशप्रयोजनांतरमाह अत्रेतिसमवायेनेतिबोध्यमितिशेषः अन्यथाकालिकदिक्कृतविशेषणताभ्यांस्पर्शवतोःकालदिशोरतिव्याप्तिप्रसंगादितिभावः॥ २६॥ द्रव्यत्वव्याप्येतीति यद्यपिद्रव्यत्वमपिद्रव्यत्वव्या

दि॰॥ अत्रकल्पे दैशिकपरत्वापरत्वमादायमनस्यतिव्याप्तिवारणायविशेषेतिस्पर्शवत्त्वम् समवायेनस्पर्शवत्त्वं॥ २६॥ द्रव्यसमवायिकारणेत्यादिसत्तादिकमादायगगनेतिव्याप्तिवारणायद्रव्यत्वव्याप्येति आकाशशरीरिणामितिमूलेशरीरिपदमात्मपरमित्यभिप्रा

म॰॥ चत्वारिस्पर्शवन्तिहीति॥ २६॥ पृथिव्यप्तेजोवायूनांस्पर्शवत्त्वम्॥ २६॥ द्रव्यारम्भश्चतुर्षुस्यादिति पृथिव्यप्तेजोवायुषुचतुर्षुद्रव्यारम्भकत्वम् नचद्रव्यानारम्भकेघटादावव्याप्तिःद्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्यविवक्षितत्वात् अथाकाशशरीरिणां अव्याप्यवृत्तिक्षणिकोविशेषगुण इष्यते॥ २७॥ आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं साधर्म्यमित्यर्थः आकाशस्यविशेषगुणःशब्दःसचाव्याप्यवृत्तिः यदाकिञ्चिदवच्छेदेनशब्दउत्पद्यतेतदान्यावच्छेदेनतदभावस्यापिसत्वात् क्षणिकत्वञ्चतृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्॥ ९॥ ९॥

येणाह आकाशात्मनामितिलक्ष्येलक्षणंयोजयितुंशब्दज्ञानादीनामव्याप्यवृत्तित्वंक्षणिकत्वञ्चोपपादयति आकाशस्येत्यादिना क्षणिकस्यविशेषगुणस्यानभ्युपगमादाह क्षणिकत्वञ्चेतिघटादिव्यावृत्तयेतृतीयक्षणवृत्तीति॥ ९ ध्वमित्युक्तदोषतादवस्थ्यं तथाप्यत्रापिपूर्वोक्तरीतिरनुसंधेया अतोनकश्चिद्दोषइतिध्येयं घटादिव्यावृत्तयइति क्षणिकविशेषगुणवत्त्वस्यलक्षणांतरतायाअंतेवक्ष्यमाणतयाध्वंसप्रतियोगिविशेषगुणवत्त्वस्यघटादावतिव्याप्तिःतन्निरासायेत्यर्थः॥ ःः॥ नचेदानीमपिपद्घटरूपादिकंतृतीयक्षणेनष्टंतत्रातिव्याप्तितादवस्थ्यमितिवाच्यम् अग्रेनश्यमानत्वात्॥ ९॥

रा॰॥द्वितीयक्षणवृत्तिरिति स्वद्वितीयक्षणवृत्तिरित्यर्थः इदंच अपेक्षाबुद्ध्यतिरिक्तस्थले तत्र तृतीयक्षणवृत्तिरित्येव वक्तव्यमिति बोध्यं तत्र तन्मूले स्वो
त्तरवर्त्तित्वस्य स्वाव्यवहितोत्तरवर्त्तित्वरूपत्वं अव्यवहितोत्तरत्वंच स्वोत्तरविशेषगुणानुत्तरत्वे सति स्वोत्तरत्वं स्वोत्तरत्वंच स्ववृत्तिप्रागभावप्रतियोगि
त्वमित्येकोक्त्यैवोभयसंग्रहः संभवतीति ध्येयम् अत्रच स्वरूपत्वेन स्वत्वस्याननुगतत्वेन तत्तद्व्यक्तिविश्रांत एव कार्यकारणभाव इति तत्तद्व्यक्ति
नाशं प्रति तत्तद्व्यक्तित्वेनैव कारणता युक्ता स्वद्वितीयक्षणवृत्तित्वादेरव्यावर्तकत्वात् अनंतकार्यकारणभावापत्त्या गौरवं चेत्याशयेनाह अत्र चेति
स्वाव्यवहितेति स्वप्रागभावाधिकरणकालप्रागभावानधिकरणत्वे सति स्वप्रागभावाधिकरणत्वं अव्यवहितपूर्वत्वं अत्र चापेक्षाबुद्धिद्वितीयक्ष

दि॰॥स्वोत्तरवृत्तीति स्वपदं नाश्यत्वाभिमतपरं तदुत्तरवृत्तिः तत्द्वितीयक्षणवृत्तिर्यो योग्यविशेषगुणस्तन्नाश्यत्वादित्यर्थः अत्र च यत्र
प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशस्तत्र स्वसामानाधिकरण्यस्वाव्यवहितपूर्ववर्त्तित्वोभयसम्बन्धेन योग्यविशेषगुण इति

मु॰॥ योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वात् प्रथमशब्दस्य द्वितीयशब्देन नाशः॥ ५॥ ५॥

सामानाधिकरण्येन नाशकत्वं बोध्यम् कार्यतावच्छेदके योग्यत्वानुपादाने प्रायश्चित्तादिजन्यादृष्टनाशे व्यभिचारः योग्यत्वंच लौकिकसा
क्षात्कारविषयनिर्विकल्पकान्यतरत्वमतीन्द्रियजातिशून्यत्वं वा रूपादिनाशे व्यभिचारवारणाय विभ्विति संयोगादिनाशे व्यभिचरवार



णोत्पन्नपुरुषांतरीयज्ञानादितृतीयक्षणे तन्नाशवारणाय स्वसामानाधिकरण्यप्रवेशः अपेक्षाबुद्धिद्वितीयक्षणे च तत्पुरुषस्य न योग्यविशेषगुणो
त्पाद इति सिद्धांतः ज्ञानादेः क्षणिकत्ववारणाय द्वितीयसंबंधप्रवेशः व्यभिचार इति अन्वयव्यभिचार इत्यर्थः ननु योग्यत्वस्य लौकिकप्रत्यक्षविषयस्व
पत्वे न निर्विकल्पकस्य स्वोत्तरोत्पन्नज्ञानादिना नाशो न स्यादित्याशंकामपनेतुं योग्यतां निर्वक्ति योग्यत्वंचेति लाघवादाह अतींद्रियेति निर्विकल्पकत्वं तु
न जातिः निष्प्रकारकज्ञानस्यैव निर्विकल्पकत्वात् ज्ञानत्वं तु नातींद्रियमिति भावः रूपादिनाश इति अत्र व्यभिचारपदं व्यतिरेकव्यभिचारपरं रूपस
त्वे रूपांतरानुत्पत्त्या अन्वयव्यभिचारासंभवात् एवमुत्तरत्रापि पाकजन्यरूपादिना घटवृत्तिगगनादिसंयोगस्य नाशानुत्पादाद्व्यभिचारो बोध्यः॥ 

"मुद्रित[illegible]भावेन तथाप्यदृष्टे व्यभिचारात्" इति पाठः स्यात्तदा तु" 
तत्पूर्वपंक्तौ लौकिकसाक्षात्कारविषयनिर्विकल्पान्यतरत्वं नत्वतींद्रियजातिशून्यत्वम् इति पाठोऽपेक्षः॥ टि॰टि॰७

रा०॥ व्यधिकरणानामिति एतच्च समानाधिकरणगुणानामेव नाशकत्वमिति वस्तुगतिमनुरुध्योक्तं व्यधिकरणेच्छया शब्दनाशेपि तस्य द्विक्षणावस्था
यित्वनिर्वाहे चेष्टापत्तिसंभवात् परं तु अस्मदुक्तैव व्याप्तिरिति ध्येयं उत्पत्तिकालिकेच्छादिनेति पूर्वक्षणोत्पन्नेच्छादिनेत्यर्थः यद्यपि स्वस्यैव स्वनाशकत्वा
पत्तिरेव वक्तुमुचिता तथापि स्वाव्यवहितपूर्ववर्तित्वस्य गुरुत्वेन तत्स्थाने स्वभिन्नत्वमेव निवेश्य स्वस्य स्वनाशकत्ववारणसंभवादेतावत्पर्यंतानुधावनमितिम
न्तव्यं अपेक्षाबुद्धिनाशं प्रत्यपि तृतीयक्षणोत्पन्नद्वित्वनिर्विकल्पकव्यक्तीनां तत्तद्व्यक्तित्वेन कारणत्वेन अनंतकार्यकारणभावापत्त्या गौरवात्तत्रैककारण
तायाः अपि वक्तुं शक्यत्वेन गौरवस्वीकारानौचित्यादित्याशयेनाह अपेक्षाबुद्धेस्त्विति एकस्मिन् क्षणे नानाविशेषगुणव्यक्तीनां नाशे न तत्तद्व्यक्तिनाशं प्रति

दि०॥ कारणतावच्छेदके योग्यत्वविशेषत्वयोरुपादानान्न द्वितीयक्षणोत्पन्नादृष्टसंयोगादिना तृतीयक्षणेऽपेक्षाबुद्धिनाशः सामानाधिकर
ण्यसम्बन्धनिवेशान्न शब्दादिना व्यधिकरणानां ज्ञानेच्छादीनां नाशः स्वाव्यवहितपूर्ववृत्तित्वनिवेशाच्च न ज्ञानादिना उत्पत्तिकालि

मु०॥ एवं ज्ञानादीनामपि ज्ञानादिकं यदात्मनि विभौ शरीरावच्छेदेनोत्पद्यते तदा घटाद्य
वच्छेदेन तदभावोऽस्त्येव एवं ज्ञानादिकमपि क्षणद्वयावस्थायि॥

केच्छादीनां नाशः केचित्तु स्वत्वस्य तत्तद्व्यक्तिपर्यवसायितया तत्तद्गुणस्य तत्तद्गुणो नाशकः अपेक्षाबुद्धेस्तु द्वित्वप्रत्यक्षमित्याहुः॥

तत् तद्व्यक्तित्वेन कारणत्वकल्पनं बहुतरादिकार्य्यकारणभावाधिक्यसंपादकं अतो लाघवेन तत्तत्क्षणोत्पन्नयोग्यविभुविशेषगुणनाशं प्रति तत्क्षणोत्तर
क्षणवृत्तित्वविशिष्टगुणत्वेनैव कारणता वक्तुमुचितेत्याशयेनाह एतत्क्षणोत्पन्नेति नन्वेवमपेक्षाबुद्धेरपि स्वद्वितीयक्षणवृत्तिगुणेन नाशापत्तिस्तथा च
द्वित्वनिर्विकल्पकक्षण एवापेक्षाबुद्धिनाशे चतुर्थक्षणे द्वित्वनाशाद्विषयाभावेन तत्क्षणे द्वित्वविशिष्टप्रत्यक्षानुपपत्तिरित्यत आह अपेक्षाबुद्धी
त्यादि॥ ॐ॥ विशेषसामग्रीति तथा च विशेषसामग्रीसहितायाः एव सामान्यसामग्र्याः कार्यं पिधायकतया सामान्यसामग्रीसत्त्वेपि द्वित्वप्रत्यक्षरूप
विशेषकारणाभावान्न तृतीयक्षणे नापेक्षाबुद्धिविनाश इति भावः नन्वेवं प्रथमकल्पे यज्ज्ञानानंतरं मुक्तिस्तादृशज्ञानानंतरं तदात्मनि ज्ञानाद्य
नुत्पत्त्या तन्नाशानुपपत्तिः तद्व्यक्तित्वेन स्वस्यैव नाशकत्वे तस्य क्षणिकत्वापत्तिः यदि च तदनंतरमपि॥

कामु रा॰॥ अत्र घटादिसंयोगोत्पत्त्यानंतरमेव नाशकमित्युच्यते तथापि महाप्रलयपूर्वद्वितीयक्षणोत्पन्नचरमात्मसाक्षात्काराद्वितीयक्ष[illegible]गुणोत्पादसीका
दि॰स रक्षणिकगुणानंगीकारेण तृतीयक्षणे महाप्रलयानुपपत्तेस्तन्नाशकं दुर्लभमेवनचचरमात्मसा[illegible] दृष्टमात्रनाशे[illegible] [illegible]वेन महाप्रल
६० यानुपपत्तिरिति वाच्यम् महाप्रलयानुरोधेन तत्क्षणस्यैव तज्जनकादृष्टनाशे प्रतिबंधकत्वोपगमा[illegible] [illegible] आह चरमज्ञानादिकं त्विति अत्र कार्य

दि॰॥ एतत्क्षणोत्पन्नयोग्यविभुविशेषगुणत्वेन नाश्यता एतत्क्षणोत्तरक्षणवृत्तित्वविशिष्टयोग्यविभुविशेषगुणत्वेन नाशकता अपे
क्षाबुद्धिनाशे तु द्वित्वप्रत्यक्षविशेषसामग्री तेनापेक्षाबुद्ध्युत्तरक्षणे सामान्यसामग्रीसत्त्वेपि न क्षतिः चरमज्ञानादिकं तूत्तरक्षणवृत्ति
त्वविशिष्टस्वयमेव नाशकं एतत्क्षणोत्पन्नसकलविशेषगुणासाधारणं चेदमित्यप्याहुः शब्दस्याव्याप्यवृत्तित्वक्षणिकत्वे उपपाद्य
ज्ञानादीनामपि ते उपपादयति एवमिति क्षणिकपदस्यैव यथोक्तलक्षणद्वयाभिप्रायेणार्थमाह इत्यन्वेति अव्याप्यवृत्तीत्युक्तमि

मु॰॥ इत्यत्राव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वञ्चार्थः पृथिव्यादेरूपादिर्विशेषगुणोस्तीत्य
तोऽव्याप्यवृत्तीत्युक्तम् पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीति विशेषगुणेत्युक्तम्॥ ९ ॥

ति न च रूपादीनामपि कालिकाव्याप्यवृत्तित्वात्कथं तद्वारणमिति वाच्यम् अव्याप्यवृत्तिपदेन दैशिकाव्याप्यवृत्तित्वस्योक्तत्वात् वि॰
शेषगुणेत्युक्तमिति विशेषगुणाश्च बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः अदृष्टभावनाशब्दा अमी वैशेषिका गुणा इति
वक्ष्यमाणास्तल्लक्षणन्तु गुणनिरूपणे वक्ष्यते यत्तु अव्याप्यवृत्तिविशेषगुणवत्त्वमीश्वरेऽव्याप्तं तद्गुणानां व्याप्यवृत्तित्वादिति त
न्न अव्याप्यवृत्तिपदेनाव्याप्यवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्॥ ९ ॥

॥ कारणाभावानंत्यप्रयुक्तगौरवं आहुरि
त्यनेन सूचितम् व्याप्यवृत्तित्वादित्येतीति ईश्वरस्य शरीरविरहेण तदवच्छिन्नत्वासंभवादिति भावः॥ ❀ ॥ न क्षतिरिति नासंभव इत्यर्थः चतुःक्षण रामः
वृत्तीत्यस्य फलमाह तृत्यं तं चेति ज्ञानत्वस्य संग्रहो न स्यादित्यनेन ज्ञानत्वमादायात्मनि लक्षणसमन्वयायैव तृतीयक्षणवृत्तित्वमुपेक्षितम्॥ ६०

रा॰॥ इच्छात्वमादायैवलक्षणसमन्वयसंभवेनत्रिक्षणावृत्तीत्यपिशक्यतेवक्तुमितिसूचितं यथाश्रुतार्थकत्वाभिप्रायेणेतिस्वावच्छिन्नज्ञानादिमन्त्संबंधेनशरीरविशिष्टार्थकत्वाभिप्रायेणेत्यर्थः॥ २७॥ मूलस्यन्यूनतामपनेतुमाह पतनवत्त्वमितीति बोध्यमित्यस्यक्षितिजलयोः साधर्म्यमित्यादिः प

दि॰॥ चतुःक्षणवृत्तीतिचतुःक्षणवृत्तीनियानिजन्यानिघटादीनितद्वृत्तिर्याजातिर्ज्ञानत्वादिस्तद्वान्विशेषगुणोज्ञानादिस्तद्वत्त्वस्यात्मादौसत्वाल्लक्षणसमन्वयः अत्रवावृत्तित्वंसमवायेनविवक्षितम् तेनजन्यमात्रेकालिकेनज्ञानत्वस्यवृत्तित्वेपिनक्षतिः वृत्यन्तञ्चज्ञानत्वादेर्जन्यवृत्तित्वात् असम्भववारणायतदर्थत्वादिति॰ क्षणिकविशेषगुणवत्त्वार्थत्वादित्यर्थः ननुत्रिक्षणवृत्तित्वमुपेक्ष्यचतुःक्षणवृत्तित्वपर्यन्तानुधावनेप्रयोजनाभावः नचत्रित्वचतुष्ट्वयोर्लाघवगौरवविरहेणचतुष्ट्वोपादानेइच्छैवनियामिकेतिवाच्यम् प्रथमोपस्थितत्

मु॰॥ नचरूपादीनामपिकदाचित्तृतीयक्षणेनाशसम्भवात् क्षणिकविशेषगुणवत्त्वंक्षित्यादावतिव्याप्तमितिवाच्यम्चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्यतदर्थत्वात् अपेक्षाबुद्धिःक्षणत्रयंतिष्ठतिक्षणचतुष्टयन्तुनकिमपिजन्यज्ञानादिकन्तिष्ठतिरूपत्वादिकन्तुक्षणचतुष्टयस्थायिन्यपिरूपादौवर्त्ततेइतितद्व्युदासईश्वरज्ञानस्यचतुःक्षणवृत्तित्वात् ज्ञानत्वस्यतद्वृत्तित्वाज्जन्येत्युक्तम् यद्वाकाशजीवात्मनोःसाधर्म्यंतदाजन्येतिनदेयम्॰॥

त्वरूपलाघवस्यत्रित्वेसम्भवादत आह अपेक्षाबुद्धिरितितथाचत्रिक्षणवृत्तिक्षणावृत्तित्वस्यप्रवेशेज्ञानत्वस्यसङ्ग्रहोनस्यादितिभावः चतुःक्षणवृत्तिजन्यावृत्तीत्यस्यफलमाह रूपत्वादिकन्त्विति तद्व्युदासःरूपत्वजातिव्युदासः तथाचरूपत्वजातिमद्विशेषगुणवतिघटादौयातिव्याप्तिःसानिरस्तेतिभावः जन्येत्यस्यफलमाह ईश्वरेतिशरीरिणामित्यत्रमूलेशरीरिपदस्ययथाश्रुतार्थकत्वाभिप्रायेणाह यद्वाकाशजीवात्मनोरिति॥ ॰॰तनत्वंनिर्वक्तिगुरुत्वेति नचपरमाणूनांसर्वदापतनापत्याप्रकृष्टगुरुत्वस्यैवपतनासमवायिकारणत्वेनांगीकरणीयतयापरमाणौतदभावेनपतनासंभवादव्याप्तिरितिवाच्यम् पतनवृद्धवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्यविवक्षणीयत्वादितिभावः॥ १॥

रा॰॥ नन्वेवमप्युल्कापततीतिप्रयोगानुपपत्तिः तेजोरूपोल्कायांगुरुत्वाभावेनपतनासंभवादित्यत आह उल्केति लाक्षणिकइतिगमधात्वर्थ इ॰
त्यादिः लाघवमभिप्रेत्याह वस्तुतस्त्विति जातिविशेषएवेति गुरुत्वजनकताऽवच्छेदकतयैवतत्सिद्धिरितिभावः॥२८॥ ननुमूलेयदुक्तंपस्यसाधर्म्यं

दि॰॥ ननुजन्यत्वाप्रवेशेज्ञानत्वेच्छात्वप्रयत्नत्वजातीनाञ्चतुःक्षणवृत्त्यवृत्तित्वाभावात्कथंलक्षणसमन्वयइत्यत आह द्वेषत्वादिकमि
ति आदिनाशब्दत्वपरिग्रहः विशेषपदस्यकृत्यमाह परममहत्त्वस्येति नाद्दशगुणत्वादितिचतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वादि
त्यर्थः ननुपरममहत्त्वत्वन्नजातिः किन्त्वपकर्षानाश्रयपरिमाणत्वमित्युक्तम् तथाचकथन्तदादायातिप्रसङ्ग इत्यत आह चतुर्थक्षणे
द्वित्वादीनामिति यद्वा ननुजन्यपदानुपादाने परममहत्त्वस्यचतुःक्षणवृत्तिवृत्तित्वान्नपरममहत्त्वमादायकालादावतिव्याप्तिरत आ

मु॰॥ द्वेषत्वादिकमादायलक्षणसमन्वयात् परममहत्त्वस्यनाद्दशगुणत्वाच्चतुर्थक्षणेद्वित्वादीनांनाशाभ्युपगमात् द्वित्वा
दीनामपितथात्वात्तद्वारणायविशेषेति त्रिक्षणवृत्तित्वंवावक्तव्यम् इच्छात्वादिकमादायात्मनिलक्षणसमन्वयः॥२८॥ रू
पद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः पृथिव्यप्तेजसांरूपवत्त्वंद्रवत्वंप्रत्यक्षविषयत्वञ्चेत्यर्थः नचचक्षुरादीनांभर्जनकपा
लस्थवन्हेरूष्मणश्चरूपवत्त्वेकिंमानमितिवाच्यम् तत्रापितेजस्त्वेनरूपानुमानात् एवंवाय्वानीतपृथिवीजलतेजोभा
गानामपिपृथिवीत्वादिनारूपानुमानम्बोध्यम् नचघटादौद्रुतसुवर्णादिभिन्नेतेजसिचद्रवत्वमव्याप्तमिति॥ ॥ह चतुर्थक्षणेद्वित्वा
दीनामिति तथात्वादितिनाद्दशजातिमद्गुणत्वादित्यर्थः प्रथमोपस्थितत्वरूपलाघवमभिसन्धायाह त्रिक्षणेति॥२९॥ चक्षुरादीत्यादिना
घ्राणादिपरिग्रहः तत्रापिचक्षुरादिष्वपिपृथिवीत्वादौद्रवत्ववद्वृत्तित्वमुपपादयति घृतजत्वित्यादिना योगिप्रत्यक्षविषयत्वादाह अतिव्या
प्तञ्चेति घटोवायुमानितिवाय्वंशेउपनीतभानात्मकघटविशेष्यक॥ ॥ वैधर्म्यमितरस्मादिति सामान्यतोभिधानमयुक्तंसप्तपदार्थानांसाध
र्म्यं ज्ञेयत्वादौतदितराप्रसिद्ध्यातदितरवैधर्म्यत्वाभावादित्याशंकामपनेतुंमुक्तावल्यांज्ञेयत्वादिकंविहायेतिपूरयतीत्याह नन्वित्यादि॥२९॥ प्राचीनश्लो रामः
कमितिक्वचित्कारिकावलीग्रन्थेऽयंश्लोकोदृश्यतेसप्रक्षिप्तएवेतिमन्तव्यं एतद्वाक्यस्वरसात्॥३०॥३१॥ ऐक्यादिति॥ ५ ॥ ५ ॥ ५ ॥ ६१

रा॰॥ एकजातीयत्वादित्यर्थः तेन न दिक्कालयोः परिमाणादिभेदेपिनक्षतिः॥ ३३॥ अप्रयोजकत्वादिति ईश्वरपरिमाणस्याजन्यत्वेन जन्यपरिमाणं प्रतिद्रव्यत्वेन कारणत्वेपि तत्राह शकार्यकारणभावग्रहरूपानुकूलतर्कसहकृतेनोक्तानुमानेन नईश्वरे परिमाणासिद्ध्यसंभवादितिभावः ननुद्रव्यत्वं परिपरिमाणव्यभिचारि स्यान्निरूपाधिकं नस्यादित्यनुकूलतर्कसहकृतेनोक्तानुमानेन ईश्वरेपि परिमाणसिद्धिर्निष्प्रत्यूहैव अन्यथा कालदिशोरपि परि

दि॰॥ चाक्षुषविषयवायुवृत्तिद्रव्यत्वव्याप्यवायुत्वजातिमति वायावतिव्याप्तिवारणाय लौकिकेति गुरुत्ववत्वमिति गुरुत्वं रक्तिकामाषकतोलकत्वादि इन्द्रस्य पलक्षणम् पतनवत्वमित्यपि वोध्यम् पतनत्वं गुरुत्वासमवायिकारणककर्मत्वम्॥ ॐ॥ उल्कापततीत्यादिप्रयोगस्तु लाक्षणिकः वस्तुतस्तु गुरुत्वासमवायिकारणककर्मवृत्ति पतनत्वञ्जातिविशेष एव॥ २८॥ ननु सप्तानामपि साधर्म्यं ज्ञेय

मु॰॥ वाच्यम् द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वात् घृतजतुप्रभृतिषु पृथिवीषु जलेषु द्रुतसुवर्णादौ तेजसि चद्रवत्वसत्वात् न च पृथिवीत्वादिसत्वात् तदादाय सर्वत्र लक्षणसमन्वयः न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तमिति व्याप्तञ्च रूपादाविति वाच्यम् चाक्षुषलौकिकप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वात् आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति गुरुणी द्वे रसवती गुरुत्ववत्वं रसवत्वञ्च पृथिवीजलयोरित्यर्थः॥ ॥ एवं तत्कस्यैव धर्म्ममित्याशङ्कायामाह ज्ञेयत्वादिकमिति॥ २९॥ वायोर्नवैकादश तेजसो गुणाजलक्षिति प्राणभृतां चतुर्दश दिक्कालयोः पञ्चषडेव चाम्बरे महेश्वरेऽष्टौमनसस्तथैव चेति प्राचीनश्लोकमनुसृत्य वायोस्तावद्गुणानाह मूले स्पर्शादयोष्टाविति स्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वान्यष्टौ वेगाख्यः संस्कारश्चेति वायोर्गुणा इत्यर्थः तेजसो गुणानाह स्पर्शाद्यष्टाविति॥ ३०॥ ॥ माणासिद्धिप्रसंगादित्यस्वरसादुक्तानुमाने नस्वरूपासिद्धिमाह ईश्वर इति अत एव वेदांतिनामीश्वरस्य स्वप्रकाशसुखात्मकत्वे विवादोऽपि संगच्छते इति भावः निरस्तमिति रूपं घटात्पृथगिति व्यवहारानुरोधेन पृथग्पदस्य भिन्नार्थकता द्रव्यं घटः पटात्पृथगित्यत्रापि तद्विषयकतयैवोपपत्तौ तादृशप्रतीत्या पृथक्त्वरूपगुणांतरासिद्धेरिति भावः तथाग्रे व्यक्तीभविष्यतीति नित्यं विज्ञानमानंदं ब्रह्मेति आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेत्यादिश्रुतिभिरीश्वरे नित्यसुखसिद्धेरिति भावः॥

रा॰॥संख्येति एकोह वैनारायणइत्यादिश्रुत्या तत्सिद्धिरिति भावः ज्ञानेच्छाप्रयत्नास्तु सिद्धेः सकर्तृकत्वानुमानेनैव सिध्यंतीति प्रतिपादितमधस्ता
त् न चैवमणोरणीयान् महतोमहीयानिति श्रुत्या ईश्वरे परिमाणमपि कुतो न सिद्ध्यतीति वाच्यम् महत्वाणुत्वयोर्विरुद्धत्वेन एकत्रोभयोरसंभवान्मह

दि॰॥ अपांगुणानाह स्पर्शादयोष्टाविति।३१ पृथिव्या गुणानाह स्नेहहीना इति एते ऽव्यवहितपूर्वोक्ताः आत्मनोगुणानाह बुद्ध्यादिषट्कमि
ति बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः संख्यादिपञ्चकं संख्या परिमाणपृथक्त्वसंयोगविभागाः।३२ कालदिशोर्गुणानामैक्यादेको
क्त्यैवाह संख्यादिपञ्चकमिति आकाशस्य गुणानाह शब्दश्चेति तथा चाकाशे शब्दः संख्यादयः पञ्चैव षड्गुणा इत्यर्थः॥३३॥ ईश्वरस्य

मु॰॥ न च घ्राणेन्द्रियादीनां वाय्वानीतपृथिव्यादिभागानां च रसादिमत्वे किम्मानमिति वाच्यम् तत्रापि पृथिवीत्वादिना तदनु
मानात् द्वयोर्नैमित्तिको द्रवः।२८। पृथिवीतेजसोरित्यर्थः न च नैमित्तिकं द्रवत्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यम्
नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वात्॥२८॥ आत्मानो भूतवर्गाश्च विशेषगुणयो
गिनः पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्वमित्यर्थः यदुक्तं यस्य साधर्म्यवैधर्म्यमितरस्य तत्।२९। ज्ञेयत्वादि
कं विहायेति बोध्यम् तत्तु न कस्यापि वैधर्म्यं केवलान्वयित्वात्॥२९॥ स्पर्शादयोष्टौ वेगाख्यः संस्कारो मरुतो गुणाः स्प
र्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः।३०। स्पर्शादयोष्टौ वेगश्च द्रवत्वञ्च गुरुत्वकम् रूपं रसस्तथा स्नेहो वारिण्येते च
तुर्दश।३१। स्नेहहीना गन्धयुक्ताः क्षितावेते चतुर्दश बुद्ध्यादिषट्कं संख्यादिपञ्चकम्भावना तथा।३२। धर्माधर्मौ गुणा एते
आत्मनः स्युश्चतुर्दश संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे॥३३॥ ॥गुणानाह संख्यादीति अत्र नव्याः ईश्वरस्य परिमाणव
त्वे प्रमाणाभावः न च द्रव्यत्वे तत्तदनुमानमिति वाच्यम् अप्रयोजकत्वात् ईश्वरे द्रव्यत्वसत्वे मानाभावाच्च अत एव तत्र संयोगविभा
गयोः सत्वेपि मानाभावः पृथक्त्वस्य च गुणात्वमेव निरस्तम्॥ ॥त्वस्य देशकालापरिच्छिन्नत्वरूपतया अणुत्वस्य च सर्वान्तर्यामित्वरूप
तया एवम्प्रकृते वक्तव्यत्वादिति हृदयम्॥३४॥ इति श्रीरामरुद्रभट्टाचार्यविरचितायां मुक्ताव॰॥ ९॥ ९॥ ९॥ ९॥ ९॥ ९॥

रा॥लीप्रकाशतरंगिण्यांप्रथमस्तरंगः॥१॥कालादावितिगंधनिष्ठाकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबंध[illegible]च्छिन्नकालत्वावच्छिन्नका
रणतायाःकालेपिसत्वादितिभावः नतुगंधत्वावच्छिन्नकार्यत्वाविवक्षणेनैषदोषःआवश्यकंचतद्विवक्षणमन्यथाक[illegible]समवायसंबंधावच्छिन्न
त्वविवक्षणमपिगंधनिष्ठसमवायसंबंधावच्छिन्नगुणत्वावच्छिन्नकार्यतानिरूपितद्रव्यत्वावच्छिन्नकारणतामादाय[illegible]जलादावतिव्याप्तापत्तिरित्या
शयेनादिपदमुपात्तम्तेनचगंधत्वावच्छिन्नकारणविजातीयादृष्टसंग्रहइतिध्येयम्गंधवद्वृत्तीत्यादिग्रंथस्यगंधवत्त्वस्येत्यादिःद्रव्यत्वव्याप्येतिद्रव्यत्वन्यून

दि॥ यथाचेश्वरेसुखसम्भवस्तथाग्रेव्यक्तीभविष्यतिएवञ्चसंख्याबुद्धीच्छाप्रयत्नसुखानीतिपञ्चैवेश्वरस्यगुणाइत्याहुः।३४।इति
श्रीभारद्वाजभट्टबालकृष्णात्मजमहादेवभट्टकृतौमुक्तावलीप्रकाशेप्रथमःपरिच्छेदः।१।गन्धहेतुत्वंकालादौगतमतोव्याचष्टेगन्धे
तिगन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः तेनसुरभ्यसुरभिकपालारब्धनिर्गन्धघटेनाव्याप्तिः वृत्त्यन्तेनजलादावतिव्याप्तिःद्र

मु॥ संख्यादिपञ्चकंबुद्धिरिच्छायत्नोपिचेश्वरेपरापरत्वेसंख्यादिपञ्चवेगश्चमानसे॥३४॥तेचखेआकाशे३०।३१।३२।
३३।३४।साधर्म्यवैधर्म्येनिरूप्यसम्प्रतिप्रत्येकंपृथिव्यादिकंनिरूपयतितत्रक्षितिर्गन्धहेतुःगन्धहेतुरितिगन्धसमवायि
कारणमित्यर्थःयद्यपिगन्धवत्त्वमात्रंपृथिव्यालक्षणमुचितम्तथापिपृथिवीत्वजातौप्रमाणोपन्यासायकारणत्वमुपन्यस्तम्

व्यत्वव्याप्येत्यनेनतत्रैवसत्तामादायसाननवाजातिपदोपादानाज्जलपृथिव्यन्यतरत्वमादायसागन्धवत्त्वंवृत्तित्वञ्चसमवायेनतेन
कालिकसम्बन्धेनगन्धवतिसमवायसम्बन्धावच्छिन्नवृत्तित्ववज्जलत्वादिमतिपृथिवीनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वव
ज्जलत्वादिमतिवाजलादौनातिव्याप्तिः॥ वृत्तीत्यर्थःतेनद्रव्यत्वस्यापिद्रव्यत्वव्याप्यत्वेननतमादायजलादावतिव्याप्तिरेवमग्रेपिद्रष्टव्यंनाव्याप्ति
रितिअनेनचतादृशघटेऽव्याप्तिवारणायगंधवत्त्वस्योक्तरूपस्यैवविवक्षणीयतयातदपेक्षयालाघवेनगंधसमवायिकारणत्वमेववक्तुमुचितंतथासति
पृथिवीत्वावच्छिन्नस्वरूपयोग्यतारूपकारणतामादायतादृशघटेपिलक्षणसमन्वयसंभवात्नचद्रव्यत्वव्याप्यत्वंद्रव्यनिष्ठभेदप्रतियोगितावच्छेदकत्व
मेवकारणताशरीरेचगंधवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वरूपनियमांशस्याननुप्रवेशेनलाघवंतस्यचप्रवेशेनतत्रैवगौरवमितिवाच्यम्॥ ५॥

रा॰॥ शेषमिति वायुत्वमादायातिव्याप्तिवारणाय मधुरवहृत्तीतिशर्करात्वमादायातिव्याप्तिवारणाय साक्षाद्व्याप्येति जलशर्कराभयत्वमादाय तद्वारणा
यजातीतिपदमिति भावः उपष्टम्भकेति कालिन्दीजलसंयुक्ते त्यर्थः इदं तु बोध्यम् कालिन्दीजले नीलत्वप्रतीता वाश्रयोपाधित्वं आश्रयविशेषसंयोगरू
पदोषजन्यत्वमेव मूलग्रंथकर्त्तुरभिप्रेतं न तूक्तपरंपरासंसर्गकत्वं तथा सति जले नीलत्वस्येव पृथिवीत्वस्यापि प्रतीतिप्रसंगात् न च तन्मतेपि तादृशदो
षबलात्कुतो न पृथिवीत्वप्रत्यय इति वाच्यम् स्फटिकादिस्वच्छद्रव्ये रक्तपटादिसंयोगबलाद्रक्तत्वप्रतीतिरेव न तु पटत्वप्रतीतिरिति सर्वानुभवसि

दि॰॥ ननु जंबीरसलिलादावम्लप्रत्यक्षाज्जलत्वेनाम्लादिरसेपि तुल्यवद्धेतुत्वं स्यादत आह जंबीररसादाविति स्वसमवायिसंयोगेन
जंबीरगताम्लरसप्रतीतिस्तद्वत्तजल इत्यर्थः शुष्केपि जंबीरेऽम्लप्रतीतेस्तत्राम्लरसस्यावश्यकत्वे तस्यैव तद्गतजले परम्परया
प्रतीतिः हरीतक्यां तु मधुररसाभावान्न हरीतकीगतमाधुर्यस्य जले प्रतीतिरिति भावः कर्कटीभक्षणोत्तरं जलपाने तिक्तरस
स्यानुभवात्तिक्तरसोपि जले स्यादिति तु न जलपानात्पूर्वमपि कर्कट्यां तिक्तरसोपलब्धेः कर्कटीभक्षणोत्तररसनाग्रवर्त्तिःपित्त

मु॰॥ जंबीररसादौत्वाश्रयौपाधिकी तथा प्रतीतिः॥ ७८ ॥

क्षोभेन दोषवशेन तिक्तोपलब्धेर्वैद्यकसिद्धत्वाच्च वस्तुतो निदाघपीतनिर्मलगङ्गाजलमाधुर्यस्यानुभवसिद्धस्यापलापासंभवान्मधु
र एवेति युक्तम् एतेन हरीतक्यादौ न जलसंयोगेन माधुर्यमुत्पद्यते येन कल्पनागौरवम् परन्तु हरीतक्यां कषायवन्मधुररसो
पि स्वीक्रियते तद्व्यञ्जकश्च जलसंयोगो न तु तद्गतरसान्तरस्य फलबलात्॥ ९९ द्रुमितिपित्तादिदोषस्य पीतत्वमात्रभ्रांतिजनकता

मात्रकल्पनावदत्राप्यनुभवानुरोधेन नीलत्वभ्रांतिजनकतामात्रस्यैव तादृशदोषे कल्पनीयत्वात् दोषविशेषजन्यत्वादेव विशेषदर्शिनामपि — सम
वायेनैव नीलत्वभ्रांतिः नहि नीलो घटो नीलं जलमिति प्रतीत्योर्वैलक्षण्यमनुभवसिद्धमिति कश्चिदुपेत्तीति हरीतकीभक्षणेत्यादिना हरीतकीभक्ष
णस्य जलरसव्यञ्जकत्वमुक्तं मूले तत्र च हेतोरभिधानान्मूलस्य न्यूनतामाशङ्क्य हेतुम्पूरयति व्यञ्जकत्वादित्यादिना हरीतक्यामिति यद्यपि हरी
तक्यां मधुररसकल्पनं सिद्धान्ते जले मधुररसकल्पनस्यानीयमिति गौरवात्तत्प्रदर्शनमनुचितं॥
फलबलादिति मधुरस्यैवोपलभ्यमानत्वात्॥प॥टि॰दि॰स्व॰॥

गुणविरोधेनेतिसमवायसंबंधेनकषायरसंप्रतिस्वसमवायिसमवेतत्वसंबंधेनमधुररसःप्रतिबंधकःसम
वायेनमधुररसंप्रतिस्वसमवायिसमवेतत्वसंबंधेनकषायरसःप्रतिबंधकःइतिगुणविरोधेनेत्यर्थः। स्वा॰टी॰। टि॰ १

का॰मु॰ दि॰ ७६ रा॰॥ तथापिप्रतिवादिनोमन्मतेकार्यकारणभावस्यैकस्याधिक्यंत्वन्मतेजलेमधुररसकल्पनस्यानीयमितियदुच्यतेतदाजलेऽस्माकंतत्कल्पनंभवतोह रीतक्यांमधुररसकल्पनस्यानीयंकार्यकारणभावकल्पनंत्वन्मतेऽधिकमेवेतिसूचयितुमुत्कीर्तनमितिध्येयम् अम्लजनकतावच्छेदकपृथिवीत्वस्यजलेभा

दि॰॥ यदिचचित्ररूपवच्चित्ररसेमानाभावात् गुणेविरोधेननीरसैवहरीतकीरसप्रतीतिस्तु अवयवेषुरससत्वात्परम्परयेत्युच्यतेतदा स्तुजलसंयोगोहरीतक्यवयवगतमाधुर्यस्यैवव्यञ्जकइत्यपास्तम् जलत्वजातावनुमानान्तरंप्रमाणमाहएवमितिननुजलत्वाभावेपि घृष्टचंदनादौशैत्योत्पत्तेर्व्यभिचारेणकथंजन्यजलत्वेनतत्रहेतुत्वमतआहघृष्टेतिपूर्वंशीतस्पर्शइत्युक्तंतत्साधयतितेजःसंयो गादितितत्रजलेविवेचयिष्यतिचपाकासम्भवमुपरिष्टात् घृतादावित्यादिपदेनतैलादिपरिग्रहःजलस्यैवस्नेहइत्युक्त्यनन्तरंसाश्रय

मु॰॥ एवंजन्यशीतस्पर्शजनकतावच्छेदकंजलत्वंजन्यजलत्वंवाबोध्यम् घृष्टचन्दनादौतुशैत्योपलब्धिश्चन्दनान्त र्वर्तिशीततरसलिलस्यैवतेजःसंयोगाज्जलेऔष्ण्यप्रतीतिरौपाधिकीस्फुटैवतत्रपाकासम्भवात् स्नेहस्तत्रद्रवत्व तुसांसिद्धिकमुदाहृतम्॥ ३९॥ घृतादावपितदन्तर्वर्तिजलस्यैवस्नेहःजलस्यस्नेहेसमवायिकारणत्वात् तेनजल एवस्नेहइतिमन्तव्यम् द्रवत्वंत्रितिसांसिद्धिकद्रवत्वंजातिविशेषःप्रत्यक्षसिद्धःतदवच्छिन्नजनकतावच्छेद कमपिनदेवेतिभावः॥

१संयोगेनप्रतीयतइतिशेषःतेनघृतादौसमवायेनस्नेहनिरासेनजलएवेतिस्नेहस्यावान्तरवि शेषाभावात्सनोत्कीर्तितःतदवच्छिन्नजनकतावच्छेदकंसांसिद्धिकद्रवत्वावच्छिन्नजनकतावच्छेदकम् तदेवजन्यजलत्व मेवतदवच्छिन्नजनकतावच्छेदकंजलत्वमितिभावः॥

१वाऽन्त्याम्लादिमत्वंजलस्येतिमूलोक्तंनसंगच्छतेशर्करादौमधुरजनकतावच्छेद कत्वेनापिपृथिवीत्वस्यक्लृप्ततयातदभावाज्जलेमधुरस्यशीघ्रभावप्रसंगादित्याशंकतेयद्यपीतितत्रहरीतक्यांअशक्यतयेत्यस्यानुभवानुरोधेनेत्यादिः जलत्वेनेत्यस्यपृथिवीत्वेनेत्यादिः ननुजंबीरगतरसस्यजलेभानंजलगतरसस्यजंबीरेभानंवेत्यत्रविनिगमकत्वदुर्लभमित्याशंकायामाहशुष्केपीतिनएमः चैवंहरीतकीगतमधुररसस्येवजलेपि परं [illegible] जलेमधुररसोपिनस्यादित्यत्तआह॥ ९६

रा०॥ हरीतक्यामिति तद्व्यंजकत्वेति हरीतकी मधुररसव्यञ्जकस्त्वित्यर्थः रसान्तरस्य कषायरसस्य फलबलात् तत्प्रत्यक्षरूपकार्य्यबलादित्यर्थः मानाभावादि
ति चित्ररसस्याप्रामाणिकत्वे तत्र चित्ररूपइवावयवगतनानारसानां हेतुत्वसंभवेपि नीरसद्रव्यप्रत्यक्षेबाधकाभावेन चित्ररूपवच्चित्ररसानंगीकारे स

दि०॥ अप्यैवंरीत्या परमाणुव्यावृत्तमाद्यणुकंजलत्वमेकम्परमाणुसाधारणन्द्वितीयमिति जलत्वयोर्भेदाग्रहः कुतइति चेत्समनियत
योग्यव्यक्तिवृत्तित्वादिति एवमग्रेपि तैलादावित्यादिपदेन क्षीरपरिग्रहो न तु घृतस्य तत्र नैमित्तिकद्रवत्वस्य समवायेनैव सत्वात् तद्द्रवत्वमि
त्यनन्तरं स्वाश्रयसंयोगेन प्रतीयतइति शेषः ननु तैले जलसत्वे तैलस्य दहनानुकूलत्वं न स्यात् जलस्य दहनप्रतिकूलत्वादित्यत आह स्ने
हप्रकर्षेणेति प्रकृष्टस्नेहस्य दहनानुकूल्यमेव अपकृष्टस्यैव तस्य दहनप्रतिकूलत्वादिति भावः इति वक्ष्यतीति स्नेहनिरूपणावसरे

मु०॥ तैलादावपि जलस्यैव द्रवत्वम् स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति। ३९। नित्यतादिः प्रथमवत् किन्तु देहम
योनिजम् पृथिव्या इवेत्यर्थः तथाहि जलं द्विविधं नित्यमनित्यञ्च परमाणुरूपं नित्यं द्व्यणुकादि सर्वमनित्यमवयव
समवेतञ्चानित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात् पृथिवीतो यो विशेषस्तमाह किन्त्विति देहमयोनिजम् अयोनिज
मेवेत्यर्थः जलीयं शरीरमयोनिजं वरुणलोके प्रसिद्धम् इन्द्रियं रसनं सिन्धुर्हिमादिर्विषयो मतः॥४०॥ इन्द्रियमि
ति जलीयमित्यर्थः तथाहि रसनं जलीयम् गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत्
रसनेन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्॥ ९ इतिशेषः॥ ३९॥ प्रथमवदिति षष्ठी समर्थाद्वतिरित्यभिप्रायेणा

ह पृथिव्या इवेत्यर्थ इति एवमग्रेपि जलीयं शरीरमिति तच्च पार्थिवावयवैरुपष्टब्धं बोध्यम् तेन जलमात्रे हस्तपादादिव्यवस्थाया
असंभवेपि न क्षतिः ननु तादृशशरीरे मानाभावोऽनुपलम्भादित्यत आह वरुणलोकइति तत्र च श्रुतिरेव प्रमाणमिति भावः गन्धे
तिरसव्यञ्जके मनसि व्यभिचारवारणाय गन्धाद्यव्यञ्जकत्व इति॥ ९ तिविरहान्नानारसावयवकद्रव्ये परस्परविरोधेन कस्यापि रसस्यानु
त्पत्त्या नीरसैव हरीतकीति समुदायार्थः ःः नचैवं हरीतकीभक्षणे तस्यापि रसस्य प्रत्यक्षं न स्यात् अनुभूयते च कषायरसप्रत्यक्षमत आह॥

का॰मु॰ दि॰रा॰ ७७

रा॰॥रसप्रतीतिस्त्विति परंपरया स्वाश्रयसमवेतत्वसंबंधेन अपास्तमिति गंगाजले माधुर्यस्य प्रत्यक्षसिद्धत्वादिति भावः ननु घृतादावपि तदंतर्गतजल
स्यैव स्नेह इति मूलमसंगतं घृतादेः पार्थिवत्वेन तत्र जलीयस्नेहासंभवादतः पूरयति जलस्यैवेत्यादिजन्यजलत्वमेवेति जन्यजलमात्रवृत्तिजातिरेवे
त्यर्थः परमाणौ जलत्वसिद्ध्यर्थमाह तदवच्छिन्नेति जन्यजलत्वावच्छिन्नेत्यर्थः समनियतेति अयमेव दोषो जात्योर्भेदाग्रहप्रतिबंधक इति भावः॥

दि॰॥कासारः सरः करिकादिरित्यत्रादिपदात्कूपादिपरिग्रहः कठिनत्वादिति कठिनस्पर्शवत्त्वादित्यर्थः विलीनस्य तस्येति सप्तम्यर्थे
षष्ठी क्वचिद्विलीनयोरिति पाठः स तु ऋजुरेव विलीनतया द्रवत्वरूपाया जलत्वव्यञ्जकत्वादिति भावः ननु विलीनतानैमित्तिकद्रवत्व
मेव न तदुक्तमूष्मणेति तच्च न जलत्वव्यञ्जकम् यदि च विलीने तस्मिन्नित्यस्य तस्मिन्नष्टे सतीत्यर्थः स्तथापि करिकादिनाशोत्तरं द्रव्या

मु॰॥विषयन्दर्शयति सिन्धुरिति सिन्धुः समुद्रः हिमं तुषारम् आदिपदात्सरित्कासारकरिकादिः सर्वोऽपि ग्राह्यः न च हिम
करिकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम् ऊष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात् यद्द्रव्यं यद्द्रव्यध्वंस
जन्यमिति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः अदृष्टविशेषेण द्रवत्वप्रतिरोधात्करिकायां काठिन्यप्रत्ययस्य भ्रांतित्वा
त्॥४०॥तेजो निरूपयति उष्णः स्पर्शस्तेजसस्तु उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः इत्थं च॥ ॥न्तरोत्पादात्तत्रैव द्र

वत्वजलत्वयोः प्रत्यक्षं न करिकाया नष्टत्वादत आह यद्द्रव्यमिति तथा च करिकादिनाशोत्पन्नद्रव्यान्तरे जलत्वस्य प्रत्यक्षसिद्धत्वा
दुक्तव्याप्त्या करिकादिषु जलत्वसिद्धिरिति भावः ननु हिमकरिकयोः पार्थिवत्वाभावे कथं काठिन्यप्रत्यय इत्यत आह अदृष्टविशेषे
णेति इति जलग्रन्थः॥४०॥इत्थं चेति उष्णत्वजातिसिद्धौ चेत्यर्थः ननु कथं तर्हि जन्योष्णस्पर्श॥ ॥३१॥षष्ठी सप्तम्यर्थे इति प्रथमायाः इवेति षष्ठ्य

न्ताह्वति प्रत्यय इत्यभिप्रायेणेत्यर्थः अग्रे पि तेजोनिरूपणेऽपि जलमात्रे केवले जले सत्विति तादृश पाठस्त्वित्यर्थः ऋजुः स्पष्टार्थकः तदुक्तं नैमित्तिकत्वद्रवत्व
मुक्तम् ऊष्मण एव निमित्तत्वप्रतिपादनादिति भावः तच्च नैमित्तिकद्रवत्वं त्वसांसिद्धिकरूपैव तस्य जलत्वव्यञ्जकत्वादिति भावः नष्टत्वादित्यस्य करिकाया
इत्यादिः मूले ऽदृष्टविशेषेणोत्पस्य दुरदृष्टवलेनेत्यर्थः प्रतिरोधो ऽप्रत्यक्षतया च प्रतिबंधकवलात् द्रवत्वाग्रहे भ्रांतिरूपैव काठिन्यप्रतीतिरिति भावः इति ज

न्या॰ मु॰ टि॰ रामः ७७

तेजस्त्वजातिसिद्धिरिति तेजःसंयोगनिष्ठजनकतावच्छेदकं तेजस्त्वदवच्छेदकं तेजस्त्वमतो
वच्छेदकतावच्छेदकतया तेजस्त्वजातिसिद्धिरित्यर्थः ३॥ टि॰॥ दि॰॥ स्व॰॥

रा॰॥ विलक्षणेति अवयवनीलाजन्येत्यर्थः नीलेत्युपलक्षणं पाकेनरक्तादेरप्युत्पत्तेः अतिप्रसंगाभावमुपपादयति भास्वरत्वमिति ननु तेजोगतरूपाणाम
नेकविधत्वात् पीतत्वशुक्लत्वादिना सांकर्यात् भास्वरत्वस्य जातित्वं न संभवतीत्याशंकां निराकरोति शुक्लत्वव्याप्यश्चेति न च विद्युदादौ भास्वरपीतस्या

दि॰॥ समवायिकारणभिन्नेषु परमाणुषु तेजस्त्वजातिसिद्धिरित्यत आह तस्येति तेजस्त्वस्येत्यर्थः जलत्वस्येवेति यथा च जन्यजलत्वा
वच्छिन्नजनकतावच्छेदकतया जलपरमाणौ जलत्वजातिसिद्धिस्तथा जन्यतेजस्त्वावच्छिन्नजनकतावच्छेदकतया तेजःपरमाणा
वपि तेजस्त्वरूपजातिसिद्धिरित्यर्थः इदमुपलक्षणम् समवायेन विलक्षणनीलोत्पत्तित्वावच्छिन्नम्प्रति समवायेन तेजःसंयोगत्वेन
हेतुत्वात्तेजस्त्वजातिसिद्धिरित्यपि द्रष्टव्यम् चन्द्रकिरणादावित्यादिना रत्नकिरणादेः परिग्रहः तत्रापि चन्द्रकिरणादावपि ननु त

मु॰॥ जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः तस्य परमाणुवृत्तित्वन्तु जलत्वस्येवानुस
न्धेयम् न चोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यम् तत्राप्युष्णस्पर्शसत्वात् किन्तु तदन्तःपातिजलस्प
र्शेनाभिभवात्तदग्रहः एवं रत्नकिरणादौ च पार्थिवस्पर्शेनाभिभवात् चक्षुरादौ चानुद्भूतत्वादग्रहः स्याद्रूपं शु
क्लभास्वरम् वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवात् शुक्लरूपाग्रहः॥ ६॥ ६॥ ६॥

ष्णस्पर्शस्य प्रतीतिः कुतो नेत्यत आह· किन्त्विति तदन्तःपातिजलस्पर्शेनेति चन्द्रकिरणान्तर्गतजलभागशीतस्पर्शेनेत्यर्थः ननु चक्षु
रादिनिष्ठस्योष्णस्पर्शस्य केनाप्यनभिभूतत्वात्प्रत्यक्षापत्तिरत आह चक्षुरादौ चेति मरकतकिरणादावित्यादिना सुवर्णपरिग्रहः
स्याद्रूपं शुक्लभास्वरमिति मूलम् तत्र शुक्लेति स्वरूपकथनम् भास्वररूपमात्रस्य लक्षणत्वे ऽतिप्रसङ्गाभावात् भास्वरत्वं जातिविशे
षः स च तेजोरूपमात्रवृत्तिः शुक्लत्वव्याप्यश्चेति॰॥ ९ प्यनुभवात्कथं शुक्लत्वं तस्येति वाच्यम् तत्रत्यशुक्ल एव पीतत्वभ्रान्तेरेवोपगमादिति भा
वः॥ ः ॥ रूपविषयकेति न च निर्विकल्पके प्राथमिके घट इति प्रत्यक्षे च रूपविषयकत्वाननुभवात्कथमेतदिति वाच्यम् घटत्वे सन्निकर्ष
दशायां रूपादावपि सन्निकर्षस्यावश्यकतया घटघटत्वयोरि॰॥ ९॥

तद्रूपाग्रहइतीति यद्यद्रव्यचाक्षुषंप्रत्यक्षंतनद्रूपपुरस्कारेणैवेति
व्याप्तेस्तव्यापकाभावाद्व्याप्याभावापत्तिरितिभावः॥ दि· रि· स·

का·मु· रा·॥ वस्तुरूपत्वयोरपिसमूहालंबननिर्विकल्पस्यप्राथमिकविशिष्टप्रत्यक्षस्यापिरूपत्वविशिष्टवैशिष्ट्यानवगाहिनोरूपविषयकत्वस्यैव
दि·रा· स्वीकरणीयत्वादितिभावः सूचितमित्यस्य वैश्वानरादेरित्यादिपदेनेतिशेषः पार्थिवेतिपाकजपार्थिवरूपेणेत्यर्थः तस्यैवपाकजत्वात् वैश्वा
७८ नरेयादृशरूपप्रतीतिस्तादृशंरूपंनकाष्ठादिरूपपृथिव्यांपूर्वमनुभूतमतःपाकजत्वम् प्रदर्शितमितिध्येयम् ननुसुवर्णरूपेतेजसिनैमित्तिकद्रवत्व

दि·॥ ननुरूपविषयकद्रव्यप्रत्यक्षस्याभावाद्वैश्वानरादेश्चाक्षुषत्वानापत्तिरितिशंकतेतद्रूपाग्रहइतिवैश्वानरादेरचाक्षुषत्वेतद्व
तसंख्यादिगुणानामपिचाक्षुषत्वंनस्यात् योग्यव्यक्तिमात्रवृत्तित्वाभावादित्यपिनासूचितम् अन्यदीयरूपेणैवेतिपार्थिव

मु·॥ अथतद्रूपाग्रहेधर्मिणोपिचाक्षुषत्वंनस्यादितिचेन्न अन्यदीयरूपेणैवधर्मिणोग्रहस।
म्भवात् शङ्खस्यैवपित्तपीतिम्ना वन्हेस्तुशुक्लरूपमभिभूतम् किन्तुतदीयशुक्ल।
त्वमभिभूतमित्यन्ये नैमित्तिकद्रवत्वन्तुसुवर्णादिरूपेतेजसितत्सत्वात् नचननैमित्तिक
द्रवत्ववत्वंलक्षणंदहनादावव्याप्तेः घृतादावतिव्याप्तेश्चेतिवाच्यम्॥ ॥

रूपेणैवेत्यर्थःमतान्तरमाह वन्हेस्त्वितिसुवर्णादिरूपेतेजसि तत्सत्वादिति तेननासम्भवइतिभावः॥ ६॥ ६॥ ६॥

सत्वंमूलेप्रदर्शितमतत्त्वानर्थकमेवतावतात्यव्याप्तेरपरिहारादित्याशंकायामाह तेनेतितत्कथनेनेत्यर्थः तथाचतद्रूपस्यासंभवपरिहारकत्वमेवअ
व्याप्तिपरिहारस्तुउत्तरग्रंथेनैवकरणीयइतिभावः॥ ❁ ॥ पृथिव्यवृत्तीति अत्रजातिपदस्यद्रव्यत्वसाक्षाद्व्याप्यजातिपरत्वेपिननिस्तारइतिसूच
नायैवद्रव्यत्वसाक्षाद्व्याप्येत्युक्तंजलत्वेत्युपलक्षणंवायुत्वादिकमादायवाय्वादावप्यतिव्याप्तिसंभवादितिद्रष्टव्यम्॥ ४१॥ स्पर्शपदमितिपरकीयरूपव्यंज रामः ७८
यपदमपिस्वीयस्पर्शव्यञ्जकदीपेदृष्टान्तासिद्धिवारणायउक्तरीत्यापरकीयरूपव्यंज·॥ ॥

ए०॥ कजलेव्यभिचारवारणायहेतौसत्यंतंगगनादौतद्वारणायविशेष्यदलंघटादौस्वीयरूपव्यंजकेतद्वारणायतत्रापिपरकीयेतिचक्षुस्सन्निकर्षे व्यभिचारवारणायद्रव्यत्वेसतीत्यपिपूरणीयंएतत्सर्वंमूलोक्तत्वादुपेक्षितमितिबोध्यम् गोलकमेवचक्षुर्नतेतेजसमितुच्छंखलमतंदूषयति अत्रकेचिदित्यादिना विषयासंबद्धंविषयसन्निकर्षरहितं एवकारेणसन्निकृष्टग्राहकत्वंव्यवच्छिद्यते गोलकसंयुक्तस्यचक्षुषा अग्रहणात् अ

दि०॥पृथिव्यवृत्तीति नैमित्तिकद्रवत्ववद्वृत्तिपृथिवीत्वरूपजातिमादायपृथिव्यामतिव्याप्तिवारणायपृथिव्यवृत्तीति पृथिव्यवृत्तिज लत्वजातिमादायजलेपृथिव्यवृत्तिवायुत्वादिकमादायवायावतिव्याप्तिवारणायनैमित्तिकद्रवत्ववद्वृत्तीति वायुतेजोऽन्यतरत्व मादायवायावतिव्याप्तिवारणायजातीति॥४१॥ परकीयस्पर्शादीति गन्धाव्यञ्जकत्वादिघटितहेत्वन्तरसूचनायादिपदे नगन्धा

मु०॥पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वस्यविवक्षितत्वात् नित्यतादिचपूर्ववत्॥४१॥ जलस्यैवेत्यर्थः तथाहितद्विविधन्नित्यमनित्यञ्चनित्यम्परमाणुरूपम् तदन्यदनित्यमवयविचतत्त्रिधाशरी रेन्द्रियविषयभेदात् शरीरमयोनिजमेव तच्चसूर्यलोकादौप्रसिद्धम्॥४१॥ अन्नयोविशेषस्तेमाह इन्द्रियन्नयनं॥ वन्हिस्वर्णादिर्विषयोमतः नंनुचक्षुषस्तैजसत्वेकिम्मानमितिचेदुच्यतेचक्षुस्तैजसम्परकीयस्पर्शाद्यव्यञ्जकत्वे सतिपरकीयरूपव्यञ्जकत्वात्प्रदीपवत् प्रदीपस्यस्वीयस्पर्शव्यञ्जकत्वादत्रदृष्टान्तेऽव्याप्तिवारणायप्रथमम्पर कीयेतिघटादेःस्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणायद्वितीयम्परकीयेति॥ ९॥ ५॥

दिपरिग्रहः चक्षुषःपरकीयरूपादिव्यञ्जकत्वादसिद्धिवारणायस्पर्शपदम् अत्रकेचिदाहुःचक्षुर्विषयासम्बद्धमेवग्राहकम् यदिप्राप्यकारिस्यात् तदारसनादिवदधिष्ठानसम्बद्धङ्गृह्णीयात् नचैवम् गोलकासम्बद्धग्रहणात्॥ ६॥

त्रचक्षुष्पदंचक्षुरिंद्रियत्वेनाभिमतपरंतेनतेजोरूपचक्षुषःस्वमते असत्वेपिनपक्षाप्रसिद्धिर्नवापार्थिवगोलकस्यचसन्निकृष्टग्राहकतायाःकेना प्यंगीकारेणयदीत्याद्युत्तरग्रंथाजुद्वृतिरितिध्येयम्॥ ६॥ ६॥

रा·॥ अत्र चोत्तरग्रन्थानुसारादधिष्ठानासंबद्धग्राहकत्वादिति हेतुरूह्नीयः परं त्वाभिमुख्यमव्यवधानं च ग्रहणे प्रयोजकमित्येतन्मतेवश्यमंगीकरणीयमन्यथा दृष्टदेशस्थितानां व्यवहितानां च चाक्षुषापत्त्यावारणं सिद्धान्तिभिस्तु चक्षुःसंयोगाभावेनैव तद्वारणसंभवान्न तेषामेतत्कल्पनीयं दूरस्थत्वस्य प्रतिबन्धकताकल्पनं तूभयमतेपि समानमिति बोध्यम् ननूक्तहेतुरप्रयोजक इत्याशंकानिरासाय साध्याभावे हेतुरेव न स्यादिति हेतूच्छित्यापत्तिरूपमनुकूलतर्कं प्रदर्शयति यदीत्यादिना प्राप्यकारि सन्निकृष्टग्राहि न चैवमिति छेदः गोलकसंबद्धमात्रग्राहकं न चेति तदर्थः ग्रहणादीत्यंतस्य चक्षुष इत्यादिः प्रदीपप्रभायां वक्ष्यमाणव्यभिचाररूपारुचिं परिचिन्त्य स्वाधिकपरिमाणवद्द्रव्यग्राहकत्वेनापि च

दि·॥ किञ्च यदि चक्षुः प्राप्यं गृह्णीयात्तर्हि स्वतोधिकपरिमाणवन्न गृह्णीयात् नख
लु नखरञ्जनिका परशुच्छेद्यं छिनत्तीति शाखाचन्द्रमसोस्तुल्यकालग्रहणानाप
त्तिश्च गतिक्रमेण प्राप्यग्रहणे हि सन्निहितक्रमेणाग्रहणं स्यात् न तु तुल्यकालमुपल
म्भः अनुभवति नून्मीलयन्नेव नयनेन शाखां शीतमयूखञ्चएवञ्च प्राप्यकारित्वानुरो
धेन गोलकातिरिक्तञ्चक्षुः परैरङ्गीक्रियते गोलकस्य चन्द्रादिप्राप्त्यसम्भवात् ॥ ॥

सुखमुक्तसाध्यसिद्धिः संभवतीत्याह किंचेति यद्यत्संयुक्तमेव यत्संबन्धिफलजनकं तत्तदपेक्षयानात्यंतन्यूनपरिमाणवदिति सामान्यमुखव्याप्त्यभिप्रायेण दृष्टांतमाह नखल्विति नखरंजनिका नखकृंतनी तथा चैतद्व्याप्त्यनंगीकारे नखरंजनिकापि परशुभेद्यं महद्दार्वपि परशुभेद्यत्वदर्शनादात्यंतिकन्यूनतया निर्वक्तुमशक्यत्वाच्चेत्यस्वरसाद्धेत्वंतरमाह शाखेति तथा च शाखाचंद्रमसोरेककालीनचाक्षुषजनकत्वेनापि चक्षुषि अ॥ रामः
सन्निकृष्टग्राहकत्वमापादयितुं शक्यमिति भावः उपसंहरति एवं चेति चक्षुषः असन्निकृष्टग्राहकत्वे चेत्यर्थः नन्विष्टापत्तिरित्याशंकायामाह·॥ ७९

दिनकरीपुस्तके अचिन्त्योहीत्यस्यस्थाने अशक्योहीति पाठान्तरम् ॥ ८ दि॰ ॥

रा॰ ॥ तच्चेति तथा चेन्द्रियं नयनमिति कारिकाविरोधापत्तेर्नेष्टापत्तेस्संभवइतिभावः अधिष्ठानासंबद्धेति तथा चोक्तनियमो दीपरूपाधिष्ठानासं
बद्धघटादिग्राहिण्यां दीपप्रभायां व्यभिचरितइतिभावः तदभिमानस्य एककालीनत्वभ्रमस्य कालसन्निकर्षेण अतिसन्निहितकालवृत्तित्वेनन
नु शाखाचंद्रमसोऽतिदूरत्वेन झटितिचंद्रचक्षुःसंयोगासंभवात् शाखाचंद्रमसोश्चाक्षुषयोरत्यंतसान्निध्यमेव न संभवतिये न तुल्यकालताभ्रांति
स्यादित्याह अशक्योहीति निर्वक्तुमशक्यइत्यर्थः लाघवातिशयेन वेगजनकक्रियातिशयेनेत्यर्थः गुरुत्वाभावरूपलाघवस्य वाय्वादावपेसया

दि॰ ॥ अप्राप्यकारित्वे च गोलकमेव चक्षुस्तच्च न तैजसमिति तदसत् अधिष्ठानासम्बद्धार्थग्राहिण्याः प्रदीपप्रभायाइव चक्षुषो
पि प्राप्यकारित्वसम्भवात् पृथुतरग्रहणस्य च गोलकनिर्गतस्य महतश्चक्षुषः पृथ्वग्रत्वेन प्रदीपप्रभायाइवोपपत्तेः स्वाधिक
परिमाणवद्द्रव्यग्राहिणा त्वगिन्द्रियेण व्यभिचारात् तादृशनियमे मानाभावाच्च तुल्यकालग्रहणञ्चासिद्धमेव तदभिमा
नस्य कालसन्निकर्षेणैवोपपत्तेः अचिन्त्योहितेजसो लाघवातिशयेन वेगातिशयः यत्प्राचीनाचलचूडावलम्बिन्येव
भवति मयूखमालिनि भवनोदरे व्यालोकइत्यभिमानो लोकानाम् यत्त्वाहुः शालिकाचार्याः चक्षुर्वाह्यालोकाभ्यामा
रब्धेन चक्षुषा तावदर्थसंसृष्टेन युगपत्तावदर्थग्रहणमिति शाखाचन्द्रमसोस्तुल्यकालग्रहणमुपपद्यतरएवेति ॥ ९ ॥

तिशयासंभवादितिमंतव्यम् यत् यस्मात् प्राचीनाचलः उदयगिरिः चूडा अग्रं शिखरमिति यावत् मयूखमालिनि सूर्ये अभिमानो भ्रमः उदयाच
लारोहणग्रहणकिरणप्रसारयोर्वस्तुगत्यैककालीनत्वाभावादितिभावः वस्तुतस्तु चक्षुरिन्द्रियस्य तैजसत्वसाधकानुमानस्य पूर्वमुक्तत्वात् तद
वगोलकस्य चक्षुरिन्द्रियत्वं न शंकास्पदमपि न हि सिद्धान्तिभिः प्राप्यकारित्वानुरोधेन चक्षुषस्तथात्वमङ्गीक्रियते। अन्यथा रसनेन्द्रियादीनाम
धिष्ठानातिरिक्तत्वं कथं सिध्येत् यद्यपि घ्राणेन्द्रियस्य पार्थिवत्वादधिष्ठानातिरिक्तत्वे न किंचिदपि मानं तथापि नासिकासत्वेपि केषांचिद्गंधानुपल
ब्धिदर्शनाद् घ्राणादीन्द्रियमतींद्रियमिंद्रियत्वान्मनोवदित्यनुमानाच्च तत्सिद्धिरिति ध्येयम् ॥ ९ ॥ ९ ॥

रा॰॥ वाह्यालोकोऽत्रनसौरालोकादिः परमाण्वादिस्तदारब्धस्यप्रत्यक्षत्वापातात् किंत्वनुद्भूतरूपवत्तेजएवेतिमंतव्यंलाघवादित्यस्यपरकीयवाप्र वेशेनेत्यादिपीतरूपवदिति उपष्टंभकपार्थिवभागवदित्यर्थः धर्मशास्त्रेतोलकपरिमितंसुवर्णदद्यादित्यादिरूपइत्यर्थःनादवस्थादितिअवच्छेद कावच्छेदेनसाध्यसिद्धेरुद्देश्यतयासामानाधिकरण्येनबाधप्रसंगादितिभावः सामानाधिकरण्येनसिद्धावपिसुवर्णतैजसविषत्वसंभवेनसामाना

दि॰॥ तन्नचक्षुर्वाह्यालोकाभ्यामारब्धस्यचक्षुषः पृष्ठभागेपिसत्वात्पृष्ठभागस्थितपदार्थग्रहणापत्तेः पृष्ठदेशस्यवाह्यालोकैरप्रसु रुत्पादेमानाभावइतिचेदग्रदेशस्यवाह्यालोकैरपितदुत्पादेमानाभावः तदनभ्युपगमेपिचाक्षुषोपपादनस्यानुपदमुक्तत्वादिति लाघवादाह अथवेति तैजसत्वेकिम्मानमिति सुवर्णस्यपार्थिवनैमित्तिकद्रवत्ववत्वादित्यनुमानस्यपार्थिवत्वसाधकस्यैवसत्वादि त्याशयः समाधत्ते नेति सुवर्णमितिनचात्रपीतरूपवद्द्रव्यात्मकस्यसुवर्णस्यपक्षत्वेवाधः तैजससुवर्णस्यपूर्वमसिद्ध्यापक्षा

मु॰॥ अथवाप्रभायादृष्टान्तत्वसम्भवादाद्यम्परकीयेतिनदेयम् चक्षुस्सन्निकर्षव्यभिचारवारणाय द्रव्यत्वन्देयम् विषयन्दर्शयति वन्हिरिति ननुसुवर्णस्य तैजसत्वेकिम्मानमितिचेन्न ॥

प्रसिद्धिर्धर्मशास्त्रेपीतद्रव्येपिसुवर्णपदप्रयोगे नतस्यापिसुवर्णपदवाच्यतयासुवर्णपदवाच्यत्वस्यपक्षतावच्छेदकत्वेवा धनादवस्थ्यादितिवाच्यम् अत्यन्तानलसंयोगेसत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वस्यैवपक्षतावच्छेदकत्वात् अवच्छेद कावच्छेदेनसाध्यसिद्धेरुद्देश्यतयापक्षतावच्छेदकहेत्वभेदप्रयुक्तस्यसामानाधिकरण्येनसिद्धसाधनस्यादोषत्वात् ॥ ६ ॥

धिकरण्येनसाध्यसिद्धौसामानाधिकरण्येनबाधस्यादोषतयासुवर्णपदवाच्यत्वस्यपक्षतावच्छेदकत्वेपिनक्षतिः शोभनोवर्णोयस्येतिव्युत्पत्त्यासुव र्णपदवोध्योरीत्यादिरपीतिनसुवर्णस्यतेजोविषयत्वसिद्धिरितिनाशंकनीयंतथाव्युत्पत्तौतस्यवाच्यत्वेनशक्यतारूपवाच्यत्वाप्रसिद्धेरितितुविभा वनीयम् सामानाधिकरण्येनसिद्धसाधनस्येति यद्यप्युक्तहेत्वधिकरणे अनुमानात्पूर्वंक्वापिसाध्यानिश्चयेनव्यतिरेकव्याप्तिज्ञानादेवानुमितिस् पांनराज्ञानादिरेकव्याप्तौ [illegible]

रा॰॥ सामानाधिकरण्यंघटकमितिनसिद्धसाधनशंकावसरस्तथापिरजता–दौव्यतिरेकेणसामानाधिकरण्येनअनुमित्युत्तरमन्वयव्याप्तिज्ञानस्यापि संभवात्तदुत्तरम् तेनैवरूपेणसुवर्णस्थलेअनुमितिरन्वयव्याप्तिज्ञानेनापिसंभवतीत्यभिप्रायेणैतदभिहितमितिध्येयम् अग्निसंयोगनाश्येत्यस्य अग्निसमवधानाभावेनेत्यादिः तेनघृतद्रवत्वसामान्यस्यैवअग्निसंयोगनाश्यतावच्छेदकाक्रांततयातादृशघृतस्याप्रसिद्धावपिअग्नेरसमवधानेनअग्निसंयोगजन्यनाशाप्रतियोगिद्रवत्ववतोघृतस्यप्रसिद्ध्यानक्षतिः स्वसमानाधिकरणेतिगुणकर्मान्यत्वेसतिसत्त्वादित्यादौ––सतिसप्तम्याः सामानाधिकरण्या

दि॰॥ असतिप्रतिबन्धकइतिजलमध्यस्थघृतादौव्यभिचारवारणायासतिप्रतिबन्धकइतिअग्निसंयोगानाश्यद्रवत्ववतिघृतादौव्य।
भिचारवारणायसंयोगेऽत्यन्तम् तादृशद्रवत्वस्यस्वसमानाधिकरणात्यन्ताग्निसंयोगासमानकालीनत्वान्नव्यभिचारः अनुच्छि

मु॰॥ सुवर्णन्तैजसम् असतिप्रतिबन्धकेऽत्यन्तानलसंयोगेप्यनुच्छिद्यमानद्रवत्वात् य
न्नैवन्नैवंयथापृथिवीतिनचाप्रयोजकम् पृथिवीद्रवत्वस्यजन्यजलद्रवत्वस्यचा
त्यन्ताग्निसंयोगनाश्यत्वात् ननुपीतिमगुरुत्वाश्रयस्यपार्थिवस्यापितदानीन्द्रुतत्वा
त्तेनव्यभिचारइतिचेन्नजलमध्यस्थमसीसादृवत्तस्याद्रुतत्वात्॥ ६ ॥ ६ ॥

द्यमानद्रवत्वादित्यस्याऽनुच्छिद्यमानद्रवत्वाधिकरणत्वादित्यर्थोननूच्छिद्यमानद्रवत्वानधि–करणत्वादितिगगनादौव्यभिचारात्॥

र्थकतायाः गोऽनुद्यमानास्तुगतइत्यादौतस्याः समानकालीनत्वार्थकतायाश्चरूपत्वादितिभावः अनुच्छिद्यमानद्रवत्वस्यस्वसमवायिसंयोगरूपपरंपरयागगनादिसामानाधिकरण्येनव्यभिचारित्वापत्त्यासमवायेनतस्यहेतुतालाभायाधिकरणत्वांशंपूरयित्वाव्याचष्टेअनुच्छिद्यमानेत्यादिद्रवपदस्यगुणपरतायाअपिसंभवेनउच्छिद्यमानोद्रवोयस्यसउच्छिद्यमानद्रवः नोच्छिद्यमानद्रवोऽनुच्छिद्यमानद्रवः तस्यभावस्तत्त्वमितिव्युत्पत्तिलभ्यार्थकतांतत्पदस्यनिराकरोतिनन्विति अनधिकरणत्वादित्यस्यपूर्ववत्तेनेनेत्यर्थ इत्यनेनान्वयः ॥ अनुकूलतर्कत्वात् सुवर्णयदि
तैजसंनस्यात्तर्हितदागमप्रतिपाद्याग्न्यपत्यत्ववन्नस्यादितितर्कसत्त्वात्॥

का॰मु॰ रा॰॥ स्वसमवायिकारणसमवायिकारणकमपत्यशब्दार्थः जन्यमात्रं न तदर्थः तथासति तस्य कालाकाशादृष्टादेरपत्यत्वप्रसंगादिति भावः जाति
दि॰ए॰ विशेषमिति अन्यथा आश्रयनाशजन्यत्वस्य गुरुशरीरस्य जन्यतावच्छेदककोटिप्रवेशेन गौरवापत्तेरितिहृदयं इत्यपि परास्तमित्यपि नाता दृशागमस्य
८१ शब्दविधयापि सुवर्णस्य तैजसत्वे प्रमाणतासम्भविता सोदइति यद्यपि पार्थिवभागस्य तदानीं द्रवत्वांगीकारेपि तेजोरूपद्रवद्रव्यांतरस्य प्रतिबंधकस्य

दि॰॥ अत्यंताग्निसंयोगनाश्यत्वादिति एतच्चोपलक्षणम् अग्नेरपत्यम्प्रथमं हिरण्यमित्याद्यागमान्यथानुपपत्तेरप्यनुकूलतर्क
त्वादिति एतेनाश्रयनाशजन्यद्रवत्वनाशे व्यभिचारवारणाय द्रवत्वे आश्रयनाशनाश्यद्रवत्वव्यावृत्तज्जातिविशेषदत्त्वपि
त्वाविजातीयद्रवत्वनाशम्प्रत्यग्निसंयोगत्वेन हेतुतास्वीकार्या तच्च वैजात्यं सुवर्णद्रवत्वव्यावृत्तमपीतिदर्शितानुकूलतर्कोऽसङ्गतः

मु॰॥ अपरेतु पीतिमाश्रयस्यात्यन्ताग्निसंयोगेपि पूर्वरूपापरावृत्तिदर्शनात्त
त्प्रतिबंधकविजातीयद्रवद्रव्यं कल्प्यते तथाहि अत्यन्ताग्निसंयोगी पीतिमगु
रुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगेस
त्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात् तप्तजलमध्यस्थपीतपटवत्॥

सुवर्णस्य पृथिवीत्वेपि नदीयद्रवत्वस्याग्निसंयोगनाश्यतावच्छेदकानाक्रान्ततया अत्यन्ताग्निसंयोगसत्वेपि नाशापत्तेर
सम्भवादित्यपास्तम् सोदश्चूर्णम् तस्य पीतिमगुरुत्वाश्रयस्य ॥ ६ ॥

सत्वान्न व्यभिचार इति शक्यं नैव वक्तुं तथापि पार्थिवद्रवत्वनाशप्रतिबंधकत्वेन जलस्यैव क्लृप्ततया नैमित्तिकद्रवत्ववतस्तेजसोऽनुमानात्पूर्वमसि
द्धतया न तत्प्रतिबंधकसत्तामादाय व्यभिचारवारणसंभवः पार्थिवद्रवत्वनाशप्रतिबंधकत्वेन द्रव्यान्तरकल्पनं तु परेत्वित्यादिना वक्ष्यमाणं म॰ रा॰म॰
तांतरमेवानुसरतीति भावः तैजससुवर्णेपीतितन्त्रवक्ष्यमा॰॥ ६ ॥ ८१

ए॰॥ ण पृथिवीत्वघटितहेतोरभावेन अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतयाभागासिद्धिप्रसंगादिति भावः अत एव अग्निसंयोगभून्यपीतपार्थिवे साध्यस्य विजातीयद्रवद्रव्यसंयोगस्य हेतोश्च स्वसमानाधिकरणाग्निसंयोगकालीनपूर्वरूपविजातीयरूपानाधारत्वस्य न वा धासिध्योर्वारणाय अग्निसंयोगीति सार्थकं अत्र च यत्किंचित्पीतपटादौ साध्यस्योभयवादिसिद्धतया सामानाधिकरण्येन साध्यतायां सिद्धसाधनापत्त्या ऽवच्छेदकावच्छेदेनैव साध्यसिद्धिरुद्देश्येति बोध्यं तेन जलपरमाणाविति यद्यपि पूर्वहेतावपि जलपरमाणौ व्यभिचारस्तदवस्थ एव तत्रापि पृथिवीत्वस्य हेतु

दि॰॥ प्रकारान्तरेण सुवर्णस्य तैजसत्वं साधयतां मतमुपन्यस्यति अपरे त्वित्यादिना तत्प्रतिबन्धकम् रूपपरावृत्तिप्रतिबन्धकम् अत्यंताग्निसंयोगस्य तैजससुवर्णेपि सत्वादुक्तमग्नीतिमेति साध्ये विजातीयपदमुद्देश्यसिध्यर्थम् हेतौ सत्यन्तमग्निसंयोगरहिते पूर्वरूपविजातीयरूपानाधारे घटे व्यभिचारवारणायात्र हेतौ पृथिवीत्वन्देयं तेन जलपरमाणौ न व्यभिचारः यथाकथञ्चिदग्निसंयुक्ते घटे तद्वारणायात्यन्तेति न चाप्रयोजकत्वम् विरोधिद्रवद्रव्यसम्बन्धं विना पार्थिवाग्निसंयोगस्य पूर्वरूपविजातीयरूपजनकत्वादिति

मु॰॥ तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात्॥ ६ ॥

भावः न च द्रवद्रव्यादन्यदेव प्रतिबन्धकम्वाच्यम् अदृष्टकल्पनापत्तेरिति तस्य चेति द्रवद्रव्यस्येत्यर्थः पृथिवीजलभिन्नस्येति पृथिव्याः पक्षीकृतपीतिमाश्रयविजातीयत्वाभावाज्जलस्य तत्रासम्भवादिति भावः तेजस्त्वनियमादिति वाय्वादौ रूपाभावादिति भावः न चान्धकारेपीतिमरूपाश्रयद्रव्यग्रहापत्तिः सुवर्णरूपालोकसंयोगसत्वादिति वाच्यम् उद्भूतानभिभूतरूपालोकसंयोगस्यैवद्रव्यप्र॥ ॥विशेषणत्वहेत्वप्रसिद्धेरेवं पृथिव्यामग्निसंयोगानाश्यद्रवत्वाभावात्तथापि तत्र द्रवत्वपदस्य नैमित्तिकद्रवत्वार्थकत्वोपगमान्न व्यभिचार इति विभावनीयम् विरोधीति विजातीयरूपप्रतिबंधकेत्यर्थः द्रवद्रव्यादन्यत् अदृष्टादिकमित्यर्थः तत्रासंभवादिति सांसिद्धिकद्रवत्वस्य तत्रानुभवादिति भावः वाय्वादाविति यद्यपि तेजसोपि न तत्र रूपं प्रत्यक्षमिति रूपाभावो नैकं प्रतिबंधकत्वकल्पने बीजं तथापि पार्थिवरूपनाशे नीरूपद्रव्यसंयोगस्य प्रतिबंधकत्वे क्वापि पार्थिवरूपनाशः पाकेन न स्यात्तस्य सर्वदैवसंभवादिति रूपवत्त्वेद्रव्यांतरस्यैव तथात्वमंगीकरणीयमित्यभिप्रायेणैतदभिहितमित्यवधेयं॥ नद्रव्यांतरप्रतिबंधकत्वाकल्पनबीजम् इतिपाठान्तरम् रटि॰॥ न

हेतुत्वादितीति वस्तुतस्तु चाक्षुषत्वावच्छिन्नं प्रत्येवालोकसंयोगः कारणं न चालोकचाक्षुषे व्यभिचारः आलोकसंयोगस्यहि निष्ठतया अनुयोगि [illegible] संबंधेनालोकसंयोगस्यालो
केपि सत्वात् न चैवमप्यन्धकारे सुवर्णस्य प्रत्यक्षत्वापत्तिरिति वाच्यम् उत्कटरूपालोकसंयोगेनांधकारे घटादिप्रत्यक्षवारणायोद्भूतानभिभूतरूपवदालोकसंयोगस्य द्रव्यचाक्षुषं प्रति हे
तुत्वस्यावश्यकत्वेन प्रकृते च तदभावात् इत्थं चालोकभिन्नत्वस्य कार्यतावच्छेदककोटौ निवेशनं विफलमिव भाति इति बोध्यम्॰ दि॰ स॰॥
का॰मु॰ रा॰॥ तदानीमिति अंधकारस्थितिदशायामित्यर्थः सजातीयग्रहणकृतमिति रूपत्वेन स्वसजातीयं यत्पीतरूपं तत्प्रत्यक्षप्रयोज्यं अग्रहणं प्रत्यक्षादिविषयत्वा
दि॰रा॰ भाव इत्यर्थः तेजोभिन्नेति स्वस्मिन्स्वप्रतियोगिकसंयोगानंगीकारेण तेजोंतरासंयुक्ततेजःप्रत्यक्षानुपपत्या तथैव कार्यकारणभावस्य स्वीकरणीयत्वादि
८२ तिभावः यद्यपि तेजःसंयुक्तसंयोगत्वेन हेतुत्वे नियमानुपपत्तिस्तेजस्यपि तस्सत्वात् तथापि लाघवात्संयोगसंबंधेन तेजस एव द्रव्यप्रत्यक्षहेतुतायाः स्वीकरणीयत
यास्वस्मिन्संयोगे न स्वस्यासत्वात्तेजोभिन्नत्वं द्रव्यविशेषणमावश्यकमिति भावः द्रुतमिति इदं च जलमध्यस्थमसीसोदन्यायेन पीतद्रव्यस्य अद्रवत्वांगीकार

दि॰॥ त्यक्षे हेतुत्वात् सुवर्णरूपस्य त्वभिभूतत्वात् न च तदानीम्पीतरूपस्याप्यग्रहात् सजातीयग्रहणकृतमग्रहणन्न तु सुवर्णरूपस्येति न
तस्याभिभूतत्वमिति वाच्यम् लघुतया सजातीयसम्बन्धस्यैवाभिभवपदार्थत्वात् न च तथाप्यन्धकारे सुवर्णस्य साक्षात्कारापत्तिः तेजोभि
न्नद्रव्यप्रत्यक्षम्प्रत्येवालोकसंयोगस्य हेतुत्वादिति वाच्यम् सुवर्णाभिन्नं यत्तेजस्तद्भिन्नं यत्तेजस्तद्भिन्नद्रव्यप्रत्यक्षम्प्रत्येव तस्य हेतुत्वात्

मु॰॥ वायुन्निरूपयति अपाकजोनुष्णाशीतस्पर्शस्तु पवने मतः॥४२॥ तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः पूर्ववन्नि
त्यताद्युक्तन्देहव्यापित्वगिन्द्रियम्॥४३॥ अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्वादुक्तमपाकज इति अपाकजस्प
र्शस्य जलादावपि सत्वादुक्तमनुष्णाशीतेति॥ ११ नवीनास्तु सुवर्णम्पार्थिवमेव पीतं सुवर्णन्द्रुतमिति साक्षात्सम्बन्धेन द्रवत्व
प्रतीतेर्भ्रमत्वायोगात् द्रुतन्द्रुततरमिति प्रतीतेर्द्रवत्वस्याप्यंततउच्छेदात् पृथिवीत्वस्य पीतरूपसमवायिकारणतावच्छेदकत्वा
द्रूपनाशेतादात्म्येन स्वर्णस्य विरोधित्वाच्च न पीतरूपनाश इति वदन्ति इतितेजोग्रन्थः वायो प्रमाणन्दर्शयितुम्मूलेऽपाकजोह्यनु
ष्णाशीतस्पर्शस्तु पवने मत इत्युक्तं॥ ११ स्वग्रंथकृत्सम्मतत्वात्तदभिप्रायेणोक्तं द्रवत्वस्यापीत्यपिकार उच्छेदादित्यनंतरं योजनीयस्तथापि
जले द्रवत्वस्य पार्थिवद्रवत्वापेक्षयातिविलक्षणत्वात्सांसिद्धिकत्वाच्च न जलमित्यर्थः पीतरूपवत्वाच्च न पृथिव्यन्य इत्याह पृथिवीत्वस्येति ननु न
ध्वनिसंयोगे कुतो न रूपनाश इत्यत आह रूप[illegible]पिततदानीं द्रवत्वांगीकारसंभवेन प्रतीतेः प्रामा

ण्यसंभवात् द्रव्यांतरसंयोगस्यैव अन्यत्र पार्थिवरूपद्रवत्वनाशप्रति॰॥ अक्षरसइत्यर्थः २दि॰॥ ८२

ए॰॥ वंधकत्वेन क्लृप्ततयातत्रैवतादात्म्येनस्वस्यतदुभयनाशप्रतिवंधकताकल्पनेन्यत्रादृष्टकल्पनापत्तेःग्रन्थकृतापार्थिवस्यद्रवत्वानं
गीकारेणतदीयद्रवत्वनाशेद्रव्यांतरसंयोगस्यप्रतिवंधकत्वकल्पनाच्चैतन्मतेतत्रापिस्वस्यप्रतिवंधकताकल्पनाधिक्याच्चानुगंतव्यः इतिते
जोग्रंथः॥ अपाकजानुष्णाशीतस्पर्शवत्त्वमात्रेति पृथिवीत्ववारणायमात्रपदम् अपाकजानुष्णाशीतस्पर्शवद्भिन्नेपार्थिवपरमाणौपृथिवीत्व
स्यवृत्तेस्तद्व्युदासः अत्रचतादृशस्पर्शवन्मात्रवृत्तित्वंतादृशस्पर्शवद्भिन्नावृत्तित्वमात्रंनतुतादृशस्पर्शवद्वृत्तित्वमपितत्रघटकंप्रयोजन
विरहात्तादात्म्यत्वादेरपितादृशस्पर्शवद्भिन्नवृत्तित्वादेववारणात् पटत्वादिकमादायातिव्याप्तिवारणायसाक्षाद्व्याप्यत्वनिवेशः तच्चद्रव्य
त्वव्याप्यजात्यव्याप्यत्वमात्रंगुणादिवृत्तिजातीनांतादृशस्पर्शवद्भिन्नावृत्तित्वदलेनैववारणात् वायुपटद्वित्वमादायातिव्याप्तिवारणायजा
तिपदम् अपाकजस्पर्शवद्भिन्नावृत्तित्वनिवेशेनैवपृथिवीत्ववारणसंभवेपिजलत्वादीनामवारणादनुष्णाशीतस्पर्शवदित्युक्तंप्रथम
स्याधिकाभावद्वयावच्छिन्नेवृत्तिताद्वयघटितत्वेन आधिक्यादेकाधिकरणाधेयत्वघटितंलघुभूतंकल्पांतरमाह पाकजेति पृथिवीत्व
वारणायावृत्त्यंतंजलत्ववारणायवृत्त्यन्तंस्पर्शत्वव्याप्यजातिविशेषावच्छिन्नपरमनुष्णाशीतपदमितिलाभायैवात्रस्पर्शपदम् अ
न्यथाउष्णाशीतभिन्नज्ञानादिमद्वृत्तिआत्मत्वजातिमादायैव अतिव्याप्तेःपूर्वदलेस्पर्शपदंतुसमवायेनपाकजवत्त्वलाभायान्यथावा
योरपिकालिकादिनापाकजस्पर्शवत्तयाऽसंभवापत्तेरन्यत्पूर्ववदनुसंधेयं एतेनेति वस्तुतस्तुयद्यपीत्यादिनादर्शिताशंकानिरा
सायैवमूलेएतेनेत्यादिग्रंथः॥ १॥ १॥ १॥

स्पर्शादीनी लिंगानीति स्पर्शादिपक्षकानुमानानीत्यर्थः॥७॥ दि·॥ स·॥

का·मु·रा·॥ तथाचविजातीयस्पर्शवत्वस्यैववायुलक्षणत्वेनकोपिदोषइतिमूलाभिप्रायइतियुक्तमुत्पश्यामः सिद्धिसाधनवारणायेतिइदंचस्पर्शत्वसा

दि·रा· मानाधिकरण्येनद्रव्याश्रितत्वसाधनाभिप्रायेणावच्छेदकावच्छेदेनसाध्यसिद्धौसामानाधिकरण्येनसिद्धेरप्रतिबंधकत्वादेवमग्रेपिबोध्यम् शब्द

८३ दि·॥ तत्रापाकजादिपदानाङ्क्षमेणव्यावृत्तिमाह अनुष्णाशीतस्पर्शेति उक्तमपाकजइतीति यद्यप्यपाकजानुष्णाशीतस्पर्शवत्वस्यपटादा वतिव्याप्तिस्तथाप्यपाकजानुष्णाशीतस्पर्शवन्मात्रवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वम्पाकजानुष्णाशीतस्पर्शवद्वृत्ति अनुष्णाशीतस्प र्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वंवातदर्थोवसेयः एतेनस्पर्शस्यानुष्णाशीतत्वादिकथनेनतज्जनकतावच्छेदकमितितथाचविजातीय स्पर्शजनकतावच्छेदकतयावायुत्वजातिसिद्धिरित्यर्थः इदमुपलक्षणम् शब्दविशेषस्यवन्हित्वावच्छिन्नस्यवानिमित्तकारणतावच्छेदक तयावायुत्वजातिसिद्धिरित्यपिद्रष्टव्यम् मूलेस्पर्शादिलिङ्गकइतिस्पर्शादीनिलिङ्गानियस्यसतथाप्युक्तावल्यान्तु तीतिधृतिर्गुरुणोद्रव्य

मु·॥ एतेनवायवीयविजातीयस्पर्शोदर्शितः तज्जनकतावच्छेदकंवायुत्वमितिभावः एषवायुः स्पर्शादिलिङ्गकः वायुर्हिस्प र्शशब्दधृतिकम्पैरनुमीयते विजातीयस्पर्शेनविलक्षणशब्देनतृणादीनान्धृत्याशाखादीनाङ्कम्पनेनचवायोरनुमानात्॥

स्यापतनम् विजातीयस्पर्शेनेति तृतीयान्त ''चतुष्कमनुमानादित्यनेनान्वितम् अनुमितिप्रकारस्तुयोयंरूपवद्द्रव्यासमवेतस्पर्शः सक्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत् अत्रपृथिव्यादिस्पर्शेसिद्धसाधनवारणायरूपवद्द्रव्यासमवेतइतिविशेषणम् एव मसतिरूपवद्द्रव्याभिघातेयोपम्यर्णादिषुशब्दसन्तानः सस्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तान त्वात् दण्डाभिहतभेरीशब्दसन्तानवत् पृथिव्याद्यभिघातजन्यानिसिद्धसाधनवारणायासतीत्यादिपक्षविशेषणम् विभागजन्यानिशब्देव्य भिचारवारणायहेतावविभज्यमानेति एवन्नभसितृणतूलस्तनयित्नुविमानादीनान्धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका॥ ॥संतानइतियद्यपि वेगवद्द्रव्यसंयोगस्यैवशब्दजनकतयासाध्येस्पर्शवत्वविशेषणमनर्थकं शब्दजननेस्पर्शानुपयोगात्तथापिउक्तानुमानेनैववायोः स्पर्शस्यापिसिद्ध्यर्थंतदु पात्तंसाध्येव्यर्थविशेषणत्वस्यादोषत्वादितिध्येयम् गगनादिसंयोगहेतुकत्वसिद्ध्यर्थान्तरतावारणायस्पर्शवदितिनचैवमपितेजस्संयोगहेतुकत्वसिद्ध्यर्था

नि·जातीयस्पर्शेनेति अत्रतृतीयार्थोविशेषणत्वं तस्यचानुमानेनिरूपकत्वासंबन्धेनान्वयः तथाचविजातीयस्पर्शः किंचिद्द्रव्याश्रितः स्पर्शत्वादित्यनु मितेः किंचिद्द्रव्याश्रितत्वव्याप्यस्पर्शत्ववान् स्पर्शइतिलिंगपरामर्शात्मकानुमानस्यचास्पर्शविशेष्यकत्वादितिभावः॥ ८ दि·मु·स·॥

रा०॥ तत्र वेगपदं चात्र द्रव्यांतरक्रियाजनकवेगपरं तेन तेजस्यपि वेगसत्वेन तदुपादानेति नार्थांतरतापत्तिरेवं च स्पर्शवत्वोपादानं वायौ स्पर्शसिद्ध्यर्थमेवेत्यवधेयम् ॥ ॐ अस्मदाद्यनधिष्ठितेति प्रयत्नवदात्मसंयोगप्रयुक्तद्रव्यधृतित्वादित्यर्थः नौकादीति जलस्य द्रव्यधृतिवदित्यर्थः जलादिगतेति इदं चावच्छेदकावच्छेदेन साध्यसिद्धेर्नोद्देश्यता किंतु सामानाधिकरण्येनेत्यभिप्रायेण अन्यथा तादृशतृणादिधृतौ साध्यस्यासिद्धावपि वायुमात्राधिष्ठिततृणादिधृतावेव साध्यस्यासिद्धतया अवच्छेदकावच्छेदेन साध्यसिद्ध्यभावात्तादृशानुमितौ वाधकाभावेन सामानाधिकरण्येन साध्यसिद्धेरकिंचित्करत्वापातात् सामानाधिकरण्येन साध्यसिद्ध्यापि वायुसिद्धिसंभवेनावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे प्रयोजनाभावादिति भावः नभसीति वायुभिन्नस्पर्शवदनधिष्ठितेतितदर्थः नत्वसंयुक्तार्थकत्वं जलस्थतृणादिव्यावर्त्तनासंभवादिति मंतव्यं प्रयत्नवदिति परेश्वरधृतपृथिव्यादिलोकधृत्यादावित्यर्थः नत्वस्मदादिधृतघटा

दि॥ अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत् जलादिगततृणादौ सिद्धसाधनवारणाय नभसीति प्रयत्नवदात्मसंयोगहेतुक

मु०॥ यथा च वायुर्न प्रत्यक्षस्तथाग्रे वक्ष्यते पूर्ववदिति ॥ ६॥

धृत्यादौ व्यभिचारवारणायास्मदादीति एवं रूपवद्द्रव्याभिघातमन्तरेण तृणे कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यम् विजातीयकर्मत्वा

दिधृत्यादाविति तदर्थः संभवति तत्रास्मदादिहस्तादिरूपतादृशद्रव्यसंयोगहेतुकत्वरूपसाध्यस्यापि सत्वेन व्यभिचाराप्रसक्तेरिति ध्येयं कर्मणा वायुसिद्धिप्रकारमाह एवमित्यादिना पार्थिवाभिघातजन्यतृणादिकर्मणि सिद्धसाधनवारणायांतरेणेत्युक्तं साध्ये स्पर्शवत्वोपादानप्रयोजनं पूर्ववदेव चेष्टात्मकक्रियायां व्यभिचारवारणाय हेतौ विजातीयेति विलक्षणेति तदर्थः वेगाजन्यत्वे सति चेष्टाभिन्नत्वमेव प्रकृते वैलक्षण्यं न तु जातिविशेषः अवच्छेदकावच्छिन्नयत्नगतकारणतानिरूपितकार्यतावच्छेदकतया चेष्टायां जातिविशेषसिद्धिसंभवेपि अचेतननिष्ठक्रियासु तत्साधकप्रमाणाभावात् न च स्पर्शवद्द्रव्याभिघातजन्यतावच्छेदकतयापि अचेतनक्रियासु जात्यंतरसिद्धौ वाधकाभावादिति वाच्यम् ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

रा॰॥ तथा सति धूमादिपरामर्शजन्यतावच्छेदकतयापि अनुमितौ जातिविशेषाणां सिद्धिप्रसंगात् धूमादिलिंगकानुमितित्वस्यैव तत्कार्यतावच्छेदकतया सर्वैरूपगमेनेष्टापत्त्यसंभवात् प्रकारांतरेण कार्यकारणभावोपपत्तावतिरिक्तजातिकल्पनानौचित्यात् तत्तत्संतानक्रियाव्यक्तिभेदस्य दुर्वचतया चेष्टत इति प्रतीतौ विलक्षणतया च चेष्टात्वजातिसिद्धेर्निष्प्रत्यूहत्वादिति विभावनीयं पूर्वंप्रवाहः तदाह तत्त्वं तत्संयुक्तत्वमेव कारिकास्थ

दि॰॥ नदीपूराहतकाष्ठादिकर्मवदिति अग्रे वक्ष्यत इति अग्रे आत्मनिरूपणावसरे इत्यर्थः मूले पूर्ववन्नित्यताद्युक्तमिति· पूर्ववज्जलवदित्यर्थः नित्यतादीत्यादिनाऽनित्यत्वपरिग्रहः उक्तम्बोध्यमित्यर्थः एतदेवस्पष्टयति मुक्तावल्यां वायुर्द्विविध इति तत्र तेषु मध्ये अयोनिजमयोनिजमेवेत्यर्थः पिशाचादीनामिति मरुतां लोके प्रसिद्धमिति शेषः ननु वायोस्तालुत्वादिवाग्व्यापाराभावात् करचर

मु॰॥ वायुर्द्विविधो नित्योऽनित्यश्च परमाणुरूपो नित्यस्तदन्योऽनित्योऽवयवसमवेतश्च सोपि त्रिविधः शरीरेन्द्रियविषयभेदात् तत्र शरीरमयोनिजम्पिशाचादीनाम् परन्तु जलीयतैजसवायवीयशरीराणाम्पार्थिवभागोपष्टम्भात् उपभोगक्षमत्वञ्जलादीनाम्प्राधान्याज्जलीयत्वादिकमिति अत्र योविशेषस्तमाह देहव्यापीति·॥ ९ ॥ ६॥

णाद्यभावेन चाहरणविहरणाद्यभावात् कथम्भोगायतनत्वमित्यत आह परन्त्विति जलीयतैजसशरीरयोरप्याक्षेपस्य तुल्यत्वात् प्रकरणलाघवमभिप्रेत्य साधारण्येन समाधानमाह जलीयतैजसवायवीयेति ननु कथन्तर्हि जलीयत्वादिव्यपदेश इत्यत आह जलादीनामिति अत्र त्वगिन्द्रिये यो विशेषोऽधिष्ठानादिः॥ १ ॥ १॥ १ ॥ १ ॥ १ ॥

पूर्वपरस्याव्यवहितपूर्वार्थकत्वे तैजसि नित्यत्वादेः कारिकायां कंठतोऽनुक्तेरित्यतस्तदर्थमाह जलवदिति ननूक्तमित्यसंगतं कारिकायां वायोर्नित्यतादीनामनभिधानादित्यतस्तदर्थमाह बोध्यमितीति ॰॰ तेषामिति लोमादीनामित्यर्थः संयोगिद्रव्यत्वेन शरीरसंयुक्तद्रव्यत्वेनेत्यर्थः द्रव्यद्वयस्यैव संयोगसंभवात्लोम्नो न शरीरत्वमिति द्योतनाय शरीरसंयुक्तत्वाभिसंधानं॥

रा॰॥ यद्यप्येवमपि पुरीतति शरीरावयवनाडीविशेषे त्वगिंद्रियाभावेन तस्यैवमपि न देहव्यापकतासंभवः वपुषिज्ञानवारणानुरोधेन पुरीततो
तदनंगीकारात्तथापि देहव्यापकत्वं यावद्देहावयववृत्तित्वमेव विवक्षितं नच पुरीतति त्वगिंद्रियाभावे जनकमध्यस्य नाडीभागगतविशेषस्यैव
पुरीतत्त्वांगीकारेणास्तु तमेव पुरीतत्प्रदेशस्य नाड्यवयवत्वेपि शरीरावयवत्वाभावात् न च शरीरव्यापकत्वं शरीरनिष्ठभेदप्रतियोगिव्यधिकर
णाभावाप्रतियोगित्वमेव तथा च पुरीततः शरीरावयवत्वेपि तदवच्छेदेन शरीरवृत्त्यभावप्रतियोगित्वेपि त्वगिंद्रियस्य न शरीरव्यापकत्वानुपप

टि॰॥ शरीरव्यापकमिति न च नखलोमकेशादीनां त्वगिंद्रियानाधारत्वादसम्भव इति वाच्यम् तेषां संयोगिद्रव्यत्वेन शरीरत्वा
भावात् मूलस्थत्वमिंद्रियमित्यस्यात्वचि स्थितमिंद्रियमित्यर्थः एतेन देहसहजावरणं त्वगित्युच्यते तच्च पार्थिवमत्यस्तसि

मु॰॥ शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् तच्च वायवी
यं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् अङ्गसङ्गिस
लिलशैत्याभिव्यञ्जकव्यजनपवनवत्॥४२॥४३॥ ॥

द्धञ्चेति नेन्द्रियं तच्च वायवीयमिति परास्तम् त्वगिन्द्रियलक्षणमाह स्पर्शेति कार्यमात्रजनककालादावतिव्याप्तिवारणाये
न्द्रियमिति चक्षुराद्यावतिव्याप्तिवारणाय स्पर्शग्राहकमिति त्वक् त्वगिन्द्रियमित्यर्थः॥ १ ॥

त्तिरिति वाच्यं तथा सति केशादीनां शरीरावयवत्वेपि क्षतिविरहेण ग्रंथकृतां तेषां द्व्यांतरता व्यवस्थापनस्य वैकल्यापत्तेः परे तु सिद्धांते नभोभाग
एव पुरीतद्गगने त्वगभावादेव तत्र मनसोवस्थानदशायां ज्ञानानुत्पादः एतदभिप्रायेणैव रेरेमानसपालितं प्रतिजनुर्देहांतरे त्वं सदा तस्मात्कु
त्रापरांबुजेक्षणमपि प्रस्थीयतां रेमनः इत्थं प्रार्थितमानसं निजगृहप्रध्वंसशंकाकुलं मिथ्यामध्यवियद्गतं नच गतं तत्पादपंकेरुहं इति प्राचीनप
द्यं तदपि संगच्छत इति प्राहुः सहजावरणं स्वाभाविकावरणं चर्मरूपं कालादावित्ति यद्यपि स्पार्शनत्वावच्छिन्नजन्यतानिवेशेन कालादावतिव्याप्तेः आ
वश्यकश्च लक्षणे तादृशजन्यतानिवेशः॥ ॥ [illegible]विद्यामध्यविपद्गतमित्यपि पाठो दृश्यते वस्तुतस्तु नाडीमध्यविपद्गतमिति पाठः॥ स्व॰ टि॰।

रा॰॥ अन्यथाजन्यमात्रस्यकालोपाधितामतेचस्तुष्यतिव्याप्तिनादवस्थ्यात् नचप्रलयेक्रियथैवक्षणघटिकादिव्यवस्थाचाच्यातत्रतदनंगीकारेपुरा
णप्रसिद्धसृष्टिप्रलयकालयोरेकप्रमाणत्वस्य असंभवात् प्रलयेदिक्कालविभागोनास्तीत्यस्यमहाप्रलयपरत्वात् तथाचमहाप्रलयोपाधित्वंध्वंसेस्वीका
रेपितदतिरिक्तक्रियाभिन्नजन्यमात्रेकालोपाधित्वकल्पनेवीजाभावान्मतमेतदसंगतमितिवाच्यंतथासतीदानींतनदिनाद्युपाधित्वस्यानंतक्रियाव्यक्तिषुक
ल्पनेगौरवात् जन्यमात्रस्यतथात्वेतुदिनमात्रस्याप्येकघटादिव्यक्तेरेवतथात्वसंभवेनलाघवस्यैवतन्मूलतासंभवेनतादृशमतस्यसंगतत्वात् यापित्वकं

दि॰॥ तच्चेतित्वगिन्द्रियंचेत्यर्थः पक्षेस्पर्शत्वाभिव्यञ्जकत्वादसिद्धिवारणायरूपादिष्वमध्यइतिमनसिव्यभिचारवारणायएवकारः त्व
गिन्द्रियसन्निकर्षेव्यभिचारवारणायद्रव्यत्वेसतीत्यपिवोध्यम् अङ्गसङ्गिसलिलंस्वेदः।४२।४३। आकरेप्रसस्तपादभाष्योदौप्राण
स्त्वेकएवेतिकथनन्तुप्राणापानादिव्यवहारइत्यतआह स्थानभेदादितिहृदिप्राणोगुदेऽपानःसमानोनाभिसंस्थितःउदानःकण्ठदेशस्थो।

मु॰॥ विषयन्दर्शयति प्राणादिस्तुमहावायुपर्यन्तोविषयोमतः यद्यप्यनित्योवायुश्चतुर्विधस्तस्यचतुर्थोविधाप्रा
णादिरित्युक्तमाकरे तथापिसंक्षेपादेवन्त्रैविध्यमुक्तम् प्राणस्त्वेकएवहृदादिनानास्थानभेदान्मुखनिर्गमनादि
नानाक्रियाभेदाच्चनानासञ्ज्ञांल्लभतइति॰॥ ॥ ९ व्यानःसर्वशरीरगइतिनभेदादित्यर्थःक्रियाभेदाच्चेतिमुखना
सिकाभ्यान्निष्क्रमणप्रवेशनात्प्राणः मलादीनामधोनयनादपानःआहारेषुपाकार्थंवह्नेस्समुन्नयनात्समानःऊर्द्धुन्नयनादुदा
नः नाडीमुखेषुवितननाद्व्यानइतिक्रियाभेदाद्धिपञ्चसञ्ज्ञांलभतेनतुसञ्ज्ञाभेदेनसञ्ज्ञिभेदइतिभावः॥ ९ योगादावतिव्याप्तिवारणा
यैवइंद्रियपदमितिध्येयम् मूलेइंद्रियंत्वगित्यसंगतं त्वचश्चर्मरूपस्यइंद्रियाधिष्ठानत्वा दतइंद्रियपदपूरणेनतत्सत्वचिस्थितमिंद्रियमित्यर्थं
कतामाह त्वगिंद्रियमितिमध्यइत्तीति तत्सहितैवकारेणरूपाद्यव्यंजकत्वस्यैवलाभेनस्पर्शत्वव्यंजकत्वेत्वगिंद्रियस्यनस्वरूपासिद्धिरितिभावःवोध्य
मित्यस्यविशेषणमित्यादिः॥४२।४३॥ हृदिप्राणइत्यादेःहृन्मात्रावच्छिन्नइत्यादिरर्थः यथाश्रुतेव्यानस्यापिप्राणत्वापत्तिःसमुन्नयनमुद्दीपनंवा। एमः
न्हेर्वायुसखत्वेनवायुसहकारेणैवतदभिवृद्धिरितिभावः [illegible] ज्ञानमायुर्ग्रंथः॥ ९ ॥ ९ ॥ ९ ॥ ९ ८५

रा॰॥ ननु आकाशनिरूपणावसरे आकाशत्वं न जातिरित्येव वक्तव्यं कालत्वदिक्त्वयोस्तत्तन्निरूपणावसर एव जातित्वनिषेधौचित्यात् तत्किमुक्त
वल्लाभिरिदानीमेव तयोर्जातित्वनिराकरणमारभत इत्याशंकायामाह कालत्वमित्यादि अग्रे तत्तन्निरूपणावसरे तथा च न जातिरित्यस्य वारत्रय
लेखने ग्रंथगौरवं स्यादिति भावः तदित्यव्ययं तस्मादित्यर्थः ननु तथाप्यसंगताभिधानं दुर्वारमेवेत्यत आह प्रसंगादिति स्मृतस्योपेक्षानर्हत्वं प्रसंगः
एकहेतुकानुमितिविषयत्वेन तयोरपि स्मृतत्वादिति भावः तथा च प्रसंगसंगत्या तदभिधानान्नार्थांतरतापत्तिरिति बोध्यं मूले आकाशादीनामेक
व्यक्तिकत्वादिति हेतुना आकाशत्वादेर्जातित्वाभावे हेतुरुक्तस्तत्र हेतुसाध्ययोर्वैयधिकरण्यमाशंक्य हेतुं पूरयति अनेकेति यद्यपि आकाशादि

दि॰॥ आकाशेति कालत्वन्दिक्त्वञ्च जातिरित्यग्रे वक्तव्यम् तल्लाघवेनात्रैव प्रसङ्गात्तु गदभिदधाति न जातिरिति॥ अनेकसम
वेतत्वाभावादिति शेषः तेनैकव्यक्तित्वस्य जात्यभावहेतुत्वे वैयधिकरण्यमिति प्रत्युक्तम् किन्त्विति आश्रयता चात्र समवाये

मु॰॥ आकाशन्निरूपयति आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४॥ आकाशकाल
दिशामेकैकव्यक्तित्वादाकाशत्वादिकन्न जातिः॥ किन्तु आकाशत्वं शब्दाश्रयत्वम् ॥ ६ ॥

नविवक्षितानि तेन कालस्य जगदाधारत्वेन शब्दाश्रयत्वेपि न क्षतिः मूले वैशेषिकपदस्य वैयर्थ्यमाशङ्क्याह॥ ६ ॥ ६ ॥ ६॥

नामाकाशत्वादिकमेकव्यक्तिकत्वान्न जातिरित्यन्वयः तत्र च एकैव व्यक्तिराश्रयो यस्येति बहुव्रीहौ कप्रत्ययः तस्य भावस्तत्त्वं तस्मादित्यर्थः आश्रयेरा
कत्वं च स्वप्रतियोगिवृत्तिद्रव्यविभाजकोपाधिमत्त्वस्वाश्रयत्वोभयसंबंधेन भेदविशिष्टो यस्तदन्यत्वं एतादृशविशिष्टो घटादिर्नत्वाकाशः तदाश्रयक
त्वं तदाश्रितत्वमिति यावत् एवं रीत्या मूलोक्तहेतुरपि परिष्कर्तुं शक्यस्तथापि एतादृशहेतौ गौरवमालोचयताऽनेकानुयोगिकसमवायप्रतियोगिक
त्वेन हेतुः पूरितः अनेकत्वं नैकत्वभिन्नसंख्या तथा सति गुणे गुणानंगीकारेण गुणत्वजातावपि तथाविधसंख्यावदनुयोगिकसमवायप्रतियोगि
काभावसत्त्वेन व्यभिचारापत्तेः किंतु अपेक्षाबुद्धिविशेषविषयत्वं तच्च यद्यपि अपेक्षाबुद्धीनामननुगतत्वादननुगतं यत्किंचिदेक॥ ६ ॥ ६॥

का॰ उ॰ रा॰॥ बुद्धिव्यक्तिविषयानुयोगिकसमवायप्रतियोगिकाभावस्य घटत्वादिजातिसाधारण्येन हेतुत्वमसंभवदुक्तिकं तथापि स्वप्रतियोगिसमवेतत्व
दि॰ रा॰ स्वाश्रयसमवेतत्वोभयसंबंधेन भेदविशिष्टान्यत्वादित्यर्थे तात्पर्यान्न दोषः एतावतापि द्रव्यविभाजकोपाधिघटितमूलोक्तहेत्वपेक्षया लाघववान
८६ पायात् अत्र च लाघवात् समवेतत्वाभावस्यैव हेतुतायुक्तेति नाशंकनीयं शब्दसमवायिकारणत्वापेक्षया लाघवेन शब्दस्यैव आकाशत्वरूपतया
स्वरूपासिद्धिप्रसंगादित्यवधेयम् वैयधिकरण्यमितीति इदं च एकव्यक्तिरेवैकव्यक्तिकं तस्य भावस्तत्त्वमिति व्युत्पत्त्या एकव्यक्तिकत्वादित्यर्थे प
र्यवसितं मूलोक्तं तत्र च द्रव्यत्वादेरप्येकव्यक्तिकत्वेन व्यभिचारापत्त्या आकाशादीनामित्येकव्यक्तिकत्वादित्यनेनान्वितमित्यभिप्रायेणोक्तं यो का

दि॰॥ वैशेषिकइतीति इत्यत्र च शब्दइति मूलं सावधारणं ज्ञेयम् एतेन विशेषगुणत्वकथनेन प्रमाणमित्याकाश इत्यादिः तच्च शब्दः पृ
थिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादित्येवं रूपम्बोध्यम् दर्शितम् सूचितम् अत्रानुमाने स्वरू

सू॰॥ वैशेषिकइतिकथनन्तु विशेषगुणान्तरव्यवच्छेदाय एतेन प्रमाणमपि दर्शितम् तथाहि शब्दो गुणश्च
क्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत् शब्दो द्रव्यसमवेतः॥ ६ ॥ ६ ॥

पासिद्धिम्परिहर्तुमाह तथाहीति घटादौ व्यभिचारवारणाय चक्षुर्ग्रहणायोग्येति आत्मनि व्यभिचारवारणाय बहिरिन्द्रियग्राह्ये
ति रसत्वादौ व्यभिचारवारणाय जातिमत्त्वादिति एतच्चानुमानमग्रिमद्रव्यसमवेतत्वसाधकानुमाने स्वरूपासिद्धिनिरासायेति बोध्यम्॥

र्थकत्वे वैयधिकरण्याभावात् न चैवमिदानीं तादृशार्थे कैकव्यक्तिकत्वादित्यस्य हेतुत्वसंभवान्मूले तदुक्तिवैयर्थ्यमिति वाच्यम् हेतुसाधकत्वेनैव
तदुपन्यासादिति भावः इत्थं चेति वैशेषिकपदस्याकाशविशेषगुणान्तरव्यवच्छेदपरत्वे चेत्यर्थः सावधारणमिति शब्दएवेत्येवकारसहितमित्यर्थः
तथा सत्येवोक्तार्थलाभसंभवादिति भावः विशेषगुणत्वेति विशेषगुणत्वस्य शब्देसिद्ध्यनंतरमेव वक्ष्यमाणरीत्या काशसाधकवक्ष्यमाणहेतोः श
ब्देसिद्धिसंभवादिति भावः आकाशेप्रमाणप्रदर्शनरूपता शब्दएवाकाशविशेषगुणइत्यस्य न संभवतीत्यतो दर्शितमित्यस्यार्थमाह सूचितमिति रा॰ म॰
घटादावितित्वगिंद्रियजन्यलौकिकप्रत्यक्षविषयघटादौ व्यभिचारवारणायत्वस्य प्रत्यक्षसुर्ग्रहणायोग्येत्यस्य॥ ६ ॥ ८६

रा॰॥ चक्षुर्जन्यलौकिकप्रत्यक्षस्वरूपायोग्यत्वेसतीत्यर्थः घटः शब्दावच्छेदक इति शब्दांशे अलौकिकविषयताशालिचाक्षुषंप्रतिशब्दस्यापि स्वरूपयोग्यतयास्वरूपासिद्धिवारणायलौकिकत्वनिवेशः तादृशप्रत्यक्षविषयत्वोक्तौ चक्षुःसंयोगाद्यभावेन तादृशप्रत्यक्षविषयघटादौव्यभिचारतादवस्थ्यमतः स्वरूपयोग्यताप्रवेशः साचउद्भूतरूपंनयनसंगोचरइत्यादिनापरिगणितानामेवेतिभावः। वहिरिन्द्रियग्राह्येतिवहिरिंद्रियग्राह्यत्वंवहिरिंद्रियजन्यलौकिकप्रत्यक्षविषयत्वंव्यभिचारवारणायलौकिकत्वनिवेशः अथात्मनींद्रियग्राह्यद्रव्यत्वादिजातिसत्वाद्व्यभिचारोदुर्वारएवचनसत्यंतांज्ञानादेवविशेषणमस्तुतथाचद्रव्यत्वस्यचक्षुर्ग्रहणयोग्यतान्नतदादायात्मनिव्यभिचारइतिवाच्यम् तथासतिचाक्षुषाविषय

दि॰॥ गुणत्वादितिएतदनुमानेनोक्तपरिशेषानुमानेहेतौविशेष्यासिद्धिर्निरस्ताविशेषणासिद्धिद्वाराय आह शब्दोनस्पर्शवद्विशेषगुणाइति नस्पर्शवत्तोद्रव्यस्यपृथिव्यादिचतुष्टयस्यविशेषगुणइत्यर्थः अकारणगुणपूर्वकप्रत्यक्षत्वादिति अकारणगुणपूर्व

मु॰॥ गुणत्वात्संयोगवदित्यनुमानेनशब्दस्यद्रव्यसमवेतत्वेसिद्धेशब्दोनस्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावेसति अकारणगुणपूर्वकप्रत्यक्षत्वात्सुखवत् ॥ ६ ॥ ६ ॥

कत्वेसतिप्रत्यक्षत्वादित्यर्थः हेतौसत्वन्तपादपतिपाकजेतिजलपरमाण्विति अनित्यानाम्पार्थिवरूपादीनाङ्केषाञ्चिदग्निसंयोगासमवायिकारणकत्वात् केषाञ्चित्कारणपूर्वकत्वादत्रोपेक्षानदिक्कालेतिशब्दइत्यनुवर्त्तते ॥ ६ ॥ ६ ॥

त्वोक्तौवसामंजस्येयोग्यताविशेषनिवेशनवैयर्थ्यापत्तेः चाक्षुषाविषयवहिरिंद्रियग्राह्यगुणावृत्तिजातौमानाभावेनतादृशजातिमादायव्यभिचाराप्रसक्तेरितिचेन्नैवंवहिरिंद्रियग्राह्यजातिमत्वादित्यस्यवहिरिंद्रियग्राह्यत्वेसतिजातिमत्वादित्यर्थकतयाआत्मनिव्यभिचारानवकाशात् शब्दध्वंसादौव्यभिचारवारणायैवजातिमत्वस्यसार्थकताचननैवंभागासिद्धिरितिवाच्यंवहिरिंद्रियग्राह्यशब्दसंभवेपिशब्दत्वसामानाधिकरण्येनअष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसिद्ध्याप्याकाशसिद्धिसंभवेनशब्दत्वावच्छेदेनगुणत्वसाधनेप्रयोजनाभावेनसामानाधिकरण्येनगुणत्वसिद्धेरुद्देश्यत्वात्सामानाधिकरण्येनसाध्य॰॥

व्यभिचारदोषशून्यत्वम् ७।टि॰स॰।

का॰मु॰ रा॰॥ सिद्धेरुद्देश्यतायां भागासिद्धेरदोषत्वात् रसत्वादिव्यावृत्तयेऽसत्वाद्यैहेतोरभावज्ञानापेत्यर्थः अन्यथाचक्षुर्ग्रहणायोग्यत्वे सति रसनेन्द्रिय
दि॰रा॰ ग्राह्ये रसत्वे गुणत्वाभावेन व्यभिचारापत्तेरितिभावः शब्दे गुणत्वानुमानस्य प्रकृतोपयोगितां दर्शयति एतच्चेतिद्रव्यसमवेतत्वानुमानस्य फलमा
८७ ह एतदनुमानेनेति विशेषाभावसहकृतसामान्यहेतुकानुमानं परिशेषानुमानं स्पर्शवद्द्रव्यविशेषस्य गुणो नेति साधने पृथिव्यादि यत्किंचिद्द्रव्य
विशेषगुणत्वाभावसिद्धौ उद्देश्यभूतस्पर्शवद्द्रव्यसामान्यविशेषगुणत्वाभावासिद्धिरतो व्याचष्टे नस्पर्शवत् इत्यादि अपाकजत्वे सत्यकारणगुण

दि॰॥ वहिरिन्द्रियेति मनसोऽन्यदिन्द्रियं वहिरिन्द्रियम् अयोग्यत्वात्प्रत्यक्षत्वादित्यर्थः एतेनात्मगुणग्राहकेन्द्रियत्वं वाह्येन्द्रिय
त्वं तच्च मनस्यतिप्रसक्तं तेनापि रूपादिग्रहणादिति निरस्तम् इत्यज्ञानेन प्रकारेण पृथिव्याद्यष्टद्रव्यानाश्रितत्वसिद्धौ च सिद्ध
तीति पूर्वोक्तपरिशेषानुमानेन सिद्ध्यतीत्यर्थः नन्वेतत्सर्वं न्नदोपपद्येत यदि शब्दस्य विशेषगुणत्वे किञ्चित्प्रमाणं स्यात्तत्रैव मा

मु॰॥ पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति जलपरमाणु
रूपादौ व्यभिचारवारणाय प्रत्यक्षेति नदिक्कालमनसां गुणाः विशेषगुणत्वात् रूपवत् नात्मविशेषगुणाः वहिरि
न्द्रिययोग्यत्वात् रूपवत् इत्यञ्च शब्दाधिकरणं नवमं द्रव्यमङ्गगमात्मकं सिध्यति॥ ९९नन्च पश्यामइतिचेन्न शब्दोवि
शेषगुणः लौकिकप्रत्यासत्त्येन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्याद्वीन्द्रियग्रहणयोग्यतारहित्ये च सति गुणत्वव्याप्यजातिम
त्वादित्यनुमानस्यैव तत्र प्रमाणत्वात्॥ ९९पूर्वकप्रत्यक्षविषयत्वादित्यस्य हेतुत्वे कारणगुणपूर्वकरूपादौ व्यभिचारः आत्मनः कारणाभा
वेन प्रत्यक्षमात्रस्यैव कारणगुणपूर्वकत्वादतस्तदर्थमाह अकारणेति पाकजेतीति पाकजत्वात्तैव कारणगुणजन्यत्वाभाववलाभेनाकारणगु मु॰
णपूर्वकत्वे सति प्रत्यक्षत्वरूपहेतुप्रतिपत्तिसंभवादितिभावः अत्रोपेक्षेति अत्र प्रत्यक्षत्वदलव्यावृत्तिप्रदर्शने उपेक्षा तेषामग्रहणम् त दि॰
त्प्रत्यक्षत्वात्तज्जन्यप्रत्यक्षविषयत्वादित्यर्थः प्रमाणं स्यादिति शब्दस्य सामान्यगुणत्वे अष्टद्रव्यानाश्रितत्वरूपविशेषणासिद्धिप्रसंगात्कर्मजसंयोगादौ रामः
व्यभिचारेण उक्तहेतुना स्पर्शवद्गुणभेदसाधनासंभवेन स्पर्शवद्विशेषगुणभेदसाधने च स्पर्शवतां सामान्यगुणत्वसंभवादितिभावः लौकिकप्रत्यास ८७

रा॰॥ इदंचगुरुत्वत्वादेरुपनयसन्निकर्षेणेंद्रियग्राह्यत्वमादायव्यभिचारवारणायद्वितीयमपिएतादृशपदंशब्दस्पर्शयोरुपनयसन्निकर्षेणचक्षुर्ग्राह्यतयाअसिद्धिवारणायैवहीन्द्रियेतिजातौतत्तदिंद्रियग्रहणयोग्यत्वंतत्तदिंद्रिययोग्यवृत्तित्वमेवहीन्द्रियपदंतुविजातीयेंद्रियद्वयपरंबोध्यम् अन्यथारूपादीनामपिचक्षुर्द्वयग्रहणयोग्यतयाद्वींद्रियग्रहणयोग्याप्रसिद्धेः यद्यपिसंख्यात्वादीनांसर्वासामेवजातीनांकालभेदेनपुरुषभेदेनचद्वींद्रियग्राह्यतयाद्वींद्रियाग्राह्यत्वेसतीत्येवक्तुमुचितंयोग्यतानिवेशप्रयोजनाभावात्तथापींद्रियद्वयजन्यत्वस्यकाप्यसंभवेनाप्रसिद्ध्यापत्यातथानोक्तंनचस्वात्मकेंद्रियजन्यग्रहविषयत्वस्वजन्यविजातीयेंद्रियजन्यग्रहविषयत्वोभयसंबंधेनेंद्रियवि

दि॰॥ प्रभात्वमादायव्यभिचारवारणायगुणत्वव्याप्येतिगुरुत्वत्वमादायव्यभिचारवारणायप्रथमंसत्यन्तम् संख्यात्वमादायव्यभिचारवारणायद्वितीयंसत्यन्तम् सांसिद्धिकद्रवत्वस्नेहधर्माधर्मभावनासुप्रकृतहेतोरभावेपितत्रहेत्वन्तरेणैवविशेषगुण

मु॰॥ नचवाय्ववयवेषुसूक्ष्मशब्दक्रमेणवायौकारणगुणपूर्वकःशब्दउत्पद्यतामितिवाच्यम्॥ २

त्वंसाधनीयमितिपूर्वोक्तानुमानेबाधस्वरूपासिद्ध्योराशङ्कातेनचेतिवायावितितथाचस्पर्शवद्वायुगुणत्वस्यतत्रसत्वात्तदभावसाधनेबाधइतिभावःकारणगुणपूर्वकत्वकथनन्तुकारणपूर्वकत्वघटितहेतोरसिद्धिप्रदर्शनार्थम्॥ ६ ॥ ६ ॥

शिष्टत्वरूपंद्वींद्रियग्राह्यत्वमनुगतंनिर्वक्तुंशक्यमितिवाच्यम् जन्यत्वादिप्रवेशेमैतस्यअतिगुरुत्वादित्यभिप्रायात् नचैवंइंद्रिययोग्यत्वमपितज्जन्यलौकिकप्रत्यक्षविषयवृत्तिसत्वमेवेतिआधेयत्वमधिकमेवयोग्यतानिवेशपक्षइतिवाच्यम् चक्षुर्योग्यत्वमुद्भूतरूपाद्यन्यतमत्वंत्वग्योग्यत्वमुद्भूतस्पर्शाद्यन्यतमत्वमेवंरूपत्वादीन्द्रिययोग्यतायाःअन्यतमत्वंचभेदकूटावच्छिन्नभेदस्तस्यचतद्व्यक्तित्वेनैवयोग्यताघटकत्वोपगमेनलाघवानपायादितिध्येयंसांसिद्धिकेतितथाविधद्रव्यत्वत्वस्नेहत्वयोस्त्वक्चक्षुरुभयग्राह्यत्वाद्धर्माधर्मभावनानामतींद्रियत्वान्नतेषुहेतुसत्वमितिभावःहेत्वंतरेणैवेति॥ ६ ॥ ६ ॥ ६ ॥

का॰मु॰ रा॰॥ एते पंच विशेषगुणाः स्थितिस्थापकान्यत्वे सति विभिन्नद्रव्यविभाजकोपाधिमद्व्यक्तिद्वयवृत्तिनानवच्छेदकगुणत्वव्याप्यजातिमत्वात्सुखव
दि॰ रा॰ दित्येवमनुमानं बोध्यं पूर्वोक्तानुमाने स्पर्शे वृद्धिशेषगुणत्वाभावसाध्यकानुमाने हेतोरसिद्धिप्रदर्शनार्थमित्यस्य पक्ष इत्यादिः चक्षुष इति नीलं नभ इ
८८ ति चाक्षुषभ्रमात्प्रमेत्युक्तं।४४। अतिगौरवमिति विगमनाविरहेण नानाजीवेषु शब्दसमवायिकारणतया अतिरिक्तप्रतिबध्यप्रतिबंधकभाव

दि॰॥ अयावद्द्रव्यभावित्वेनेति स्वाश्रयनाशजन्यनाशप्रतियोगियद्यत्तद्भिन्नत्वेनेत्यर्थः ननु तथाप्याकाशे प्रत्यक्षमेव प्रमाणङ्किमि
तिनोपन्यस्तमिति चेन्न चाक्षुषत्वप्रयोजकस्य महत्वे सत्युद्भूतरूपवत्वस्याकाशे ऽसम्भवेन चक्षुषः प्रमाजनकत्वासम्भवात् ननु
यद्याकाशो न चाक्षुषस्तदेह पक्षीति चाक्षुषाधिकरणत्वेन किम्भासते इति चेदालोक एवेति परिकलप।४५। नन्वाकाशीयशरीर।
विषययोः प्रदर्शनमुज्झित्वा कथमिन्द्रियप्रदर्शनमिन्द्रियन्तु भवेच्छ्रोत्रमित्यनेन ग्रन्थेन क्रियत ॥ शङ्काह तत्र चेति आकाशे

मु॰॥ अयावद्द्रव्यभावित्वेन वायोर्विशेषगुणत्वाभावात्।४४। तत्र च शरीरस्य विषयस्य चाभावात् इन्द्रियं दर्शयति इ।
न्द्रियन्तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः नन्वाकाशे लाघवादेकं सिद्धं श्रोत्रं पुरुषभेदाद्भिन्नं कथमाकाशं स्यादिति
चेत्तत्राह एक इति आकाश एकः सन्नपि उपाधेः कर्णशष्कुलीभेदाद्भिन्नः श्रोत्रात्मकम्भवतीत्यर्थः॥ ६ ॥ ६ ॥

चेत्यर्थः कर्णशष्कुलीभेदादिति चैत्रादिकर्णशष्कुल्यवच्छिन्नमाकाशं चैत्रादिश्रोत्रमिति भावः नव्यास्तु शब्दनिमित्तकारणत्वे
न कॢप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वं न चेश्वरस्य शब्दसमवायिकारणत्वे जीवस्येव तत्र विनिगमनाविरहः जीवस्य
शब्दसमवायित्वे ज्ञानवच्छब्दस्यापि मानसत्वापत्तेः अदृष्टादिवत्प्रतिबन्धककल्पने चातिगौरवम् न चैवङ्कर्णशष्कुलीवि
वरावच्छिन्नाकाशस्य कथं श्रोत्रत्वोपपत्तिरिति वाच्यम् तथाविधस्येश्वरस्यैव श्रोत्रत्वोपपत्तेरित्याहुः॥ कल्पनायाश्चापत्तिरिति
भावः न च कालदिशावादाय विनिगमनाविरह इति वाच्यं नवीनैस्तयोरपीश्वर एवान्तर्भावितत्वादिति मंतव्यं अथ स्वतंत्रमते शब्दग्राहकमिं रा॰म॰
द्रियं किंस्वरूपं कर्णशष्कुलीस्वरूपमेव वधिरस्य शब्दप्रत्यक्षवारणाय शरीरस्य दोषविशेषस्य तत्प्रत्यक्षप्रतिबंधकताकल्पनस्य सर्वमत॥ ८८

रा॰॥ तएवावश्यकंयाशष्कुलीमात्रस्यश्रोत्रत्वेपितत्कल्पनाधिक्यविरहादितिचेत्तर्हिमृदंगसमवेतशब्देश्रोत्रस्यकस्सन्निकर्षःस्वसंयोगिसंयुक्तसमवायइतिचेत्तंसन्निकर्षांतरकल्पनागौरवादितिमैवंतत्तदात्मनएवतदीयश्रोत्रेंद्रियत्वोपगमात् नचकर्तृत्वकरणत्वयोर्विरोधात्कथमेतदितिवाच्यम् स्वात्मानंवेत्तीत्यादौकर्तृत्वकर्मत्वयोरिवतयोरप्यविरोधादित्थंचकेवलसमवायस्यसन्निकर्षत्वाकल्पनेनलाघवान्तरमपि नचकर्णशष्कुलीपिधानदशायामपिशब्दप्रत्यक्षापत्तिरितिवाच्यम् तथाविधाकाशस्यश्रोत्रतामतेपिकेनापिवस्तुनाव्यवधीयमानाकाशेश

दि॰॥ स्वतन्त्रास्तुमृदङ्गादीनामेवगुणःशब्दःशब्दम्प्रतिमृदङ्गत्वादिनासमवायिकारणतायाःस्वीकारात् प्राचीनैरपिमृदङ्गत्वादिनानिमित्तकारणतायाःस्वीकारात् मृदङ्गेशब्दइत्यादिप्रतीतेश्च नचतत्रावच्छेदकत्वंविषयःमानाभावात् अन्यथातत्रावच्छेदकताख्यस्वरूपसम्बन्धस्यान्यत्रसमवायस्यकल्पनेगौरवादितिवदन्तीति इत्याकाशग्रन्थः॥मूलेजन्यानाञ्जन

मु॰॥ जन्यानाञ्जनकःकालोजगतामाश्रयोमतः॥४५॥ तत्रप्रमाणंदर्शयितुमाहजगतामाश्रयइतिइदानीम्घटइत्यादिप्रतीतिः॥

कइति कार्यत्वावच्छिन्नम्प्रतिनिमित्तकारणमित्यर्थःअत्रचकालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणतयानिमित्तत्वङ्काललक्षणम्॥ १॥ १॥

व्द्योत्पत्तौबाधकाभावेनतस्यतत्प्रत्यक्षप्रतिबंधकताकल्पनायांसिद्धांतेप्यावश्यकत्वादितिदिक् इत्याकाशग्रंथःकार्यसामान्येकालस्यसमवायिकारणत्वासंभवादसमवायिकारणत्वस्यचद्रव्येसत्वाज्जनकपदंनिमित्तकारणपरतयाव्याचष्टेनिमित्तकारणमित्यर्थइतिमूलेजगतामाश्रयइत्यस्यकालप्रमाणप्रदर्शनपरतयाव्याख्येयतयाजन्यानामित्यादिकंकाललक्षणप्रदर्शनपरमेवेतिवाच्यंलक्षणप्रामाण्यस्वरूपाभिधानस्यैवनिरूपणशब्दार्थत्वात्तच्चनसंभवतिदिगादीनामपिकार्यसामान्येनिमित्तकारणत्वेनातिप्रसंगादित्यतआहअत्रेति॥ २॥ २॥

का॰मु॰ रा॰॥ अधिकरणविधयेति अधिकरणत्वेनेत्यर्थः यद्यपि कार्यमात्रंप्रति कालस्यकालत्वेनैव कारणतायुक्ता अधिकरणत्वस्य दिगाद्यतिप्रस
दि॰रा॰ क्तत्वेन कालनिष्ठकारणतायामवच्छेदकत्वासंभवात्तथापि कालत्वस्यैकव्यक्तिकत्वेन जातित्वासंभवात् कालिकसंबन्धावच्छिन्नाधि
८० करणत्वादतिरिक्तत्वस्य कालत्वस्य निर्वक्तुमशक्यतया अधिकरणविधयेत्युक्तं तथाच निरुक्तकालत्वस्याधिकरणतारूपत्वान्नासं
तिः एवदिक्कमपि दिक्कृतविशेषणतयाधिकरणत्वमेव नातोदिश्यति व्याप्त्यभिधानासंगतिरिति केचित् तदसत् तथासति महाकालल
क्षणस्य घटादावतिव्याप्त्यापत्तेरग्रे तत्रैव प्रमाणस्य प्रदर्शनीयतया तस्यैवलक्ष्यत्वावधारणात् परंतु तस्य तादात्म्यसंबंधेनेत्येवार्थः आ

दि॰॥ कालिकसम्बन्धावच्छिन्नेति करणादिष्वधिकरणतयेति करणादृष्टेश्वरयोर्नो
तिव्याप्तिरिति बोध्यम् ननु कार्यमात्रम्प्रति कालस्य निमित्तकारणत्वे किम्मानमिति
चेदत्राहुः अद्य घटो भवति श्वः पटो भविष्यतीत्यादिप्रत्ययेन तत्तत्कार्योत्पत्त्यधिकरणत्वे
न कालो विषयीक्रियते तत्तदुत्पत्त्यधिकरणत्वेन व्यवहारविषयस्य च तत्तदुत्पत्ति
हेतुत्वनियमात् तदुत्पत्तिहेतुत्वस्य तद्धेतुत्वव्याप्यत्वात् ॥ ६ ॥

धारस्य सर्वत्र तेनैव कारणत्वात् निमित्तत्वं कारणत्वं न तु निमित्तकारणत्वं तन्निवेशे प्रयोजनाभावादिति ध्येयम् दिशीत्यस्य नातिव्याप्ति
रित्यग्रतनेनान्वयः अदृष्टेश्वरयोरित्यत्रेश्वरग्रहणं कार्यमात्रे कर्तुरेव कारणत्वाभिप्रायेण कृतिकारणतामते तु ईश्वरपदं तत्कृतिपरमि
ति द्रष्टव्यं उत्पत्त्यधिकरणत्वेनेति भूधातोः प्रकृते उत्पत्त्यर्थत्वादिति भावः व्यवहारविषयस्येति कपाले घट उत्पद्यत इत्यादौ तथादर्शनादिति भावः
यद्यपि कपालादेर्न घटोत्पत्तिसाक्षादाधारत्वं तथापि गृहे पचतीत्यादाविव परंपरया तथात्वं बोध्यम् यद्यपि आद्यक्षणसंबंधरूपाया उत्पत्ते एमः
स्तनद्विशेषणाविशिष्टक्रियाद्यात्मकत्वेन ताद्दशक्षणासंयोगिककालिकसंबंधस्य ताद्दशक्षणस्वरूपत्वा॰॥ ६ ॥ ८१

रा॰॥तथाचनाहृशक्षणहेतुतातत्तद्दिवसादौविप्रतिपन्नैवकपालादिदृष्टांते असंभवदुक्तिकंचउक्तनियमोप्यप्रयोजकत्वेनविप्रतिपन्नएव
तथापियदुत्पन्याधारत्वेनप्रतिपन्नोनतत्कारणमित्येवंनियमस्यैवोपगमसंभवादुत्पत्तिनिवेशप्रयोजनाभावएवपरंतुउत्पत्तेराकस्मिक
त्वापत्तिवारणायैवनियमेउत्पत्तेःप्रवेशितत्तयायदिनस्याःक्रियाद्यात्मकत्तातदातासांस्वकारणानियम्यतयानाकस्मिकत्तापत्तिरितितन्निवेशो
व्यर्थएवएवंचकालविशेषनियतास्रफलादौकालविशेषकारणत्तायाआवश्यकत्वेनयद्विशेषयोरितिन्यायेनकार्यसामान्येकालस्यहेतुता

दि॰॥एवञ्चतत्तत्कार्यविशेषम्प्रतितत्तत्कालविशेषस्यहेतुत्वेसिद्धेयद्विशेषयोरितिव्याप्त्याकार्यमात्रेकालस्यहेतुतासिद्धि
रितिसाचहेतुतानिमित्तकारणतैव नचकार्यमात्रेकालस्यहेतुत्वन्नसम्भवतिस्वसमवेतद्वित्वपृथक्त्वसंयोगविभागम्प्र
तिकालस्यसमवायिकारणत्वेनतद्भिन्नत्वघटितस्यनिमित्तकारणत्वस्यतत्राभावादित्याचार्योक्तिंशङ्क्यम् समवायसम्ब
न्धेनद्वित्वादिकम्प्रतितस्यसमवायिकारणत्वेपिकालिकसम्बन्धेनद्वित्वादिकम्प्रतिनिमित्तकारणत्वस्यानपायात् एव
मेवकार्यमात्रेदिशोपिनिमित्तकारणत्वम्बोध्यम् मुक्तावल्यान्तत्रेति तत्रकालेजगतामाश्रयोमत्तइतिकालःसर्ववानि
तिप्रतीत्यासर्वाधिकरणत्वेनकालसिद्धिरितिभावः नन्वेतादृशीप्रतीतिर्दिग्विषयिण्येवास्तु अतिरिक्तकालकल्पने
गौरवादितिनकेवलमनयाकालःसिध्यतिपरन्तुप्रमाणान्तरेणकालेसिद्धेप्रकृतप्रतीतिबलात्सर्वाधारत्वङ्कल्प्यतइ
त्याह इदानीमित्यादिना॰ ॥ ६ ॥

सिद्धेरितियुक्तमुत्पश्यामः एतदभिप्रायेणैवास्वरससूचनायाहुरित्युक्तंसाचेतिइतरकारणतायाउक्तरीत्याकालेऽसंभवादितिभावः इदानीमि
त्यादिप्रतीतीनांसूर्यपरिस्पंदविषयकत्वंमूलेप्रतिपादितंतदुपपादयति इदानीमित्यादिना ❀ प्रतीत्यनुदयापत्तेरिति महाकालस्यसर्वाधा
रत्वादितिभावःयद्यपितदानींनघटइतिप्रतीतेरेववाधितार्थकत्तानविदानींघटइत्यस्येति इदानींघटइतिभागस्यप्रकृतेनोपयोगस्तथापि
कालस्यगगनादिवन्नकस्यापिकालिकसंबंधेन॰॥

का॰मु॰ रा॰॥ आधारतेति नतदानीं घट इत्यस्यानुपपत्तिरिति यदि ब्रूयात्तदेदानीं घट इत्यपि न स्यादित्यावेदयितुं तदुपादानमिति ध्येयं आकाश एवेति
दि॰रा॰ स्वाश्रयसंयोगिसंयोगरूपपरंपरासंबंधस्याकाशमादायापि घटयितुं शक्यत्वादिति भावः तथात्वात्संबंधघटकत्वात् यद्यपि स्वसंयोगित्वे
१० नैवाकाशादीनां संबंधघटकतानत्वाकाशत्वादिनेति न विनिगमनाविरहावकाशस्तज्जन्यरूपेणक्लृप्तविभूनां सर्वेषामेव संबंधघटकत्वमपीष्टमे
व विनिगमनाविरहात् नचानंतव्यक्तीनां तादृशपरंपराघटकत्वकल्पनापेक्षया एकातिरिक्तव्यक्तिकल्पनमेव लघ्विति वाच्यं कालस्य संयोगिसं

दि॰॥ सूर्यपरिस्पन्दादिकमिति नचेदानीन्तदानीमिति प्रतीतिर्महाकालं विषयीकरोतीति वाच्यम् तथा सतीदानीं पटो न तदानी
मिति प्रत्ययानुपपत्तेः नच तत्तत्क्रियाविशिष्टमहाकाल एवेदानीमित्यादिप्रत्ययविषयस्तथा चेदानीं घटो न तदानीमिति प्र
त्ययस्यैतत्क्रियाविशिष्टमहाकाले घटो न तत्तत्क्रियाविशिष्टमहाकाल इत्यर्थ इति वाच्यम् तथा सति तत्तत्क्रियाविशिष्टमहाका

मु॰॥ सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः
स च सम्बंधः संयोगादिर्न सम्भवतीति काल एव सम्बन्धघटकः कल्प्यते॰॥ ६ ॥

लापेक्षया लाघवेन तत्तत्क्रियाया एव तादृशप्रतीतिविषयत्वस्योचितत्वात् इतीत्यनन्तरं स्वाश्रयतपनसंयोगिसंयोग एव सम्ब
न्धो वाच्यस्तत्रेति शेषः नचाकाशमेव सम्बन्धघटकमास्तामिति वाच्यम् आकाशदिगात्मनां विनिगमनाविरहेणातिरिक्तैकका
लस्यैव तथात्वात्॥ ९ योगघटकतापाः स्वसंयोगिन्याकाशादिव्यावर्तकविशेषणदुर्वारोपपादत्वादिदमसंगतं तथापि अनंतानामा
काशादिसंयोगव्यक्तीनां घटीयसंसर्गता विनिगमनाविरहेण कल्पनीया अतिरिक्तकालव्यक्तिकल्पने तु तदीयसंयोगमात्र एव तत्कल्पनमिति ला एमः
घवं क्लृप्ताकाशादिसंयोगमादायाक्लृप्तकालसंयोगस्य विनिगमनाविरहो न संभवतीति पूर्वमेवावेदितमिति तात्पर्यमवगंतव्यम्॥ ६ ॥ १०
स्वसंयोगिनाकाशादिनैवाधारताप्रत्ययस्योपगंतव्यतया गौरवापत्तेः साक्षादधिकरणत्वोपगमस्य नानाव्यक्तिषु तदनंतपदार्थीयकालिक
संबंधत्वकल्पनाप्रयुक्तगौरवस्य सत्त्वादिति ध्येयम्॥ स्वसंयोगि [illegible] तयामित्यत्र पर्यंतपाठस्य स्थाने ये पाठो बोध्यः टि॰॥१०॥

रा॰॥ अतिरिक्तकालेति कालातिरिक्तद्रव्यसत्त्वे उक्तप्रतीतेर्दिग्विषयकत्वानुपपत्तेः दिशोऽनुल्लेखात्कालपदस्य दिगर्थकत्वाच्च लक्षणां विना न संभवतीति तत्स्वीकारे मुख्यार्थपरित्यागापत्तेरिति भावः॥ ४५॥ मूले असाधारणं निमित्तमित्यस्य तादृशबुद्धित्वावच्छिन्नं प्रति निमित्तकारणमि त्यर्थो न संभवति तथाविधहेतुतायां मानाभावात्तत्तत्त्व्यवहारप्रयोजकार्थकतां स्पष्टयति ज्येष्ठ इत्यादिनाभावइत्यंतेन प्रमाणमिति प्रमाणं लक्षण

दि॰॥ इत्यन्वेति अतिरिक्तकालसिद्धौ चेत्यर्थः सम्यगिति कालः सर्वव्यावर्तितिप्रतीतेरतिरिक्तकालविषयकत्वस्योचितत्वादिति भा वः॥ ४५॥ परत्वापरत्वबुद्धेरिति ज्येष्ठे परत्वप्रत्ययः कनिष्ठे चापरत्वप्रत्ययः स च परत्वापरत्वगुणविशेषाधीनः परत्वापर त्वे च सासमवायिकारणके भावकार्यत्वात् असमवायिकारणञ्च तयोः कालपिण्डसंयोग एवेति परत्वापरत्वयोरसमवा

मु॰॥ इत्यन्वतस्याश्रयत्वमेव सम्यक्॥ ४५॥ प्रमाणान्तरन्दर्शयति परापरत्वधीहेतुः क्षणादिः स्यादुपाधि तः परत्वबुद्धेरसाधारणन्निमित्तङ्कालएव परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो ॥ १॥

यिकारणसंयोगाश्रयतया कालसिद्धिरिति भावः परत्वापरत्वयोरित्यस्यैव वक्तुमुचितत्वेऽपि तद्बुद्धिपर्यन्तानुधावनङ्कालि कपरत्वापरत्वयोः प्रमाणन्दर्शयितुम् न च पिण्डगतरूपादेव परत्वापरत्वसमवायिकारणत्वमस्त्विति वाच्यम् कालिकपरत्वापरत्वयोर्वायावणुत्पत्त्याव्यभिचारात्॥ १॥ १॥

परं इति विलक्षणप्रतीत्यैव कालिकपरत्वापरत्वयोः सिद्धिस्तादृशप्रतीतेः दिक्कृतपरत्वादिविषयकत्वासंभवादिति भावः प्रत्यक्षे विषयस्य का रणतया विषयप्रयोजकतया ऽस्य तत्प्रत्यक्षप्रयोजकतावसेयाव्यभिचारादिति यद्यपि स्पर्शस्य कारणत्वेन वायुपरत्वादौ व्यभिचारस्तथा पि संख्यादिकमादाय विनिगमनाविरहाद्गुणानां तथात्वापत्त्या कॢप्तस्य कालसंयोगस्यैव तथात्वमुचितमिति भावः तथात्वेन निरुक्ता समवायिकारणसंयोगाश्रयत्वेनेत्यर्थः विरुद्धेति अनेकधर्मावच्छिन्नबोधकत्वमेव व्यवहारगतो विरोधः॥

का॰मु॰ रा॰॥ नहीतिघटत्वादीनामविरोधोक्तिर्व्यवहारोनैकधर्मावच्छिन्नबोधकत्वरूपविरोधपरिहारायैव एवमुत्तरत्रापीतिमंतव्यम् एकस्मिन्नित्य
दि॰रा॰ नंतरं विरुद्धेतिपूरणीयं इष्टव्यमितिइदंचनमूलकारसंमतंनथास्त्युपाधीनांकालघटितत्वपरंपरासंबंधेनैवआधारताद्यप्रत्ययस्योपगंतव्यत
९१ यागौरवापतेः साक्षादधिकरणत्वोपगमस्यनानाव्यक्तिषुतत्तदनंतपदार्थोपकालिकसंबंधत्वकल्पनाप्रयुक्तगौरवग्रस्तत्वादितिध्येयम् ॥ नि

दि॰॥ अतएवपृथिवीपिण्डसंयोगस्यनस्यनतत्रकारणत्वम्पृथिव्यसंयुक्तपदार्थेपिपरत्वापरत्वयोरुत्पादेनव्यभिचारात्ननुतथा
प्याकाशदिगात्ममनोभिःपिण्डसंयोगस्यतथात्वंस्यात् किंकालकल्पनयेत्यत आह लाघवादिति आकाशदिग्भ्याम्पिण्डसंयोगस्य
तथात्वेजीवात्मभिःप्रत्येकंविनिगमनाविरहादात्ममनसोस्त्वनन्तत्वान्नतथात्वङ्किन्तुलाघवादतिरिक्तः कालएवतथात्वेनकल्प्य
तइतिभावः ननुयदिकालएकएवतदाक्षणलवकाष्ठादिनानाव्यवहारस्तत्रनस्यात् नचैकस्मिन्नेवघटेघटःकलशःकुम्भइति
व्यवहारवदत्रापिक्षणादिनानाव्यवहारेबाधकाभावइतिवाच्यम् एकस्मिन्विरुद्धनानाव्यवहारायोगात् नहिघटत्वकलशत्वा

मु॰॥ लाघवादतिरिक्तःकालएवकल्प्यतइतिभावः नचैकस्यकालस्यसिद्धौक्षणदिनमासवर्षादिसमयभे
दोनस्यादित्यत आह क्षणादिःस्यादुपाधितःकालस्त्वेकोप्युपाधिभेदात्क्षणादिव्यवहारविषयः॥ ६ ॥

दिकस्मिथोविरुद्धंक्षणत्वदिनत्वादिकन्तुविरुद्धमेवनहिक्षणान्दिनमितिप्रतीतिरस्तीत्याशङ्कतेनन्वेकस्येतिसमयभेदः सम
यभेदव्यवहारः विभिन्नव्यवहारविषयमितियावत् एकस्मिन्विरुद्धनानाव्यवहारविषयत्वाभावादितिभावः उपाधिभेदा
दिति तथाचैकस्यकालस्यकिञ्चिद्धर्मविशिष्टस्यक्षणत्वम् किञ्चिद्धर्मविशिष्टस्यदिनत्वन्नतुकेवलस्येतिभावः इदमु
पलक्षणम् तादृशोपाधीनामेवक्षणत्वादिव्यवहारविषयत्वन्नतुमहाकालस्येत्यपिद्रष्टव्यम् ॥ ६ ॥ ६ ॥ ६ ॥ राम॰

रुक्तेतिस्वजन्यविभागप्रागभावेत्यर्थःप्रतिक्षणमितिद्वितीयतृतीयचतुर्थक्षणेषुक्रियांतरोत्पत्तिमंतराक्षणानिर्वचनसंभवेपिपंचमक्षणो ९१
पाधेःक्रियांतरोत्पत्त्यैवनिर्वाहात्प्रतिक्षणमि[illegible]स्वजन्यविभागनाश्यत्वनिवेशप्रयोजनमाह।

रा०॥ तेनेतित्रिक्षणेति इदं च उत्तरदेशसंयोगेन चतुर्थक्षणे सर्वत्र विभागनाश इत्यभिप्रायेण अन्यथा गगनादिगतविभागस्य ध्वंसादिवदविनाशित्वापत्तेरिति भावः त्रिक्षणवृत्तित्वेपीत्यस्य न क्षतिरित्यग्रतनेनान्वयः विभागे स्वजन्यत्वनिवेशप्रयोजनमाह यत्किंचिदिति तथात्वेपि त्रिक्षणवृत्तित्वेपि नातिप्रसंग इति पूर्वसंयोगनाशे स्वजन्यविभागजन्यत्वाप्रवेशे स्वजन्यत्वाप्रवेशे च पूर्ववदतिप्रसंगो नेत्यर्थः संदर्भेति ननु तृतीयक्षणे उपाधिद्व

दि०॥ स्वजन्येति स्वं क्रिया घटगतैकक्रियानाशोत्तरोत्पन्नतद्गतक्रियान्तरजन्यविभागप्रागभावविशिष्टस्य प्रथमकर्मणः क्षणचतुष्टयावस्थायिनः क्षणत्वापत्तिरतः स्वजन्येति नन्वेवम्प्रथमक्षणे क्षणव्यवहारोपपादनेपि द्वितीयक्षणे कथन्तदुपपादनन्तत्क्रियाजन्यविभागोत्पत्त्या विभागप्रागभावासम्भवात् न च द्वितीयक्षणोत्पन्नक्रियान्तरस्यैव निरुक्तविशिष्टस्य तत्र क्षणत्वमिति वाच्यम् प्रतिक्षणङ्क्रियोत्पत्तौ मानाभावात् अतस्तत्रापि क्षणव्यवहारोपपादकमुपाधिमाह पूर्वसंयोगेति स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्वजन्यविभाग इत्यर्थः तेन स्वजन्यविभागस्य यत्किञ्चित्पूर्वसंयोगविशिष्टस्य द्वित्रिक्षणवृत्तित्वे

मु०॥ उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नङ्कर्म पूर्वसंयोगावच्छिन्नविभागो वा पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा॥ १९ पि यत्किञ्चिद्विभागस्य स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्य तथात्वेपि न क्षतिः तृतीयक्षणे तदुपपादकमुपाधिमाह पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वेति स्वजन्यविभागजन्यपूर्वसंयोगनाशावच्छिन्नस्वजन्योत्तरसंयोगप्रागभाव इत्यर्थान्नातिप्रसङ्गः क्वचित्पुस्तके पूर्वसंयोगनाशावच्छिन्नविभागो वेति पाठः स च प्रामादिकः प्रथमद्वितीयचतुर्थक्षणेष्वेकैकोपाधेरेवाभिहिततया तृतीयक्षणे उपाधिद्वयाभिधाने सन्दर्भविरोधापत्तेः॥

यस्यापि संभवेन एकमात्राभिधाने न्यूनतासादिति द्वयमप्युक्तं इतरत्र एकैकोपाधेरेव सत्वादेकैकमेवोक्तमिति नैतावता संदर्भविरोध इत्यत आह उत्तरेति एवकारेण पूर्वसंयोगनाशव्यवच्छेदः तथा चोत्तरसंयोगोत्पत्तिक्षणेपि भागस्तिष्ठत्येवेति भावः स्वनाशकेति उत्तरसंयोगोत्तरं क्रिया न तिष्ठतीति लाभायैतदभिहितं लाघवेन स्वजन्यत्वस्यैव वक्तुमुचितत्वात् न च पूर्वसंयोगनाशस्यैवोत्तरसंयोगजनकत्वमिति वाच्यम्॥ ६॥ ६॥

का॰मु॰ रा॰॥नयासतिक्रियाविगमेपितदुत्पत्त्यापत्तिःसंयोगविभागयोरनपेक्ष्यकारणंकर्मेतिसूत्रविरोधापत्तेश्चेतिताद्दशकर्मेतिविभागप्रागभावाद्यवच्छिन्नकर्मेत्य
दि॰रा॰ र्थः इतिमुपलक्षणंउत्तरसंयोगप्रागभावादेरप्यसत्वादित्यपिबोध्यम् तदधिकरणेति तत्परमुत्पत्त्यसमानपदार्थपरंअधिकरणत्वमाधेयताद्दयंचकालिकेनव्या
९२ प्यत्वंचदैशिकस्वरूपेणवोध्यंतथाचयदधिकरणक्षणावृत्तित्वस्यव्याप्यायत्समयवृत्तिध्वंसप्रतियोगितातस्यतत्समयवृत्तित्वमुत्पत्तिरित्यर्थः अत्रचयद
धिकरणसमयेत्युक्तौतद्वटाधिकरणमहाकालादिवृत्तित्वस्यैवतदुत्पत्तिसमयवृत्तिध्वंसप्रतियोगिपूर्वविनष्टपटादौसत्वेनव्याप्तिभंगःस्यादितिक्षणत्वेनैवतस
योनिवेशनीयइतिभावः स्ववृत्तीतिअत्रस्वपदद्वयंयत्समयवृत्तित्वमुत्पत्तित्वेनाभिमतंतत्समयव्यक्तिपरंकालावृत्तित्वंताद्दशकालवृत्तित्वसामान्याभावस्ते

दि॰॥उत्तरसंयोगस्यैवविभागनाशकतायाःसिद्धान्तसिद्धतयानिरुक्तोपाधेःक्षणद्वयावस्थायिनःक्षणत्वायोगाच्चयदिचतत्पाठप्रामाण्येप्या
ग्रहस्तदापूर्वसंयोगनाशस्यैवविभागनाशकत्वाभिप्रायेणसंयोजनीयः चतुर्थक्षणेतमाह उत्तरसंयोगेतिस्वनाशकोत्तरसंयोइत्यर्थःतेन
सर्वस्यैवसंयोगस्योत्तरसंयोगतयातद्विशिष्टकर्मणःक्षणचतुष्टयावस्थायिनः क्षणत्वापत्तिर्निरस्तानन्वेवंताद्दशक्षणलक्षणंमहाप्रलया

मु॰॥उत्तरसंयोगावच्छिन्नङ्कर्मेवानचोत्तरसंयोगानन्तरङ्क्षणव्यवहारोनस्यादितिवाच्यम् कर्मान्तरस्यापिसत्वा
व्यापकक्षणेऽव्याप्तन्तत्रताद्दशकर्माभावात् नचमहाप्रलयस्यक्षणत्वाभावइष्टएवेतिवाच्यम् तत्रापिक्षणव्यवहारस ॥दिति॥
सत्वात् अन्यथामहाप्रलयोत्पत्तौउत्पत्तिलक्षणस्यतदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वरू
पस्याव्याप्यापत्तेः॥ ॥ननस्वपदेनद्वितीयक्षणाद्युपादानसंभवः अन्यथाद्वितीयादिक्षणवृत्तिध्वंसप्रतियोगियत्किंचित्पूर्वकालावृत्तित्वस्योत्पन्नघ
टादौसत्वेनतस्यद्वितीयादिक्षणवृत्तित्वस्याप्युत्पत्तित्वप्रसंगात् ताद्दशाभाववैशिष्ट्यंस्ववृत्तित्वसामानाधिकरण्यसंबंधेनबोध्यम् ननुमूलेमहाप्रलयेध्वं
सरूपसमयेनैवक्षणव्यवहारउपपादनीयइत्युक्तंतन्नसंगच्छतेध्वंसस्यक्षणत्वेसृष्टिकालेपिध्वंसरूपस्थूलकालस्यक्षणत्वेनव्यवहारापत्तेःयदिच रा॰म॰
चरमध्वंसव्यक्तेरेवतद्व्यक्तित्वेनक्षणत्वंनान्यध्वंसस्येत्युच्यतेतदाकृतोनान्यध्वंसस्यतद्व्यक्तित्वेनक्षणव्यवहारविषयताचरमध्वंसस्यैवतथात्वमि ९२
त्यत्रवीजालाभइत्यतोयथानान्यध्वंसस्यतद्व्यक्तित्वेनक्षणव्यवहारविषयतंतथामहाप्रलयविशेषणंअनुत्पत्तिस्ववृत्तीतिताद्दश समयश्चरमध्वंसएवेतिभा

रा॰॥ इतिकालग्रंथः कारिकास्थहेतुशब्दस्यमूलेबीजमितिव्याख्यानंकृतंतन्नसंगच्छते कारणेपिक्वचिद्बीजशब्दप्रयोगात् परापरत्वबुद्धौदिशोपि कारणत्वाच्च अतोबीजशब्दस्यप्रकृतेप्रयोजकत्तार्थकतामाहबीजमिति ॥ ननुपरत्वापरत्वाभ्यामेवदिशोनुमानसंभवात्तद्बुद्धिपर्यंतानुधावनम फलमित्यत आह अत्रापीति अयमस्मात्सन्निहितइत्यादिप्रयोगात्पुरुषादिष्वेवप्रयोक्तुमुचितं ननुपूर्वस्येत्यत आह पंचम्यर्थइति अवधित्वंपंच म्यर्थः॥ पुरुषावधिकोदयगिरिसान्निध्यवतीदिक्तत्स्यप्राचीत्यर्थः पर्यवसितः अवधित्वंस्वरूपसंबंधविशेषःसेतितन्मूर्तावच्छिन्नामहतीदिगित्य र्थः नातःस्त्रीलिंगनिर्देशासंगतिः संयोगापेक्षयेत्यस्यापितादृशसंयोगावधिकत्वमेवार्थः तस्यच अल्पतरत्वे अन्वयः उदयगिरिसंयुक्तसंयोग

दि॰॥ तत्रमहाप्रलयाधिकरणक्षणाप्रसिद्धेरत आह महाप्रलयइति महाप्रलयेक्षणव्यवहारोनास्त्येव उत्पत्तिलक्षणस्यक्षणाघटि तस्यैवस्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वविशिष्टस्ववृत्तित्वरूपस्य तदुत्पत्तौसम्भवादित्यभिप्रेत्योक्तम् यदीतिध्वंसेनैवेति

मु॰॥ महाप्रलयेक्षणादिव्यवहारोयद्यस्ति तदा अनागतध्वंसेनैवोपपादनीयइति दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरिति दूरान्तिकादिधीहेतुरेकानित्यादिगुच्यते॥४६॥ उपाधिभेदादेकापिप्राच्यादिव्यपदेश भाक् दूरत्वमन्तिकत्वञ्च दैशिकम्परत्वमपरत्वंचवोध्यम् तद्बुद्धेरसाधारणम्बीजन्दिगेव॥

स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकपावद्वृत्तिविशिष्टसमयस्यैवतत्रक्षणव्यवहारविषयत्वादितिभावः इतिकालग्रन्थः बीजप्रयो

पर्याप्तेत्यस्यतादृशसंयोगादिपर्याप्तेत्यर्थः आदिनातद्वृत्तसंयुक्तसंयोगादीनांपुरुषनिष्ठविशिष्टसंयोगघटकानांपरिग्रहः तेषुपर्याप्तसंख्याअपे क्षाबुद्धिविशेषविषयरूपेवगुणेषुगुणानंगीकारात् यद्वामथुरानिष्ठोयः परंपरयोदयगिरिसंयुक्तसंयोगस्तद्घटकायेमूर्तास्तत्पर्याप्तसंख्ये त्यर्थेतात्पर्यान्नदोषः सङ्ख्याव्याप्यत्वंचसंख्यासमानाधिकरणप्रतियोग्यवृत्तिभेदप्रतियोगितावच्छेदकत्वमेवनतुव्यापकसामानाधिकरण्यादिकं तथासतिस्वस्यापिस्वव्याप्यत्वापातात् मूर्तवृत्तिरित्युपाधीनामेवप्राच्यादीनामित्यभिप्रायेण अन्यथातुतादृशमूर्तावच्छिन्नवृत्तिरितिशाब्दबोधोवर्ण

का॰मु॰ रा॰॥ संख्याव्यापकेतिव्यापकत्वमत्रनताहृशसंख्यासमानाधिकरणप्रतियोग्यवृत्तिभेदप्रतियोगितानवच्छेदकत्वंतथासतिस्वस्यव्यापकत्वेनाति
दि॰ रा॰ प्रसंगात् नापिस्वभिन्नत्वेसतिस्वसमानाधिकरणताहृशभेदप्रतियोगितानवच्छेदकत्वंविछिन्नपुरुषीयापेक्षाबुद्धिजन्यसजातीयसंख्यामादा
९३

दि॰॥ कथन्दिशस्तत्रप्रयोजकत्वंतद्दर्शयतिदैशिकपरत्वापरत्वयोरितितथाचपरत्वापरत्वबुद्धिंप्रतिपरत्वापरत्वेनिमित्तेतत्रदिक्पि
ण्डसंयोगस्तत्रदिगितिक्रमेणपरम्परयादिशस्तद्बुद्धौनिमित्तत्वम्बोध्यम् अत्रापिबुद्धिपर्यन्तानुधावनन्दैशिकपरत्वापरत्वयोःप्र
माणन्दर्शयितुन्ताहृशपरत्वापरत्वाभ्यामेवतदनुमितेःसम्भवादितिप्रतीच्यादीत्यादिनोदीच्यादिपरिग्रहः उपाधीतिवस्तुतोदि
शएकत्वेपितत्तदुपाधिभेदेनप्राच्यादिसंज्ञाभेदइतिभावःप्राच्यादिसंज्ञासुनिमित्तभूतानुपाधीनाह यत्पुरुषस्येतिपुरुषस्ये

मु॰॥ दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतयालाघवादेकादिक्सिध्यतीतिभावःनन्वेवंयद्येकैवदि
क्तदाप्राचीप्रतीच्यादिव्यवहारःकथमुपपद्यतेइत्यतआह उपाधिभेदादितियदायत्पुरुषस्योदयगिरिसन्निहि
तायादिक्सातत्पुरुषस्यप्राचीएवमुदयगिरिव्यवहितायादिक्साप्रतीचीएवंयत्पुरुषस्यसुमेरुसन्निहितायादिक्
सोदीची॥
तिपदार्थमात्रोपलक्षणम्पञ्चम्यर्थेषष्ठीदिक्मूर्तम् एवमग्रेपितथाचयदपेक्षयोदयगिरिसन्निहितंयन्मूर्तं
सातत्ःप्राचीत्यर्थः तदपेक्षयोदयगिरिसन्निहितत्वञ्चतन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाल्पतरोदयगिरिसंयुक्तसंयो
गवत्त्वम् इत्थञ्चमथुरातःप्राच्यांप्रयागइत्यत्रमथुरानिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्याप्यसंख्यापर्याप्त्यधिकर
णोदयगिरिसंयोगवन्मूर्तवृत्तिप्रयागइत्यन्वयबोधः॥ ९यसंख्यांतरस्यापिव्यापकत्वापत्त्या अतिप्रसंगतादवस्थ्यात् परंतुस्वसमानाधि
करणताहृशभेदप्रतियोगितानवच्छेदकनिरूक्तसंख्याकत्वमेवेतिनकाशीतःप्राच्यांकाशीतिव्यवहारापत्तिःआहरित्यनेनदीधितिकृन्मतेअ रामः
स्वरसस्सूचितःतद्बीजंतुइदानींतदानींतदानीमित्यादिप्रयोगानांतत्तदुपाधावकिनेपरस्पविषयत्वोपगमेप्रत्येकंजीवमादायविनिगमनाविरहेण ९३
रुद्रामकाली॥

रा॰॥ नच कार्यमात्रजनकत्वेन क्लृप्तस्येश्वरस्यैव जन्यमात्रजनककालरूपतायुक्ता न तु जीवस्य तत्र तस्याक्लृप्तत्वादिति विनिगमकमस्तीति वाच्यं कार्यमा
त्रं प्रति ईश्वरीयकृतेरेव हेतुत्वेन क्लृप्तत्वात्कर्तुः कार्यजनकत्वे मानाभावादिति अत एव एतादृशास्वरसं स्पष्टीकर्तुं नवीनमतमुपन्यस्य तिन व्याख्येति
दिक्कालोपाधीनामिति न चैवं ग्रंथकृदुक्तकाललक्षणमसंभवग्रस्तमिति वाच्यम् नवीनानां ग्रंथकृदननुयायित्वादिति भावः वदंतीत्यनेन अत्राप्यस्व
रसः सूचितस्तद्बीजं तु नानोपाधीनां कारणताकल्पनमपेक्ष्य एकस्य महाकालस्य कारणताकल्पनमेवोचितं लाघवात्कालस्य जगत्कारणत्वे

दि॰॥ एवं काशीतः प्रतीच्यां प्रयाग इत्यत्र काशीनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणोदयगि
रिसंयुक्तसंयोगवन्मूर्तवृत्तिः प्रयागः एवमन्यत्रापि बोधा ऊहनीयाः तन्निष्ठोदयाचलसंयुक्तसंयोगपरम्पराघटकं यन्मूर्तं तन्त्राची
त्यपि वदन्ति शिंधिति कृतस्तु दिक्कालौ नेश्वरादतिरिच्येते मानाभावात् तत्तत्कालोपाधिदिगुपाधिविशिष्टादीश्वरादेव क्षणदिन
प्राचीप्रतीच्यादिव्यवहारोपपत्तेरित्याहुः अत्र नव्याः ईश्वरस्य दिक्कालरूपत्वं न तु जीवस्येति विनिगमनाविरहेणातिरिक्त

मु॰॥ तद्व्यवहितात्ववाची सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित इति नियमात् ॥ ४६॥ ॥

योस्तयोः स्वीकारः नचात्र जीवस्य जगज्जनकत्वम्परापरत्वजनकत्वञ्च कल्प्यमीश्वरस्य तु क्लृप्तमिति लाघवमिति वाच्यम्
सम्बन्धघटकयोर्दिक्कालयोर्जगज्जनकत्वाकल्पनाद्दिक्कालोपाधीनामेव जगज्जनकत्वकल्पनात्परत्वा परत्वयोस्तु ग्
णत्वे एव मानाभावः सन्निकृष्टत्वविप्रकृष्टत्वाभ्यामेव परापरव्यवहारोपपत्तेरिति वदन्ति ॥ इति दिग्ग्रन्थः ॥ ४६ ॥ ॥पि उक्तरीत्या अ
तिरिक्तकालसिद्धिसंभवाच्चेति ध्येयम् ॥ इति दिग्ग्रन्थः ॥ ४६॥ नन्वहं सुखीत्यादिप्रतीत्या आत्मत्वेनात्मनो विषयीकरणात् प्रत्यक्षमेवात्मत्वे प्र
माणं संभवति तत्कथं मूले सुखादिसमवायिकारणताकिंचिदवच्छिन्नाकारणतात्वादित्यनुमानं तत्र प्रमाणत्वेन दर्शितमित्याशंकाते पद्यपीति
स्वरूपतः स्वांशे किंचिद्धर्माप्रकारकेत्यर्थः सकलात्मसाधारणम् सकलात्मविशेष्यकम् अनुगतप्रत्यक्षम् सकलात्मगतैकात्मत्वप्रकारकप्रत्यक्ष
म् प्रकारकत्वस्य समासलुप्तषष्ठ्यर्थत्वात् जातिरूपमिति तथा चात्मत्वस्य स्वरूपतः प्रत्यक्षत्वेपि तद्गतजातित्वं न प्रत्यक्षसिद्धमिति भावः ॥

का॰मु॰ रा॰॥ ननु सुखादीनामात्मभिन्ने उत्पादे निमित्तकारणाभावादेव न संभवति किमर्थमात्मनस्तत्र समवायिकारणतेत्याशंकते अथेति कार्यतावच्छे-
दि॰रा॰ दकनियमादित्यस्य समवायिकारणेत्यादिस्तेन निमित्तकारणजन्यतावच्छेदकत्वे नापि सुखत्वस्य समवायिकारणजन्यतानवच्छेदकत्वेपि नोक्तान-
१५

दि॰॥ सुखदुःखादीति आदिना ज्ञानेच्छाद्वेषप्रयत्नधर्माधर्मभावनापरिग्रहः यद्यप्यात्मत्वस्यान्यात्मन्यप्रत्यक्षत्वेपि स्वात्मनि स्वरूपतो मानसप्रत्यक्षविषत्वमस्त्येव तथापि सकलात्मधारणानुगतप्रत्यक्षासम्भवेन जातिरूपत्वं न सिध्यति अनेकसमवेतत्वघटितजातित्वग्रहेऽनेकव्यक्तिग्रहहेतुत्वस्य सर्वसिद्धत्वादित्यनुमानमेव तत्र प्रमाणमित्यभिप्रायेण सुखदुःखादिसमवायिकारणतावच्छेदकतया तत्सिद्धिः प्रदर्शिता अथ सुखत्वाद्यवच्छिन्नम्प्रत्यात्मत्वेन कारणत्वे मानाभावः सुखदुःखद्वेषभावनाधर्माधर्मान्प्रति यथाक्रमन्धर्माधर्मानिष्टसाधनत्वादिज्ञानानुभवविहित निषिद्धकर्मणां समवायसम्बन्धेन निमित्तकारणत्वावश्यकतया

मु॰॥ आत्मानं निरूपयति आत्मेन्द्रियाद्यधिष्ठाता आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिध्यति॥

तिप्रसङ्गाभावाद्भावकार्याणां समवायिकारणकत्वनियमस्य तुद्रव्यत्वेन तत्तद्व्यक्तिसमवेतम्प्रति तत्तद्व्यक्तित्वेन वा समवायिकारणत्वमादायैवोपपन्नत्वादिति चेदत्र प्राञ्चः कार्यमात्रवृत्तिजातेः समवायिकारणकार्यतावच्छेदकत्वनियमेन तादृशकार्यकारणभावस्यावश्यकत्वात् न च तावतापि सुखत्वाद्यवच्छिन्नम्प्रति सत्वेन द्रव्यत्वेन वा कारणत्वमस्तु अदृष्टादेर्निमित्तकारणत्वादेवातिप्रसङ्गविरहादिति वाच्यम् व्याप्यलघुभूतधर्मे कारणतावच्छेदके सम्भवति व्यापकधर्मेण कारणत्वकल्पनायां अन्याप्यत्वादित्याहुः वस्तुतस्तु मनसि ज्ञानोत्पत्तिवारणाय ज्ञानत्वाद्यवच्छिन्नम्प्रत्यात्मत्वेन हेतुत्वमावश्यकमिति॥ ६ ॥

यमस्य भंगरूपानुपपत्तिः अन्याप्यत्वादिति अनेकव्यक्तिषु कारणताकल्पने गौरवादिति भावः ननु तत्र कारणतान फलोपधायकतारूपान्तस्याद्रव्यत्वेन कारणतावादिनापि आत्मन्येव स्वीकारात् किंतु स्वरूपयोग्यतारूपैव सा च कारणतावच्छेदकरूपैवेति न वद्रव्येषु द्रव्यत्वसङ्क्रमस्त्वा रामः
नतत्कल्पनागौरव[illegible]आवश्यकमितीति॥ १४

रा०॥ तथाचसुखसमवायिकारणतावच्छेदकयातदसिद्धावपिज्ञानसमवायिकारणतावच्छेदकतयैवतत्सिद्धिरितिभावः ज्ञानंप्रत्यात्ममनःसंयोगस्य हेतुत्वेनघटादौतदभावान्मनस्येवव्यभिचारःप्रदर्शितःएवमिच्छादिकंप्रतिज्ञानादेःकारणत्वेनतदभावादेवमनसितदापादनासंभवेनज्ञानमात्रा नुसरणंइत्थंचकार्यवृत्तिजातेस्तदवच्छिन्नस्याकस्मिकत्वापत्तिवारणायकिंचित्कारणजन्यतावच्छेदकत्वनियमएवांगीक्रियतेनतुसमवायिका रणजन्यतावच्छेदकत्वनियमोपितदनभ्युपगमेक्षतिविरहादित्यात्मत्वंनपूर्वोक्तयुक्त्यासिद्ध्यतीतिपूर्वपक्षोपिनिरवकाशइतिभावः सुखाद्युत्प

दि०॥ ननुतथाप्यात्मत्वजातेर्भगवदात्मसाधारण्येमानाभावइत्यतआहईश्वरइति आत्मावारेद्रष्टव्यइत्यादिश्रुतावात्मपदव्य वहारादितिभावः ननुतर्हीश्वरेसुखाद्युत्पत्तिःकुतोनभवतीत्यतआह अदृष्टादीति आदिनाशरीरपरिग्रहः ननुतथापिनित्यस्य

मु०॥ ईश्वरेपिसाजातिरस्त्येव अदृष्टादिरूपकारणाभावान्नसुखदुःखाद्युत्पत्तिः॥
नित्यस्यस्वरूपयोग्यत्वेफलावश्यम्भावनियमइत्यस्याप्रयोजकत्वात्॥ ॥

स्वरूपयोग्यत्वेफलावश्यम्भावइतिनियमेनेश्वरस्यस्वरूपयोग्यत्वेफलोपधानापत्तिरित्यतआहनित्यस्येति अप्रयोजक त्वादितिजलपरमाणौस्नेहानुत्पत्त्यातादृशनियमेमानाभावादितिभावः नन्वीश्वरेऽदृष्टङ्कुतोनोत्पद्यतइतिचेन्नमिथ्याज्ञानरूप

तिरित्यत्रआदिनाज्ञानपरिग्रहः अतएवतदापत्तिवारकशरीरस्यादिपदेनग्रहणंसार्थकंज्ञानंप्रतिशरीरस्यस्वावच्छिन्नभोगजनकादृष्टवत्त्वसं बंधेनहेतुतातदभावादेवमुक्तस्यनज्ञानोत्पत्तिरितिभावः अदृष्टशब्दस्यात्रधर्मोर्थःसुखंप्रतितस्यैवकारणत्वादितिध्येयंकुतोनोत्पद्यतइतीति ०ः अथेश्वरस्यशरीराभावेनतदीयशुभाशुभकर्माभावादियमापत्तिरयुक्तानंद्यस्मदादिशुभादिकर्मणाईश्वरेऽदृष्टोत्पत्तिरापादयितुंशक्या चैत्रक्रिययामैत्रात्मन्यदृष्टोत्पत्तिवारणायक्रियायाअवच्छेदकतासंबंधेनस्वकारणी॥

का॰मु॰ रा॰॥ भूतायाकृतिस्तद्दत्वसंबंधेनैवादृष्टकारणतायाःस्वीकरणीयत्वादीश्वरकृतेरस्मदादिशरीरानवच्छिन्नतयाअवच्छेदकतासंबंधेनअदे
दि॰रा॰ तुत्वात् नचस्वजनककृतिमत्वसंबंधेनैवकर्मणोऽदृष्टहेतुत्वमस्तु चैत्रक्रियायांमैत्रीयकृतेरजनकत्वान्नपूर्वोक्तापत्तिरेवंचकार्यमात्रएवेश्व
९५ रकृतेःकारणत्वेनईश्वरेअदृष्टापत्तिःसंभवत्येवेतिवाच्यम् कालिकसंबंधावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितकालिकसंबंधाव
च्छिन्नकृतित्वावच्छिन्नकारणतायाःकृतिमात्रेसत्वात् तद्भिन्नायांविशेषकारणतायामीश्वरकृतौमानाभावादितिचेन्नजीवादृष्टवशेनईश्व
रपरिगृहीतरामकृष्णादिशरीरचेष्टायाईश्वरकृतिजन्यत्वमावश्यकं अस्मदीयचेष्टातोविलक्षणत्वात् नचतदीयमुखप्रसादमालिन्याभ्यां
सुखदुःखयोरनुमानाद्भोगस्यापीश्वरेप्रसंगइतिवाच्यम् ईश्वरशरीरेअहंस्वामित्युपासनयाकस्यचित् शरीरमित्युपगमात् परन्तुजीवास्था

दि॰॥मिथ्याज्ञानस्याहेतुत्वेचमुक्तात्मन्यप्यदृष्टोत्पत्तिप्रसङ्गः वेदस्यात्मपदादेर्ज्ञानादिमतिलक्षणापत्तिरित्यस्वरसआहुरि

मु॰॥परेतुईश्वरेसाजातिर्नास्त्येवप्रमाणाभावात् नचदशमद्रव्यत्वापत्तिः
ज्ञानवत्त्वेनविभजनादित्याहुः इन्द्रियाद्यधिष्ठाता इन्द्रियाणां॥ ९ ॥

त्यनेनसूचितः इन्द्रियाद्यधिष्ठातेतिमूलमात्मनिप्रमाणपरतयाव्याचष्टे इन्द्रियाणामिति आदिपदसङ्ग्राह्यमाह ॥ ९॥

ध्यचेष्टोपपत्तयेभूतावेशन्यायेनतच्छरीरेअवच्छेदकतयेश्वरकृतिकल्पनादितिनानुपपत्तिलेशोपीत्यवधेयं मुक्तात्मन्यपीति जीवन्मुक्तात्म
न्यपीत्यर्थः परममुक्तस्यशरीराभावेनकर्मणएवाभावात् मिथ्याज्ञानपदमपिशरीरेआत्मज्ञानजन्यवासनापरं अन्यथातादृशज्ञान
विरहदशायांअदृष्टानुत्पादप्रसंगात् जीवन्मुक्तस्यआत्मसाक्षात्कारेणतादृशवासनानाशेपिप्रारब्धबलात्तत्कार्यस्यशरीरस्यनानाशइ
तिबोध्यम् मूलेइंद्रियाणामधिष्ठातेति अधिष्ठातृशब्दस्यतन्निष्ठक्रियाजनकार्थकत्वेप्रवृत्त्याद्यनुमेयोपमित्यनेनगतार्थतास्यात् तन्नि रामः
ष्ठव्यापारजनकज्ञानजनक इत्यर्थकत्वे [illegible] संपादकतार्थकता इंद्रियाणामित्यादिनामूलेदर्शितेति ॥ ९ ॥ ९५

रा॰॥अवच्छेदकतेति यद्यप्यवच्छेदकतासंबंधेनतदीयज्ञानंप्रतितादात्म्यसंबंधेनतदीयशरीरस्यहेतुतायाआवश्यकतयाऽवच्छेदकत्वोपादा नेप्रयोजनाभावस्तथापिखंडशरीरसमकालोत्पन्नज्ञानव्यक्तेर्द्वितीयक्षणोत्पन्नखंडशरीरस्यपूर्वमसत्वेनाकारणतयाव्यभिचारेणोक्तकार्यका रणभावासंभवः परंतुतत्समवेतगुणानांतदीयशरीरेणैवावच्छेदकभावनियमोपगमादेवघटादीनांनज्ञानावच्छेदकत्वमितिभावः तथाचोत्त रत्रमूलोक्तंज्ञानोपधानंउक्तान्यतरसंबंधेनज्ञानवत्वमेवेतिपर्यवसितंएतेनेति इंद्रियाणिशरीरंचज्ञात्रधिष्ठितं अचेतनत्वेसति उक्तान्यतरसं बंधेनज्ञानवत्वाद्वास्यादिवदित्यनुमानमात्मनिप्रमाणंदर्शितमित्यर्थः अत्राधिष्ठितत्वंसहकृतत्वंतच्चस्वभिन्नत्वेसतिस्वजन्यकार्योपधायकत्वं

दि॰॥शरीरस्येति परम्परयाजनकतासम्बन्धेनावच्छेदकतासम्बन्धेनवाचैतन्यज्ञानवत्वम् एतेनात्मनिप्रमाणमपिदर्शितम् अचेतनञ्चेतनाधिष्ठिततयाकार्यङ्करोतीतिव्याप्तेः अहंसुखीत्यादीत्यादिनाहंजानाम्यहङ्करोमीत्यादिपरिग्रहः नचात्मातीव

मु॰॥शरीरस्यचपरम्परयाचैतन्यसम्पादकः यद्यप्यात्मनि
अहंसुखीदुःखीत्यादिप्रत्यक्षविषयत्वमस्त्येव॰॥ ॥

न्द्रप्रत्यक्षइतिसूत्रभाष्यविरोधइतिवाच्यम् आत्मतत्वविवेकेपरात्माभिप्रायेणभाष्यव्याख्यानस्यप्रदर्शितत्वात्॰॥ ६

स्वस्मिन्स्वसहकृतत्वाप्रतीतेःस्वभिन्नत्वनिवेशस्तथाचोक्तानुमानेनेंद्रियादिभिन्नज्ञातृसिद्धिः ज्ञानोपधायके आत्मनिव्यभिचारवारणाय हेतौसत्यंतंनचेश्वरमादायसाध्यसत्वान्नव्यभिचारइतिवाच्यंसहकारिताघटितजन्यतायाः कार्यत्वानवच्छिन्नायाएवप्रकृतेनिवेशितत्वादीश्वर जन्यत्वस्य ज्ञानेऽसंभवाच्चतदीयकृतेरेवकार्यमात्रकारणत्वादितिध्येयंयद्यपिशरीरस्यज्ञानाकारणत्वेननतत्रचेतनसहकृतत्वंदुर्घटंतथापिचेत नाधिष्ठितत्वंउक्तान्यतरसंबंधेनचेतनप्रयोज्यतत्क्रियात्वमेवप्रयोज्यत्वंचजन्यतज्जन्यसाधारणंतेनचिदंप्रति चेतनस्याकारणत्वेपितत्कार णवृत्तिकारणत्वेनदृष्टांतस्यनसाध्यवैकल्यमितिविभावनीयं ॐ अचेतनमितिपद्यपिकरणंहिसकर्तृकमितिव्याप्तिः॥ ६॥

का॰मु॰ रा॰॥प्रदर्शितायद्यत्करणंतत्तत्फलोपहितकरणंतत्तत्कर्तृकंतदुपधानेतत्कर्तृसहकृतमितितदर्थोतद्व्यापारवत्करणस्यकरणत्वेचक्षुःसंयो
दि॰ना॰ गेनजानातीतिप्रयोगाद्रुपपत्याफलोपहितकरणत्वस्यैवतत्वात्सहकृतत्वंपूर्वंनिरुक्तमेवएतादृशसामान्यमुखव्याप्तिरेवोत्तरत्रमूलेवास्या
९६ दीनामित्यादिनादर्शयिष्यतेतथापिआत्मनिउक्तनियमस्यव्यभिचारःस्वभिन्नतत्ज्ञानकर्तुरप्रसिद्धेःहेतोर्दृष्टांतपक्षसाधारण्यानुरोधे
नउक्तनियमस्याश्रयत्वानुकूलकृतिमत्वतदन्यतररूपतत्तत्क्रियाकर्तृत्वघटितत्वाद्दोरवंचेत्यालोच्यतादृशव्याप्तेरेवायंपरिष्कारआदृतः

दि॰॥विप्रतिपन्नम्प्रतीतिअहमितिप्रतीतेःशरीराद्यतिरिक्तविषयकत्वेविप्रतिपन्नम्प्रतीत्यर्थः।४७।नैयायिकमतेयथामुक्तात्मना

मु॰॥तथापिविप्रतिपन्नम्प्रतिप्रथमतएवशरीरादिभिन्नस्तत्प्रतीतिगोचरइतिप्रतिपादयितुन्नशक्यतेइत्यतःप्रमा
णान्तरन्दर्शयतिकरणंहिसकर्तृकम्॥४७॥वास्यादीनाञ्छिदाकरणानाङ्कर्त्तारमन्तरेणफलोपधानन्दृष्टम्।
एवञ्चक्षुरादीनाञ्ज्ञानकरणानामपिफलोपधानङ्कर्त्तारमन्तरेणनोपपद्यतइत्यतिरिक्तःकर्ताकल्प्यते॥४७॥
ननुशरीरस्यकर्तृत्वमस्त्वतआह शरीरेषुनचैतन्यम्मृतेषुव्यभिचारतः नचुचैतन्यञ्ज्ञानादिकमेवमुक्तात्म
नान्वव्मतइवमृतशरीराणामपितदभावेकास्क्षतिः॥ ९ ॥



ज्ञानाभावेननज्ञानाधिकरणत्वरूपञ्चैतन्यम् तथाममापिमतेमृतशरीरस्यनचैतन्यमितिशरीरमेवात्मेतिवादीचार्वाकःशङ्कते

यद्युदचेतनंयत्करोतियदुपधायकंभवतितत्तदुपधानेचेतनाधिष्ठितंभवतीतितदर्थःचेतनाधिष्ठितत्वंपूर्वंनिरूक्तमेवेत्युक्तानुमानेनचक्षुरा।
दिभिन्नज्ञातृसिद्धिःचेतनाचेतनयोरेकत्वासिद्धेरितिभावःउक्तानुमानेवास्यादिरेवदृष्टांतःउत्तरत्रमूलग्रंथानुसारादितिभावः॥४८॥ शा॰ रामः
रीरमेवात्मेति तथाचोक्तहेतोरसिद्धिरितिभावः॥ ९ ॥ ९ ॥ ९६

रा०॥ ज्ञानाद्यधिकरणत्वमिति कालिकादिनाज्ञानादेः कालादावपिसत्वेनतेषामपिचेतनत्वापत्यासमवायावच्छिन्नज्ञानाद्याधारत्वमेवचैतन्यमि तिभावः उत्पद्यतामितीतिनन्नुपूर्वपूर्वशरीरनिष्ठसंस्कारेणोत्तरोत्तरशरीरेसंस्कारोत्पत्तावपिनस्मरणोपपत्तिःस्थविरशरीरेबालकशरीरगतानु भवस्यस्वजन्यसंस्कारवत्वसंबंधेनविरहादित्यत आह तथाचेति गौरवस्य अनेकसंस्कारव्यक्तिकल्पनरूपगौरवस्यफलमुखत्वादिति फलंविच

दि०॥ ज्ञानादिकज्ञानाद्यधिकरणत्वन्तदभावे ज्ञानाद्यभावेनन्नुतवमते मृतेशरीरेचैतन्याभावःकिन्निबन्धनःमन्मतेतु प्राणविशि ष्टात्मनोविरहएवतत्रप्रयोजकइत्यत आह प्राणाभावेनेति तथाचलाघवात्प्राणाभावश्चैतन्यविरहेप्रयोजकइतिभावः चार्वा कमतम्परिहरतिनेतिस्मरणानुपपत्तेरिति अनुभवाश्रयस्यबाल्यशरीरस्यतदानीमभावादितिभावः ननुबाल्यशरीरन्तदा

मु०॥ प्राणाभावेनज्ञानाभावस्यसिद्धेरितिचेन्नशरीरस्यचैतन्येबाल्येविलोकितस्यस्थविरेस्मरणानुपप त्तेः शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात् नचपूर्वशरीरोत्पन्नसंस्कारेणद्वि तीयशरीरे संस्कारउत्पाद्यतइतिवाच्यम् अनन्तसंस्कारकल्पनेगौरवात्॥ ६ ॥ ६ ॥

स्त्येवेत्यत आह शरीराणामिति संस्कारउत्पाद्यतइति तथाचस्वप्रयोज्यसंस्कारवत्वसम्बन्धेनबाल्यशरीरसमवेतानुभव स्यस्थविरशरीरेसत्वान्नस्मरणानुपपत्तिरिति——भावः गौरवस्यफलमुखत्वाद्दूषणान्तरमाहएवमिति॥

रफलंशरीरस्यात्मत्वनिश्चयः तन्मुखत्वात्तदुत्तरकालीनत्वादित्यर्थः फलंमुखंपूर्वकालीनंयस्येतिव्युत्पत्तेः तथाचोत्तरकालीनगौरवज्ञानस्यपूर्व कालीननिश्चयप्रतिबंधकत्वासंभवइतिभावः इष्टसाधनत्वादन्यदपीत्यर्थ इतीतितथाचसर्वेषांजातिस्मरणत्वापत्तिरितिभावः॥ ६ ॥ मूले अनापत्त्येत्यस्यानागत्येत्यर्थः अन्यथेष्टसाधनतानुभवाभावेनोद्बोधकाभावेनस्मरणासंभवेनचप्रवृत्त्यसंभवेनबालःशुष्ककंठोम्रियेतेतिभावः

रा॰॥ अप्रसंगादिति तादात्म्येनाव्याप्तेरित्यर्थः यागस्य स्वर्गाव्यवहितपूर्वत्वाभावादिति भावः नन्वव्यवहितपूर्ववृत्तित्वमवश्यं कारणतावच्छेदक

दि॰॥ न स्यादित्यत्र हेतुमाह इष्टेति तद्धेतुत्वात् प्रवृत्तिहेतुत्वात् तदानीं स्तन्यपानकृत्यव्यवहितपूर्वकाले ननु प्रवृत्त्यन्यथानुपप त्तिस्तवापि समानेत्याशङ्क्य स्वमते प्रवृत्त्यन्यथानुपपत्तिम्परिहरति मन्मते त्विति अन्यदपीति इष्टसाधनत्वादन्यदपीत्यर्थः अत्र तु स्तन्यपाने प्रवृत्त्यनुकूलेष्टसाधनत्वस्मरणे तु आत्मनो नित्यत्वं साधयतीत्यर्थः इत्यक्तेति स्तन्यपानप्रवृत्त्यनुकूलेष्टसाधनतास्मरणे च प्रागभावस्य नाशसम्भवादाह भावस्येति नाशासम्भवादिति नाशम्प्रति जन्यभावत्वेन हेतुत्वादात्मनो नादित्वेन जन्यभावत्वरूप हेतोरभावेन नाशासम्भवादित्यर्थः इति चार्वाकमतखण्डनम् ननु चक्षुरादीनामेव ज्ञानादिकम्प्रति करणत्वङ्कर्तृत्वञ्चास्त्विति करणत्वञ्च

मु॰॥ एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात् इष्टसाधनताज्ञानस्य तद्धेतुत्वात् तदानीमिष्टसाधनत्वानु भावकाभावात् मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः न च जन्मान्तरानुभूतमन्यदपि स्म र्यतामिति वाच्यम् उद्बोधकाभावात् अत्र तु जीवनादृष्टमेवोद्बोधकङ्कल्प्यते इत्थञ्च संसारस्यानादितया आत्म नोऽनादित्वसिद्धावनादिभावस्य नाशासम्भवान्नित्यत्वं सम्भवतीति बोध्यम् ननु चक्षुरादीनामेव ज्ञानादिकम्प्रति करणत्व ङ्कर्तृत्वञ्चास्तु विरोधे साधकाभावात् अत आह॥ ((व्यापारवत्त्वे सति कारणत्वम्भवति हि चक्षुरादौ चक्षुःसंयोगादिरूपव्यापारव त्त्वात्सुषज्ज्ञानाव्यवहितपूर्वकालवृत्तित्वम् ननु फलोपहितत्वं राजसूयेन स्वाराज्यकामो यजेतेत्यादौ यागादिनिष्ठकारणताया अप्र सङ्गात् करणत्वकारणत्वयोरविशेषप्रसङ्गाच्च कर्तृत्वञ्च यद्यपि क्रियानुकूलकृतिमत्त्वन्न सम्भवत्यचेतने चक्षुरादौ तथापि पूर्वप क्षिणातिरिक्तस्यात्मनः कृत्यादीनामात्मसमवेतत्वस्य चानङ्गीकरणात्कृत्याश्रयत्वमपि चक्षुरादीनामस्त्वित्यर्थः नन्वेकस्यैव करणत्वे कर्तृत्वे कर्तृकरणव्यवहारभेदोऽनुपपन्न इत्यत आह विरोध इति विरोधे विभिन्नाधिकरणवृत्तित्वे तथा च॥ ((संबंधेन विवक्षणीयं तथा राम

चस्त्वजन्यापूर्वसंबंधस्यैव प्रकृते तथात्वान्नाव्याप्तिरन्यथा व्यापारवत्त्वोपादानेपि विशेषप्रदलासत्त्वेन यागस्याकारणत्वापत्तेरित्यतो दूषणान्तरमाह॥ ९७

रा॰॥ कारणत्वेति इदं चाव्यवहितपूर्ववृत्तित्वमेव कारणत्वमित्यभिप्रायेण वस्तुतोऽरण्यस्थदंडादौ कारणताव्यवहारानुरोधेन नियतपूर्ववर्तितावच्छेदकधर्मवत्त्वस्यैव कारणतारूपत्वेन न तयोर्भेदानुपपत्तिर्गंधोपि व्यवहारभेदो व्यवहारवैलक्षण्यं तच्च परस्परविरोध एव न त्वानुपूर्वीभेदोऽत्र भेदशब्दा

दि॰॥ कर्तृकरणत्वलक्षणोपाधेर्भेदात्कर्तृकरणादिव्यवहारभेदोपपत्तिरित्याशयः न चैतन्यमित्यत्र विशेष्यतयोपस्थितस्याभावस्यात्वर्थेन परामर्शसम्भवाद्यच्चेत्तथात्वञ्चैतन्यमिति उपघातपदस्य लोकेऽवयवनाशएव प्रयोगादाह नाश इति मूले उपघाते कथं स्मृतिरित्युक्तम् तत्रोपघातः केषामित्याकांक्षायाः सत्त्वादाह अर्थादिति तथा चैकमेवेन्द्रियाणामिति पदमाकांक्षावशादुभयत्र सम्बध्यत इत्याशयः कथं स्मृतिरिति मूले नेन्द्रियाणाञ्चैतन्यपक्षे चक्षुरभावे स्मृत्यभाव आपादितस्तत्र हेतोरनुक्तेः स्वयं हेतुम्पूरयन्नर्थमाह पूर्वञ्चक्षुषेति नन्विन्द्रियान्तरेणैव स्मृतिर्भविष्यतीत्यत आह अन्येनानुभूतस्येति तत्र हेतुमाह अनुभवेति यद्यपि व्यधिकरणयोः कार्यकारण

मु॰॥ तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥४८॥ तथात्वञ्चैतन्यमुपघाते नाशे सति अर्थाच्चक्षुरादीनामेव कथं स्मृतिः पूर्वञ्चक्षुषानुभूतानाञ्चक्षुरभावे स्मरणन्न स्यात् अनुभवितुरभावात् अन्येनानुभूतस्यान्येन स्मरणासम्भवात् अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः ॥४८॥ १भावविरहात्सामानाधिकरण्येनेत्युक्तिर्विफला

तथापि यत्र विषयतासम्बन्धेन स्मृतिस्तत्र विषयतासम्बन्धेनानुभव इतीदृशविषयत्वघटितसामानाधिकरण्यप्रत्यासत्त्या कार्यकारणभाव आवश्यकः आत्मनिष्ठसामानाधिकरण्यघटितकार्यकारणभावेन घटाद्यनुभवोत्तरम्पटादौ विषयतासम्बन्धेन स्मृत्यापत्तेरवारणादिति चक्षुःकर्तृकानुभवस्य घटे सत्त्वादिन्द्रियान्तरकर्तृकं स्मरणं तत्र नानुपपन्नमित्याशङ्कानिराकरणाय तथोक्तिः समवायघटितसामानाधिकरण्यप्रत्यासत्त्येति तदर्थः ॥ १र्थः एकार्थकयोरपि घटकुंभशब्दयोस्तथादर्शनादसंगत्यापत्तेः नन्वेवं कर्तृकरणपदयोः पर्यायतापत्तिरेकार्थकत्वान्न चेष्टापत्तिः कर्तृप्रयोगस्थले करणशब्दाप्रयोगादित्यत आह तथा चेति। ः।भेदोपपत्तिर्वैलक्षण्योपपत्तिः तद्यपि विभिन्नप्रकृतिनिमित्तकत्वमेव केवलावयवेति अवयवविरहिनावयवेत्यर्थः॥ ६ ॥ ६ ॥

का॰ अ॰ दि॰ रा॰ ९८

रा॰॥ अवयवनाशेऽप्यवयविनो नाशस्यावश्यकत्वात्केवलेत्युक्तं नन्ववयविनाशान्यवच्छेदापत्तिरुक्तिः एवकारेणैव तत्सिद्धेः उभयत्रेति इन्द्रियाणामित्यस्यानुषङ्गः तथात्वं नाशद्वयमुभयोरित्यर्थः घटाद्यनुभवोत्तरं पटादावितिन च घटविषयकस्मरणं प्रति घटविषयकानुभवत्वेन कारणत्वे नैष दोष इति वाच्यं तथा सति विषयभेदेनानन्तकार्यकारणभावप्रसंगादिति भावः ॥ नयोर्हेतुहेतुमद्भावस्वीकारादिति अनुभवस्मरणयोः कार्यकारणभावस्वीकारादित्यर्थः तथा च वि

दि॰॥ चैत्रस्य घटानुभवकाले मैत्रस्य घटस्मरणवारणाय तत्तत्पुरुषीयत्वनिवेशे पुरुषभेदेनानन्तकार्यकारणभावकल्पने गौरवात्समवायघटितसामानाधिकरण्यप्रत्यासत्त्या नयोर्हेतुहेतुमद्भावस्वीकारादिति भाव इति ध्येयम् इतीन्द्रियवादिमतखण्डनम् ॥ ४८ ॥ इन्द्रियाणाञ्चैतन्यपक्षे यो दोषः सोऽत्र कल्पे नास्तीति सूचयितुमाह नित्यस्येति ननु तथेत्यत्र मूलेन तच्छब्देन पूर्वोपस्थितचैतन्यस्यैव परामर्शः स्यात् तथा चासङ्गतिः स्यादित्यत आह नतथा न चेतनमिति अनध्यस्तनाशाभवेदिति मूले मनसश्चैतन्ये ज्ञानादेरप्रत्यक्ष

सु॰॥ ननु चक्षुरादीनाञ्चैतन्यमास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह मनोऽपि न तथा ज्ञानाद्यनध्यक्षतदा भवेत् न तथा न चेतनं ज्ञानाद्यनध्यक्षतदा भवेत् मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वात् मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः यथा च मनसोऽणुत्वं तथाग्रे वक्ष्यते नन्वस्तु विज्ञानमेवात्मा तस्य स्वतः प्रकाशरूपत्वाच्चेतनत्वम् ॥

त्युक्तम् तत्र हेतुम्प्रदर्शयन्नाह मनस इति तत्प्रत्यक्षेति ज्ञानादिप्रत्यक्षानुपपत्तिरित्यर्थः ननु मनसोऽणुत्वमेवासिद्धमत आह यथा चेति अग्रे वक्ष्यत इति अयौगपद्याज्ज्ञानानान्तस्याणुत्वमिहेष्यत इति ग्रन्थे न साधयिष्यत इत्यर्थः विज्ञानवादी शङ्कते नन्विति विज्ञानमेवेति आत्मनिरूपणस्य प्रस्तुतत्वादात्मेत्युक्तम् वस्तुमात्रस्यैव तन्मते विज्ञानरूपत्वादिति बोध्यम् ॥ ९ ॥ ९ ॥

षयतयैकस्समवायेन चैकः कार्यकारणभाव इति भावः एतच्चापाततः उक्तरीत्या कार्यकारणभावद्वयानंगीकारेऽपि घटघटत्वसमवायविषयकनिर्विकल्पकादपि घटत्वप्रकारकस्मरणापत्तेः न च प्रकारत्वविशेष्यत्वसांसर्गिकविषयताभिः कार्यकारणभावत्रयोपगमान्नैष दोषो निर्विकल्पकस्य तादृशविषयतानभ्युपगमादिति वाच्यम् ॥ रामः ९८

ए॥ एवमपिघटत्वपटत्वाभ्यां पटघटविषयकानुभवाद्घटत्वप्रकारकपटविशेष्यकपटत्वप्रकारकघटविशेष्यकस्मरणापत्तेः॥ कालिकेनघटत्वप्रकारकसमवायेनघटत्वप्रकारकपटविशेष्यकानुभवात्समवायेनघटत्वप्रकारकस्यकालिकेनपटत्वप्रकारकस्यघटविशेष्यकस्मरणापत्तेरशक्यपरिहारत्वात् अनायत्त्याघटत्वप्रकारकसमवायसंसर्गकघटविशेष्यकानुभवस्समवायेनघटत्वप्रकारकसमवायसंसर्गकघटविशेष्यकस्मरणंप्रतिसमवायेनकारणमितिरीत्याविषयभेदेनानंतकार्यकारणभावास्यैवकल्पनीयत्वात् परंतुकालिकविशेषणताप्रत्यासत्तिघटितसामानाधिकरण्यप्रत्यासत्त्यास्मरणानुभवयोः कार्यकारणभावाभ्युपगमेएकेंद्रियेणानुभूतस्यइंद्रियांतरेणापिस्मरणोपपत्तेःसमवायघटितसामानाधिकरण्यार्थकस्यसामानाधिकरण्यप्रत्यासत्त्येत्यस्यमूलेभिधानमितियुक्तमुत्पश्यामः॥४८॥ असंगतिःस्यादितिमनसोज्ञानरूपत्वासंभवादितिभावः साधयिष्यतइत्यर्थइति यद्यपिमानसान्यप्रत्यक्षंप्रत्येवमहत्त्वस्यकारणत्वोपगमेनैषदोषः अतएवमाध्वादिमतेजीवानामणुत्वमेव अंगीकृतंतथापिमानसान्यत्वप्रत्यक्षत्वयोर्विशेषणविशेष्यभावेविनिगमनाविरहेणागुरुतरकार्यकारणभावद्वयापत्यागौरवापत्तेर्नतथोपगमसंभवः नचसिद्धांतिमते अनंतजीवानांकल्पनीयतयाकारणताद्वयकल्पनेगौरवमितिवाच्यं अनेकजीवकल्पनागौरवस्यफलमुखत्वेनादोषत्वादितिभावः॥ ९ ॥

का॰मु॰ रा॰॥ विज्ञानात्मकवादिविचारे तदंगविप्रतिपत्तिं दर्शयति अत्रेति सत्त्वस्यैवेति सामान्यादीनां तन्मते अलीकत्वादितिभावः सत्वमत्रकालसंबंधित्व

दि॰रा॰ मेववाग्राह्यं अहं जानामिति अहमित्याकारकज्ञानमित्यर्थः तेनसुषुप्तिकाले उत्तरत्र वक्ष्यमाणालयविज्ञानधारानुवृत्तेर्नविरोधः अन्यथातत्काले

११

दि॰॥ अत्रविज्ञानत्वस्य प्रमेयत्वस्य सत्वस्य व्यापकत्वं वेति विप्रतिपत्तिः तत्र विधिकोटिर्योगाचारस्य निषेधकोटिर्नैयायिकस्येतिबोध्य

म् द्विविधं विज्ञानम् प्रवृत्तिविज्ञानमालयविज्ञानञ्चेति तत्राद्यं घट इत्यादिप्रवृत्तिविज्ञानम् अहञ्जानामीत्यालयविज्ञानन्तदेवा

त्मानस्य विज्ञानस्य नतु सुषुप्तावात्मानसिद्धेः तत्पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नाशाद्विज्ञानान्तरस्य च तदानीमुत्पादकाभावादत

मु॰॥ ज्ञानसुखादिकन्तु तस्यैवाकारविशेषः तस्यापिभावत्वादेव क्षणिकत्वम् पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञानहेतुत्वात् सु

षुप्त्यवस्थायामप्यालयविज्ञानधारानिराबाधैव मृगमदवासनावासितवसनइव पूर्वपूर्वविज्ञानजनितसंस्काराणामु

त्तरोत्तरविज्ञानेसङ्क्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः यत्किञ्चिद्विषयकत्वे वि

निगमनाविरहः सुषुप्तावपि विषयावभासप्रसङ्गश्च ज्ञानस्य सविषयत्वात् तदानीन्निराकाराचित्सन्ततिरनुवर्त्तत इति चेन्न त

स्याः प्रकाशत्वे प्रमाणाभावात् अन्यथा घटादीनामपि ज्ञानत्वापत्तिः नचेष्टापत्तिः विज्ञानव्यतिरिक्तवस्तुनोऽभावादितिवा

च्यम्॥ घटादेरनुभूयमानस्यापलपितुमशक्यत्वात्॥ ॥आह पूर्वपूर्वेति ननु विज्ञानस्य क्षणिकत्वेन तदाश्रितसंस्कारस्यापिक्ष

णिकत्वात्कालान्तरेस्मरणन्नस्यादित्याशङ्कां परिहरति मृगमदेति विज्ञानस्य जगद्विषयकत्वं यत्किञ्चिद्विषयकत्वं वाभिप्रेतमिति

विकल्प्याद्ये दूषणमाह तस्येति विज्ञानस्य द्वितीये त्वाह यत्किञ्चिदिति आत्मस्वरूपविज्ञानस्य सविषयत्वे दूषणमाह सुषुप्तावि ति

शङ्कते तदानीमिति निराकारा निर्विषया चित्सन्ततिः विज्ञानसन्ततिः प्रकाशत्वे ज्ञानत्वे ज्ञानत्वस्य विषयिता व्याप्यत्वादिति भावः॥ २

प्रवृत्तिज्ञानविरहेण जानामीत्याकारकज्ञाने च घटः पट इत्यादिप्रवृत्तिज्ञानस्यैव विषयत्वेन आलयविज्ञानानुवृत्तेस्तदानीमसंभवापत्तेः अहमित्याका

रकज्ञाने च स्वयमेव विषयः घट इत्यादिज्ञानस्य तद्धोचरप्रवृत्तिसाधनत्वात्प्रवृत्तिज्ञानमिति बोध्यम् उत्पादकाभावादिति पुरीतद्भिन्नदेशावच्छिन्न ११

मनःसंयोगस्य कारणत्वादृष्टः सुषुप्तौ॥ रामः

ए०॥ तदानींतदालयविज्ञानस्यस्वमात्रविषयकत्वोपगमेपितस्यैवतदानींभानप्रसंगइतिभावः॥प्रमाणाभावेपीतिविषयिताात्मकज्ञानत्वव्यापकाभावेपी
त्यर्थः॥तदभिन्नेतिनीलरूपाकारात्मकविज्ञानाभिन्नस्यपीताकारस्यनीलाभिन्नत्वनियमादितिभावः॥एकत्रसमावेशइतिएकाधिकरणवृत्तित्वेनावधा

दि०॥ अन्यथाप्रमाणाभावेपितत्रज्ञानत्वस्वीकारेआकारस्यविज्ञानातिरिक्तत्वमनतिरिक्तत्वंवेतिविकल्प्याद्येदूषणमाहतर्हिंसमायातमि
तिद्वितीयेत्वाहसमूहालंबनइतिनीलपीतेइतिसमूहालंबनइत्यर्थः॥स्यादितितदभिन्नाभिन्नस्यतदभिन्नत्वनियमादितिभावः॥एतदेवोपपाद
यतिस्वरूपतोविज्ञानस्येतिविज्ञानस्वरूपस्येत्यर्थः॥अविशेषात्एकत्वात्ननुनीलाकारःपीताकारश्चाभिन्नएवज्ञानस्वरूपत्वात्भेदप्रतीति
स्तुतद्धर्मयोर्नीलत्वपीतत्वयोर्भेदान्नचतयोरविज्ञानस्वरूपत्वाद्भेदःनीलत्वादेरपारमार्थिकस्यपारमार्थिकविज्ञानेनाभेदासम्भवादित्यभिप्रा

मु०॥ आकारविशेषएवायंविज्ञानस्येतिचेन्नकिमयमाकारोऽतिरिच्यतेविज्ञानात्तर्हिंसमायातंविज्ञानव्यतिरिक्तेननातिरिच्यतेचे
त्तर्हिंसमूहावलंबनेनीलाकारोपिपीताकारःस्यात्स्वरूपतोविज्ञानस्याविशेषात्अपोहरूपोनीलत्वादिर्विज्ञानधर्मइतिचे
न्न॥नीलत्वादीनांविरुद्धानामेकस्मिन्नसमावेशात्इतरथाविरोधावधारणस्यैवदुरुपपादत्वात्नवावासनासंक्रमःसम्भवतिमा
तृपुत्रयोरपिवासनासङ्क्रमप्रसङ्गात्नचोपादानोपादेयभावोनियामकइतिवाच्यम्वासनायाःसङ्क्रमासम्भवात्उत्तरस्मिन्नुत्पत्ति
रेवसङ्क्रमइतिचेन्नतदुत्पादकाभावात्चितामेवोत्पादकत्वेसंस्कारानन्त्यप्रसङ्गः॥ ॥एवान्शङ्कतेअपोहरूपइतिअनीलव्यावृत्तिरूपइत्य
र्थः॥इतरथाविरुद्धनीलत्वादीनामेकत्रसमावेशेनतुसमूहालंबनेननीलाकारोनवापीताकारोभ्युपेयतेपरन्तुचित्राकारएवेतिनोक्तदोषइतिवा
सनासङ्क्रमस्युस्यतयादूषयतिनवेतिमातृपुत्रयोरितिमात्रनुभूतस्यगर्भस्थेनतनयेनस्मरणप्रसङ्गादितिभावः॥उपादानेनानुभूतमुपादेयेन
स्मर्यइत्यपिनिरस्यतिनचेतिशङ्कतेउत्तरस्मिन्नितितदुत्पादकेतिवासनोत्पादकेत्यर्थः॥चितामेवेति॥ ॥ ॥रणेतेनैकाधिकरणवृत्तीनामपितथात्वेना
प्रतीतिदशायांभ्रमात्मकविरोधावधारणेपिनासंगतिः॥उपादानेनेतिअत्रोपादानत्वंनसमवायिकारणत्वंविभिन्नकालीनयोःक्षणिकज्ञानव्यक्त्योरेकव्यक्तिंप्रति
अपरव्यक्तेस्तत्समवायिकारणत्वासंभवात्नापितन्मतेस्वकारणत्वेसतिस्वोत्पत्तिकालोत्पत्तिकध्वंसप्रतियोगित्वमुपादानत्वंतन्मतेवस्तुमात्रस्यैवक्षणिकत्वे

रा:॥अतएवनस्वभिन्नासमवेतत्वेसतिस्वकारणत्वमुपादानत्वंउत्तरोत्तरघटादिव्यक्तिंप्रतिपूर्वपूर्वघटादिव्यक्तीनामुपादनत्वानुपपत्तेस्तन्मतेतन्मा
त्रुपादानोपादेयभावाभ्युपगमेनेष्टापत्त्यसंभवात्परंतुअसहकृतंकारणमुपादानंउत्तरव्यक्तौपूर्वव्यक्तिमात्रस्यैवतत्कारणत्वांगीकारात्भवत्युत्तरव्यक्तौ
पूर्वव्यक्तेरुपादानत्वंमाताचपुत्रंप्रतिनासहकृतंकारणंशुक्रशोणितादेरपिपुत्रकारणत्वादितिध्येयं॰शक्तिविशेषइतिअयंभावः ज्ञानव्यक्तीनांसंस्का
रज्ञानजनकत्वेप्रतिज्ञानंभिन्नसंस्कारव्यक्तिकल्पनागौरवेपियादृशज्ञानस्यव्यक्त्युत्तरंस्मरणमनुभवसिद्धंतज्ज्ञाननिष्ठसंस्कारानुकूलाकाचित्शक्तिःपू
र्वज्ञानव्यक्तौस्वीकरणीयानतुसर्वज्ञानव्यक्तावतिशयःकल्प्यतेनसंस्काराणांत्वक्षणिकेतितन्मतेपदार्थमात्रस्यक्षणिकत्वेपियदायत्स्मरणमनुभ
वसिद्धंतदातज्ज्ञानेवैकैवशक्तिःकल्पनीयानानातोनंतशक्तिकल्पनागौरवमितियदिप्रक्रियातदाज्ञानव्यक्तिभेदेनशक्तिर्भिन्नैवांगीकरणीयाह्यार्थानांत

दि॰॥ज्ञानानामेवसंस्कारोत्पादकत्वेतेषामानन्त्यात्संस्कारानन्त्यापत्तिःशङ्कतेक्षणिकेतिअतिशयविशेषःशक्तिविशेषःउत्त

मु॰॥क्षणिकविज्ञानेष्वतिशयविशेषः कल्प्यतइतिचेन्न मानाभावात् कल्पनागौरवात्॥
एतेनक्षणिकशरीरेष्वेवचैतन्यमप्रत्युक्तम् गौरवादतिशयेमानाभावाच्च॥

रोत्तरविज्ञानानुकूलतयेतिशेषःगौरवादितिसएवायमित्यापामरप्रत्यभिज्ञानात्॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६

न्मतेक्षणिकत्वादितिसमाधानसूचनायपदार्थमात्रसाधारणक्षणिकत्वस्यापिशक्तावनुवादःअतएवध्वंसप्रागभावावप्यवश्यकल्प्यावितिद्योतनाय
ध्वंसप्रागभावयोरुपादानमपिसंगच्छतेअनंतेतिनुअनंतव्यक्तिकल्पनागौरवस्फुरणाययदायदास्मरणमनुभूयतेतदातदाविभिन्नशक्तिव्यक्तिकल्प
नस्यावश्यकत्वादितिभावःइदमुपलक्षणंतत्तदतिशयंप्रतिपूर्वकालीनज्ञानव्यक्तीनांकारणताकल्पनेनापिगौरवंबोध्यंअत्रचप्रामाणिकंगौरवंन
दोषायेतिन्यायेननानाशक्तिकल्पनेपिनदोषइत्याशंकानिरासायैवसोयमित्यभेदप्रत्यभिज्ञानादित्युक्तंअभेदस्यैवानुभवसिद्धतयानानाव्यक्तिक
ल्पनंनप्रामाणिकमितितदभिप्रायःवस्तुतस्तुपदार्थमात्रस्यैवक्षणिकत्वानुपगमेहेतुरेतत्तथाचक्षणिकपदार्थोपगंतॄणांमतेनानाव्यक्तिकल्पना
गौरवमेवहेतुत्वेनाभिमतंतत्रैवप्रामाणिकंगौरवंनदोषायेत्याशंकायामाहसएवायमिति॥ ६ ॥ ६ ॥

रा॰॥ तथाचाभेदस्यैव अनुभवसिद्धतयाक्वविभिन्नव्यक्तीनां प्रामाणिकताचिंतेतिभावः एतेनप्रत्यभिज्ञायाः प्रत्यक्षरूपत्वेनशक्तीनामतींद्रियत्वेनतद्विषयकप्रत्यभिज्ञानंसंभवतीतिदूषणमपिप्रत्युक्तंजातिविशेषइति अंकुरोपधायकक्षणिकवीजव्यक्तिमात्रवृत्तिजातिरित्यर्थः नचायमपोहरूपानुगत

दि॰॥ क्षणिकानन्तशक्तितत्प्रागभावध्वंसकल्पनेगौरवादित्यर्थः ननुक्षेत्रस्थवीजादङ्कुरोत्पत्तिर्नकुसूलस्थवीजात्तोऽङ्कुरत्वावच्छिन्नप्रतिकुर्वद्रूपत्वेनहेतुत्वमङ्गीक्रियतेकुर्वद्रूपत्वञ्चाङ्कुरजनकतावच्छेदकतयासिद्धोजातिविशेषः सचफलोपधायकक्षणिकसमर्थवीजमात्रवृत्तिर्वीजत्वव्याप्यः कल्प्यतेएवमात्रापिकुर्वद्रूपत्वेनैवक्षणिकशरीरेषूत्तरोत्तरशरीरनिष्ठवासनोत्पादकत्वंवाच्यमत आहवीजादाविति उपपत्तेः कस्माच्चिद्वीजादङ्कुरोत्पत्तिः कस्माच्चिन्नेतिनियमोपपत्तेः कुर्वद्रूपत्वाकल्पनादितिकुसूलस्थवीजादिषुधरणिसलिलसंयोगादिरूपसहकार्यभावादेवाङ्कुरानुत्पत्तेः कुर्वद्रूपत्वन्तद्रूपेणकार्य्यजनकत्वञ्चनकल्प्यतेप्रमाणाभावादितिभावः अत्रव

मू॰॥ वीजादावपिसहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनात् ॥

दन्तियत्सत्तत्क्षणिकमितिव्याप्त्याजगतः क्षणिकतातदनुरोधेनकुर्वद्रूपत्वन्तद्रूपेणकार्यम्प्रतिहेतुत्वञ्चावश्यकम् नचताहशव्याप्तौमानाभावः ताहशव्याप्त्यस्वीकारेकुसूलस्थवीजादङ्कुरोत्पत्तिवारणायधरणिसलिलसंयोगादीनांसहकारित्वकल्पनेगौरवात् ताहशव्याप्तिस्वीकारेतुकुर्वद्रूपत्वेनहेतुत्वकल्पनात्कुसूलस्थवीजेकुर्वद्रूपत्वाभावादेवाङ्कुरानुपपत्तेनसहकारिताकारणान्तराणामितिलाघवात् नचक्षणिकत्वमतेपिवीजस्यधरणिसलिलसंयोगादेर्वाकुर्वद्रूपत्वेनहेतुत्वमित्यत्रविनिगमनाविरहेणसर्वेषांसहकारिणाङ्कारणत्वकल्पनमावश्यकमितिवाच्यम् मन्मतेअङ्कुरम्प्रतिवीजानान्धरणिसलिलसंयोगादिसहकारिणाञ्च कुर्वद्रूपत्वेनैवहेतुत्वकल्पनात् ॥ ९९ धर्ममात्रंसातन्मतेअलीकत्वादितिताहशव्याप्त्यस्वीकारइति तथाचजगदादिक्षणिकंनस्यानदानानाकारणताकल्पनरूपगौरवोपधायकंस्यादितितर्कएवोक्तव्याप्तौप्रयोजकइतिभावः मन्मतइति तथाचकुर्वद्रूपत्वेनसर्वेषांकारणत्वेपिकारणताएकैवत्वन्मतेतुनानाकारणताकल्पनीयेतिगौरवमितिभावः॥ ९ ॥ ९ ॥

रा॰॥ ईदृशगौरवेति कतिपयकारणताकल्पनगौरवेत्यर्थः फलमुखत्वादिति नानाकारणताकल्पनापेक्षया लाघवेन कुर्वद्रूपत्वेनैव कारणतासिद्धा एतदुपपत्तये नानाव्यक्तिकल्पने तादृशकल्पनायाः कारणतासिद्ध्युत्तरकालीनतया तादृशगौरवज्ञानस्य पूर्वतनानुमितिप्रतिबंधकत्वासंभवादिति भावः न च कारणतानिश्चयात्पूर्वमपि यत्सदित्यादिव्याप्त्या नानाव्यक्तिकल्पनमुपतिष्ठत एवेति वाच्यं तादृशव्याप्तेरप्रयोजकत्वाशंकानिरासाय उक्ततर्कापेक्षया तत्र चापाद्यव्यतिरेकनिश्चयसंपादकस्यैकरूपे ॱॱ णतादृशनिश्चयस्यापेक्षणीयतया गौरवोपस्थितेः॥ कारणतासिद्ध्युत्तरत्वनियमादिति भावः दोषत्वादिति उत्पन्नायामप्यनुमितौ उत्तरकालीनगौरवज्ञानेनाप्रामाण्यज्ञानोत्पत्त्या अप्रामाण्यज्ञा

दि॰॥ कुर्वद्रूपत्वानङ्गीकारे तु वीजत्वधरणिसलिलसंयोगत्वादिना नाहेतुत्वकल्पने गौरवात् इति तदसत् ईदृशगौरवापेक्षया क्षणिकानन्तपदार्थकल्पनेऽतिगौरवात् न च लाघवात्कुर्वद्रूपत्वेन तेषामेकहेतुतासिद्धावीदृशगौरवन्न दोषाय फलमुखत्वादिति वाच्यम् फलमुखगौरवस्यापि दोषत्वात् किं च जगतः क्षणिकत्वे स एवायं घट इति प्रत्यभिज्ञानुपपत्तिः पूर्वकालीनघटाभेदस्य तत्कालीनघटेऽभावात् न च तज्जातीयाभेद एव तादृशप्रतीतेर्विषयः त्वन्मते जातेरपि क्षणिकत्वेन पूर्वकालीनघटवृत्तिघटत्वस्य तत्कालीनघटेऽभावात् एतेन जगतः क्षणिकत्वे नाशत्वावच्छिन्नं प्रतिसत्त्वेनैकमेव हेतुत्वमिति लाघवमित्यपास्तम्॥ छ॥

नानास्कंदितानुमित्या एककारणत्वासिद्ध्यसंभवादिति भावः यद्यपि तन्मते जातेरलीकतया सत्त्वाभावेन न क्षणिकत्वं नित्यपदार्थानंगीकारात् अनुगतधर्मानंगीकाराच्च कुर्वद्रूपत्वव्याप्यापोहरूपत्वात् न च तर्हि सदृशतोः संबंधाभावेन तज्जातीयत्वं घटे नास्त्येवेति प्रत्यभिज्ञानुपपत्तिरिति वाच्यम् असतोऽपि तैर्भानांगीकारेण प्रत्यभिज्ञानसंभवादिदमसंगतं तथापि असद्विषयकत्वेन प्रत्यभिज्ञाया भ्रमत्वापत्तिरेतन्मते दूषणं क्षणिकविज्ञानेन चेष्टापत्तिस्तथा सति अभेदावगाहितयैव प्रतीत्युपपत्तौ तज्जातीयत्वानुसरणवैयर्थ्यापत्तेः प्रमात्वोपपादनायैव तदनुसरणात्तदनुसरणेनाप्यप्रतीकारादिति विभावनीयम्॥ रा॰म॰ १०१

रा॰॥ क्षणिकविज्ञानपक्षइत्यस्यविज्ञानस्यक्षणिकत्वपक्षइत्यर्थकताभ्रमंनिराकुरुते आत्मनइति उत्तरत्रदूषणद्वयस्यमूलेवक्तव्यतयाविक
ल्पद्वूषणद्वयंसंगमयति आत्ममात्रस्येति यत्किंचिद्विषयकत्वंवेतिनियतैकविषयकत्वमित्यर्थः यथाश्रुतेअनुभवानुसारेणानियतयत्किंचि॥

दि॰॥ यदपिस्थिरपदार्थाङ्गीकारेएकस्मिन्पदार्थेसामर्थ्यमसामर्थ्यञ्चविरुद्धमतस्तद्भेदइति तदपिनएकस्मिन्नेवपदार्थेएककालावच्छे
देनसामर्थ्यतदभावयोरेवविरुद्धतयाकालभेदेनतत्स्वीकारेबाधकाभावात् यत्तुपूर्वापरकालीनधर्मिणोरभेदेतद्धर्मयोःसामर्थ्यासाम
र्थ्ययोर्भेदोऽनुपपन्नस्तन्मतेधर्मधर्मिणोरभेदादितितन्नघटत्वन्नघटइत्यादिप्रतीतिनामप्रामाण्यापत्याधर्मधर्मिणोरभेदस्यवक्तुमशक्य
त्वादितिदिक् इतिक्षणिकवादिमतखण्डनम् वेदान्तीशङ्कते अस्तुतर्हीति क्षणिकविज्ञानइति आत्मनःक्षणिकविज्ञानस्वरूपत्वपक्ष
इत्यर्थः आत्ममात्रस्यनित्यविज्ञानरूपत्वमीश्वरस्यैववेति विकल्पाद्येदूषणमाह तस्येतिदर्शितत्वादितित्तस्यजगद्विषकत्वइत्या

मू॰॥ अस्तुतर्हिक्षणिकविज्ञानेगौरवात् नित्यविज्ञानमेवात्मा अविनाशीवाऽरेऽयमात्मासत्यञ्ज्ञानमनन्तम्ब्रह्मेत्यादिश्रु
तेश्चेतिचेन्नतस्यसविषयत्वासम्भवस्यदर्शितत्वान्निर्विषयस्यज्ञानत्वेमानाभावात् सविषयकत्वस्याप्यननुभवादतोवि
ज्ञानादिभिन्नोनित्यआत्मेतिसिद्धम् सत्यञ्ज्ञानमितिब्रह्मपरञ्जीवेतुनोपयुज्यतेज्ञानाज्ञानसुखित्वादिभिर्जीवानाम्भे
॥दसिद्धेः॥
दिग्रंथेनदर्शितत्वादित्यर्थः तथाचजीवस्यतथात्वासम्भवात् नात्ममात्रस्यनित्यज्ञानस्वरूपत्वमितिभावः ननुजीवस्य
नजगद्विषयकत्वन्नवानियतयत्किञ्चिद्विषयकत्वम्ब्रूमः परन्तुयद्विषयकत्वंयत्रजीवेऽनुभवसिद्धन्तत्रतद्विषयकत्वमतआहस
विषयकत्वस्येति ननुसत्यञ्ज्ञानमितिश्रुतिरेवजीवस्यज्ञानस्वरूपत्वेप्रमाणमतआहसत्यमिति ननुजीवब्रह्मणोरैक्यान्नित्यविज्ञानरू
पत्वञ्जीवस्यनिराबाधमित्यतोजीवब्रह्मणोर्भेदंसाधयति ज्ञानाज्ञानेतिसुखित्वादीत्यादिनादुःखित्वपरिग्रहः॥ ॥द्विषयकत्वस्यैवव्य
वस्थापनीयतयाअसंगत्यापत्तेः नद्विषयकत्वमिति तथाचानु——भवानुसारित्वात्कल्पनायानविनिगमनाविरहावकाशइतिभावः सविषय
त्वस्येतीति नहिघटविषयकोहेतुर्घटविषयकज्ञानवानित्येवअनुभवादितिमूलाशयः॥

का॰सु॰ रा॰॥ अन्यथेतिनन्वेकस्मिन्नेवब्रह्मणिजीवोपाधीनामनंततदंतःकरणावच्छेदेनविलक्षणसुखित्वदुःखित्वाद्यनेकानुभवोनविरुध्यतेएक
दि॰रा॰ स्मिन्नेवगगनेविभिन्नकर्णनासाद्यवच्छेदेनविरूद्धशब्दतदभावयोरनुभवादित्याशंकायामुक्तंमूलेन्यथेति तदर्थमाह ईश्वरस्येति संसारीति
१०२ बद्धइत्यस्यविवरणंमुक्तइतिनिवृत्तसंसारइत्यर्थः अनुपपत्तिःस्यादित्यत्रहेतुमाहचैत्रमैत्रात्मनोरितिबद्धमुक्तात्मनोरितितदर्थः॥ ईश्वर
स्वरूपयोरिदंचैक्यहेतुत्वेनोक्तं अथतत्तदंतःकरणावच्छिन्नचैतन्यस्यएकत्वेपितदंतःकरणस्यनाशेतदंतः करणावच्छिन्नचैतन्यस्य
मुक्तत्वव्यवहारः यदंतःकरणस्यननाशःतदंतःकरणावच्छिन्नचैतन्येबद्धत्वव्यवहारइतिबद्धमुक्तव्यवस्थायानानुपपत्तिरितिचेत्‌एव

दि॰॥ सुतरामिति जीवात्मनानानात्वसिद्धावीश्वरस्यैकस्यानेकजीवात्मकत्वासम्भवादेकत्वानेकत्वयोर्विरोधादितिभावः

सु॰॥ सुतरामीश्वरभेदः अन्यथा बन्धमोक्षव्यवस्थानुपपत्तेः॥

ईश्वरभेदः ईश्वरजीवात्मनोर्भेदःसिध्यति अन्यथा ईश्वरस्यजीवात्मकत्वे बन्धमोक्षेति कश्चित्संसारीबद्धःक
श्चिन्मुक्तइतिव्यवस्थानुपपन्नास्यादित्यर्थः चैत्रमैत्रात्मनोरीश्वररूपयोरैक्यादितिभावः॥

मपिमोक्षार्थेप्रयत्नानुष्ठानवैफल्यापत्तिवारणादेतदंतःकरणनाशेपिअंतःकरणांतरावच्छिन्नेस्वात्मनिदुःखोत्पत्तेरावश्यकतयाप्रवृत्ति
फलस्यनिर्दुःखित्वस्यासंभवादितिभावः यदिचांतःकरणस्यैवसुखदुःखादिर्नचैतन्यस्यकदापीत्युच्यतेतदाविमुक्त्यर्थप्रयत्नोव्यर्थएव
स्वस्यनित्यमुक्तत्वात्‌ यदिचभ्रांतिनिवृत्त्यर्थंतदप्युच्यतेतदाप्यंतःकरणांतरावच्छिन्नेस्वस्मिन्नेवभ्रांतेरावश्यकत्वेनप्रयत्नस्यनिष्फल
त्वापत्तेरावश्यकत्वादितिभावः यथाश्रुतेभेदनाशाभ्युपगमेनपुनर्भेदोत्पादस्यमूलानुक्तत्वेनचभेदव्यवस्थापनस्यासंगत्यापत्तेरितिध्येयं
नचभेदनाशेप्रतिबंधकाभावेनतादात्म्यमप्युत्पद्यतामितिवाच्यं॥ ६॥

रा॰॥ अभेदभावनामात्रेण तादात्म्योत्पत्तौ घटपटयोरपि तथात्वापत्तेरिति भावः॥ ॥ स्वभिन्नधर्मशून्यत्वमित्यस्यानुपपन्नमित्यग्रतनेनान्वयः द्वितीय

दि॰॥ ननु कथं तर्हि तत्त्वमसीत्यादितच्छब्दप्रतिपाद्यब्रह्मणि युष्मच्छब्दप्रतिपाद्यजीवस्याभेदबोधको वेदः प्रमाणमित्यत आह योपीति मोक्षकाले जीवात्मनां ब्रह्मणा सहाभेद उत्पद्यत इति मतं निरस्यति मोक्षेति भेदस्यानित्यत्वमभ्युपेत्यापि मोक्षकाले जीवब्रह्मणोर्भेदं व्यवस्थापयति भेदनाशेपीति भेदसत्त्वे व्यक्तिद्वयं निर्विवादमेवेत्यपि नासूचितम् नवं वेदान्तिनः निर्धर्मक इति द्वन्द्वस्य सत्यत्वाभावेपि त्यत्र हेतुं तयोक्तम् ननु निर्धर्मकत्वं स्वभिन्नधर्मशून्यत्वं मिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मरूपत्वाद् भावस्याधिकरणात्मकत्वान्नानु

सु॰॥ योपीश्वराभेदबोधको वेदः सोपि तदभेदेन तदीयत्वं प्रतिपादयन्तीति अभेदभावनयैव यतितव्यमिति वदति अत एव सर्वे एते आत्मानः समर्पिता इति श्रूयते मोक्षदशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न भेदस्य नित्यत्वेन नाशासम्भवात् भेदनाशेपि व्यक्तिद्वयं स्यात्स्यात्येव न च द्वित्वमपि नश्यतीति वाच्यम् तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेपि सत्यस्वरूपत्वादिति वत् द्वित्वाभावेपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात् मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेत् एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्युच्यताम् प्रत्येकमेकत्वेपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात् योपि तदानीमभेदप्रतिपादको वेदः सोपि निर्दुःखत्वादिना साम्यं प्रतिपादयति सम्पदाधिक्ये पुरोहितोयं राजा संवृत्त इतिवत् अत एव निरञ्जनः परमं साम्यमुपैतीति श्रुतेः ईश्वरोपि न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः॥

१ पपन्नमित्यभिप्रायेण शङ्कते मिथ्यात्वाभाव इति ननु कथमेकत्वाधिकरणे तदभावरूपं द्वित्वमत आह प्रत्येकमिति ननु ब्रह्म विद्ब्रह्मैव भवतीति श्रुतेर्मोक्षदशायामभेद उत्पद्यत इत्यर्थिकायाः का गतिरत आह योपीति अत एव ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेः साम्यप्रतिपादकत्वादेव निरञ्जनः निर्दुःखः द्वितीये दोषमाह ईश्वरोपीति॥

१ इति नात्मसामान्यस्य ज्ञानरूपत्वं किन्तु परमात्मन एवेति द्वितीयपक्ष इत्यर्थः॥ ६ ॥

रा॰॥ मत्वर्थीयेति तदस्यास्तीत्यर्थे मत्वादीनामिव अर्श आदिभ्योऽजितिसूत्रेण अच्प्रत्ययविधानादितिभावः नपुंसकत्वानुपपत्तिरितिस्यादानंदश्चुरानंदइतिकोशेन तस्य नित्यपुल्लिंगत्वावधारणादितिभावः न च छांदसं नपुंसकलिंगत्वमिति वाच्यम् गत्यंतराभाव एव छांदसत्वाभ्युपगमादित्यर्थः पंआवश्यकीति ब्रह्मणि सुखभिन्नस्यैवाभेदान्वयसंभवादितिभावः नञ्नञर्थभेदस्याश्रयतयैव ब्रह्मण्यन्वयो वाच्य इत्यत आह अन्यथेति नामार्थतये॥

दि॰॥ विज्ञानपदेन नित्यमित्यादिश्रुत्यन्तर्गतविज्ञानपदेनाऽधिकरणल्युडन्तविज्ञानपदेन विज्ञानाश्रयत्वबोधनादितिभावः आनन्दवदित्यर्थ इति मत्वर्थीयोच्प्रत्ययान्तेनानन्दशब्देनानन्दवतो बोधनात् अन्यथानन्दमिति नपुंसकत्वानुपपत्तिरितिभावः नन्वानन्दवदित्यर्थो न सङ्गच्छते तन्मते ईश्वरे आनन्दाभावादत आह आनन्दोपीति लक्षणाकल्पनमेव तद्दोष इत्यत आह असुखेति असुखमि

सु॰॥ नित्यं विज्ञानमानन्दम्ब्रह्मेत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः यः सर्वज्ञ इत्याद्यनुरोधात् आनन्दमित्यस्याप्यानन्दवदित्यर्थः अर्श आदित्वान्मत्वर्थीयोऽच्प्रत्ययः अन्यथा पुंलिङ्गत्वापत्तेः आनन्दोपि दुःखाभावे उपचर्य्यते भाराद्यपगमे सुखी संवृत्तोहमितिवत् असुखा न तस्मिन्नानन्दो नत्वसावानन्दः असुखमिति श्रुतेः न विद्यते सुखं यस्येति कुतो नार्थ इति चेन्न क्लिष्टकल्पनापत्तेः॥

ति असुखमित्यत्र नञा ब्रह्मणि सुखभेदबोधनादितिभावः क्लिष्टकल्पनापत्तेरिति बहुव्रीहावन्यपदार्थलाभार्थं नञस्तत्र लक्षणापत्तेरित्यर्थः न च नञ्तत्पुरुषेपि नञो लक्षणावश्यकी अन्यथा नञर्थस्य नामार्थतया भेदेनान्वयासम्भवादिति वाच्यम् तस्य नामत्वेपि निपातत्वादिति॥ ९९

ति॥ नामार्थयोः भेदान्वयबोधोपगमे राजा पुरुष इत्यत्रापि राजकीयः पुरुषेति बोधापत्तिरितिभावः निपातत्वादितीति रामः

निपातातिरिक्तनामार्थयोरेव भेदेन नान्वयनियमः कथमन्यथा घटो नास्तीत्यादौ नञर्थाभावे प्रतियोगितया घटादेरन्वयाभ्युपगम इतिभावः॥ ६॥ १०३

रा॰॥ समानवचनेनेति अभेदान्वयस्थल एव समानवचनत्वनियमादिति भावः प्रत्ययविरोधाच्चेतीति नविद्यते सुखं यस्येति बहुव्रीह्यादरणे आनंदमित्य
त्र मत्वर्थकाच् प्रत्ययश्रुतिविरोधादिति भावः वस्तुतः प्रकरणपदस्य प्रत्ययार्थकता न प्रसिद्धा अतो नञ्तत्पुरुषनिष्पन्नपदपरंपरापठितत्वमेव प्रकरणं त
द्विरोधादित्यर्थः अस्थूलमनणु अदीर्घमित्यादौ सर्वत्र नञ्तत्पुरुषदर्शनेन तत्सन्निधावेकस्य असुखमिति पदस्य बहुव्रीहिनिष्पन्नत्वे प्रकरणविरोधादित्य
र्थो ज्यायानिति प्रतिभाति मूलस्य एतेनेत्यस्यार्थमाह पूर्वोक्तेति नच पुरुषस्य सांख्यमतेपि किंतु चेतन इत्यनेन चेतनत्वांगीकाराच्चैतन्यस्य ज्ञानरूप

टि॰॥ ननु नञ्तत्पुरुषेप्यसुखपदब्रह्मपदयोरेकधर्मिबोधकत्वलक्षणं सामानाधिकरण्यमनुभवसिद्धम् अन्यथा तयोः समानवचनत्वा
नुपपत्तेरतस्तन्निर्वाहार्थं नञोऽभाववतिलक्षणा तवाप्यावश्यकीत्यत आह प्रकरणेति प्रत्ययविरोधाच्चेति आनंदशब्दस्य पुंल्लिङ्ग
त्वन्नियमेनानन्दमिति रूपस्य मत्वर्थीयाच् प्रत्ययं विनानुपपत्तेरिति भावः इति वेदान्तिमतखण्डनम् सांख्यमतं दूषयितुमुपन्यस्य

मु॰॥ प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच् प्रत्यय
विरोधाच्चेति संक्षेपः एतेन प्रकृतिः कर्त्री पुरुषस्तु॰॥

ति॰एतेनेति पूर्वोक्तयुक्त्यात्मनो ज्ञानवत्वसाधनेन वक्ष्यमाणयुक्त्या चेत्यर्थः प्रकृतिरिति मूलप्रकृतिरित्यर्थः कर्त्रीति कर्तृत्वञ्चात्र
भूतान्तःकरणप्रकृतित्वम् अनुकूलकृतिमत्वलक्षणकर्तृत्वस्य तन्मतेऽन्तःकरणधर्मत्वादिति ध्येयम्॰॥

त्वान्यात्मनो ज्ञानवत्वासाधनेन सांख्यमतन्निराकरणासंभवादिदमसंगतमिति वाच्यं चेतनत्वस्य तन्मतेपि ज्ञानरूपत्वाभ्युपगमाद्वचेतनस्य त॥
न्मतेपि ज्ञानरूपत्वाभ्युपगमादन्यथा चेतनातिरिक्तज्ञानाभ्युपगमेनस्य पंचविंशतितत्वमध्ये प्रविष्टतया तत्वाधिक्यापत्तेः मूलप्रकृतिरविकृतिर्म
हदाद्याः प्रकृतिविकृतयः सप्त षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष इति तत्सिद्धान्तादिति भावः एतेनेत्यस्यैवार्थान्तरमाह वक्ष्यमाणेति मूले
ति सर्वकारणत्यर्थः प्रकृतित्वमिति कारणत्वमित्यर्थः नन्वनुकूलकृतिमत्वमेव कर्तृत्वमिति कुतो नाभ्युपेयत इत्यत आह अनुकूलेति॰॥ ६ ॥

रा॰॥ माभवत्विनीतिपुरुषस्य घटादिकारणत्वे घटादिकार्यस्यापि नाशो न स्यात्कार्यकारणयोरभेदात्पुरुषस्य चाविकारस्य नाशरूपविकारासंभवादिति भावः इंद्रियप्रणालिकयेति इंद्रियद्वारेत्यर्थः इंद्रियमार्गेण वहिर्निर्गतायाबुद्धिर्घटादिविषयदेशंप्राप्ता नदाकारेण बुद्धेः परिणामो जायते स एव वृत्ति रूपं घटादिज्ञानमितिरीत्येंद्रियाणां द्वारतावोध्या संवंध इति स्वाकारकत्वमेव ज्ञानघटयोः संवंधः स्वाकारकेति घटादिविषयाकारकेत्यर्थः परिणामि

दि॰॥ पुष्करपलाशवदिति पद्मपत्रवदित्यर्थः यथाच पद्मपत्रमम्भसा लिप्तं न भवति तथा पुरुषः कर्तृत्वाद्याश्रयो न भवतीति भावः तथाच पुरुषः कर्तृत्वाभाववान् कारणत्वाभावादित्यनुमानमत्र प्रमाणम्बोध्यम् ननु तत्र कारणत्वसत्वाद्धेतुत्वसिद्धिरत आह कार्यकारणयोरिति नस्यादिति माभवत्वित्यर्थः तस्य पुरुषस्य नन्वेतादृश पुरुषसत्वे किम्मानमत आह॥ बुद्धिगतेति कचिन्न सिद्धस्यैव चैतन्यस्य बुद्धावारोपसम्भवादितिभावः प्रकृतेरिति मूलप्रकृतेरित्यर्थः ननु पुरुषस्य कर्तृत्वाभावे तत्र धर्माधर्मयो

मु॰॥ पुष्करपलाशवन्निर्लेपः किन्तु चेतनः कार्यकारणयोरभेदात् कार्यनाशे सति कार्यरूपतया तन्नाशोपि न स्यादित्यकारणत्वन्तस्य बुद्धिगतचैतन्याभिमानान्यथानुपपत्यातत्कल्पनम् बुद्धिश्च प्रकृतेः परिणामः सैवमहत्तत्वमन्तःकरणमपीत्युच्यते तत्सत्वाभ्यांपुरुषस्य संसारापवर्गौ॥ ९९ कृत्यत्यभावात्तदधीनसुखदुःखयोस्तत्रानुत्पत्तौ दुःख ध्वंसरूपमोक्षः पुरुषस्य न स्यादत आह तत्सत्वासत्वाभ्यामिति बुद्धिसत्वासत्वाभ्यामित्यर्थः बुद्धिसत्वे इन्द्रियप्रणालिकया तत्परिणामेनायंघट इत्यादिज्ञानेन सम्बद्ध घटादिर्विषयः स्वाकारज्ञानपरिणामि बुद्ध्यगृहीतासंसर्गकत्वसम्बन्धेन पुरुषनिष्ठः पुरुषस्वरूप तिरोधानेनपुरुषस्य संसारसम्पादकः बुद्धिनाशे तु तत्परिणामस्यायंघट इत्यादिज्ञानरूपस्याभावाद्विषयावच्छेदकाभावात्कैवल्यावस्थानं पुंसो मोक्षः दुःखसम्बंधतद्ध्वंसरूपौ संसारमोक्षौ तु न पुंसः किन्तु बुद्धेरेवेतिभावः॥ ९९ त्वंकारणात्वं अगृहीतासंसर्गकत्वमगृहीताभेदकत्वम् भेदाग्रहस्तु बुद्धिसांनिध्यरूपदोषादेवेतिवोध्यं स्वरूपतिरोधानं संवंधमात्ररहितस्वभावस्याप्रकाशः विषयावच्छेदः विषयसंवंधभानं कैवल्येति नित्यस्यापि विषयसंवंधभानं विनेत्येवार्थः बुद्धेरेवेति बुद्धावेव दुःखस्य तद्ध्वंसस्य चोत्पादादितिभावः॥

ए॰॥ साक्षात्संबद्धः स्वरूपसंबंधरूपइत्यर्थः बुद्धेः पुरुषसंबंधित्वं नत्रपुरुषसंबंधं विनानुपपन्नमित्याशंक्याह बुद्धौतित याचभेदाग्रहएवतत्रतत्सं बंधइतिभावः स्वातंत्र्येणभेदाग्रहातिरेकेणमानाभावादितिबुद्धौतद्भिन्नपुरुषसंबंधेप्रमाणाभावादित्यर्थः विषयप्रकाशार्थमितिसाक्षात्संबंधकल्प नेप्रमाणोपन्यासायतस्यसाक्षात्संबंधस्यपुरुषस्वभावनिबंधनत्वेपुरुषस्यस्वरूपप्रयुक्तत्वेसात्मकस्वरूपसंबंधस्यस्वस्वभावाधीनत्वादितिभावः

दि॰॥ ननुपुरुषेसाक्षात्सम्बन्धएवविषयस्यास्तुसएवचतस्मिन् संसारव्यवहारनियामकोस्तुकिमुक्तबुद्धिघटितपरम्परासम्बन्धेनेत्यतआ हतस्याएवेति तथाचविषयेबुद्धेरेवसम्बन्धः पुरुषसम्बन्धस्तुबुद्धिपुरुषयोरसंसर्गाग्रहात् ननुपुरुषेसाक्षात्सम्बन्धेणविषयसम्बन्धोस्तिमानाभा वात् नचविषयप्रकाशार्थसाक्षात्सम्बन्धएवस्वीकार्यः किमुक्तपरम्परयेतिवाच्यम् तस्यपुरुषस्वभावनिवन्धनत्वेपुरुषस्यनित्यत्वेनतत्स्वभा वाधीनविषयसम्बन्धस्यसर्वदासत्वाच्चोक्षाभावप्रसङ्गात् घटप्रकाशकालेपटादिरूपविषयस्वभावाधीनस्यपटादिविषयचैतन्यसम्बन्धस

मु॰॥ तस्याएवेन्द्रियप्रणालिकयापरिणतिर्ज्ञानरूपाघटादिनासम्बन्धः पुरुषेकर्तृत्वाभिमानोबुद्धौचैतन्याभिमानश्चभेदाग्रहा त् ममेदङ्कर्तव्यमितिमदंशः पुरुषोपरागोबुद्धेः स्वच्छतयातत्प्रतिविम्बादतात्त्विकोदर्पणस्येवमुखोपरागइदमितिविषयोपरागः

सर्वदासत्वात्पटादेरपिप्रकाशापत्तेरिति यद्वाबुद्धितोज्ञानस्यभेदमाह तस्याएवेति तथाचबुद्धेः परिणतिर्ज्ञानन्नतुबुद्धिरेवेतिभावः भेदाग्रहादिति बुद्धिपुरुषयोर्भेदाग्रहादित्यर्थः इदानीन्तुद्धितउपलब्धेर्भेदप्रदर्शनार्थन्तुद्धेरंशत्रयम्प्रदर्शयति ममेदमित्यादिनापुरुषोपरागः पुरुषसम्ब न्धोदर्पणस्ययथामुखसम्बन्धः प्रतिविम्बमात्रन्नतुतात्त्विकस्तथाबुद्धिपुरुषयोर्भेदाग्रहादेकत्वाभिमानः पुरुषोपरागइत्यर्थः॥ ६ ॥

उक्ताशयकल्पनागौरवमभिसंधायप्रकारांतरेणतद्ध्रुवमेवावतारयति यद्वेतिपुरुषोपरागविषयोपरागाभ्यामितिविशेषणेद्वतीयातदर्थस्यचबुद्धि ज्ञानरूपपरिणामार्थकाध्यवसायपदार्थेअन्वयः कर्तव्यघटादेरितिषष्ठ्यर्थोपितत्रैवान्वेतिव्यापारांशइतिव्यापारः कर्तव्यमित्यभिलप्यमानः अंशः संबं धोयस्यसतथेत्यर्थः तथाचममेदंकर्तव्यमितिबुद्ध्यामिलापकशब्देममेत्यनेनपुरुषसंबंधः इदमित्यनेनविषयसंबंधः कर्तव्यमितिव्यापारसंबंधोबु द्ध्यांवमिलप्यतइतिसंबंधत्रयवतीबुद्धिरितिसिद्धमितिभावः॥ ६ ॥

रा॰॥ तथा चेत्यादि चेतनोहं करोमीत्याकारेण बुद्ध्यारोपितस्य पुरुषस्य ज्ञानेन सहेदं ज्ञानमिति प्रतीयमानो तात्विकसंबंधो यस्स उपलब्धिरित्यर्थः योजन
याप्रतीयमान इत्यस्याध्याहारेण च बोध्यः ननु कृतिसामानाधिकरण्येन अदृष्टप्रतीतिः प्रात्यक्षिकी न संभवति तस्यातींद्रियत्वादत आह अदृष्टस्येति तदंशो

टि॰॥ इन्द्रियप्रणालिकया इन्द्रियद्वारा परिणतिभेदः अयं घट इत्यादि ज्ञानरूपः परिणाम एव विषयेण घटादिना बुद्धेः संबंध इत्यर्थः तस्य
पारमार्थिकत्वे निःश्वासाभिहतदर्पणस्य मलिनिमा दृष्टान्तः कर्तव्यमितीति पूर्वोक्तपुरुषोपरागविषयोपरागाभ्यां कर्तव्यस्य घटादेरवभास
स्तेन कर्तव्यमित्यध्यवसायो व्यापारांश इत्यर्थः ज्ञानेन पुरुषस्यातात्विकः सम्बन्ध इति अत्र ज्ञानेन पुरुषस्य योऽतात्विकः सम्बन्धः स उपलब्धि
रित्युच्यत इत्यन्वयः अतात्विके दृष्टान्तः दर्पणस्य मलिम्नेव मुखस्य सम्बन्ध इति तथा चेत् ज्ञानेन सह चेतनोहं करोमि जानामीत्याकारो बुद्ध्यारोपि

सु॰॥ इन्द्रियप्रणालिकया परिणतिभेदस्तात्विको निःश्वासाभिहतदर्पणस्येव मलिनिमा कर्तव्यमिति व्यापारांशः तेनांशत्रयव
ती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्विकः सम्बन्धः दर्पणस्य मलिम्नेव मुखस्योपलब्धिरुच्यते ज्ञानवत्सुखदुःखे
च्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः न च बुद्धिश्चेतना परिणामित्वात् इति मतमपास्त
म् कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेः तद्भिन्ने मानाभावाच्च॥ ११तस्य यः सम्बन्धोऽतात्विकः स उपलब्धिर्न
तु बुद्धेरेवोपलब्धिरिति भावः कृतिसामानाधिकरण्येनेति अदृष्टस्यातीन्द्रियत्वेपि धार्मिकोहं करोमीति तदंशे उपनीतभानरूपं तत्प्रत्य
क्षम् बोध्यम् परिणामित्वादिति अनित्यधर्माश्रयत्वादित्यर्थः कृत्यदृष्टभोगानामिति कृतिः स्वसमानाधिकरणमेवादृष्टं जनयति न चादृष्टं
स्वसमानाधिकरणमेव भोगं जनयतीति कृत्यदृष्टभोगानाम्परस्परसामानाधिकरण्यप्रमितिवच्चेतनोहं करोमीति सामानाधिकरण्यप्रती
तेरित्यर्थः तद्भिन्नेति कर्तृभिन्ने मानाभावा॥
११अदृष्टं च पाः अनित्यधर्मत्वादिति यद्यपि धर्मत्वांशो व्यर्थः तथापि क्षणिकविज्ञानवादिना अनित्यवि
ज्ञाने व्यभिचारोद्भावनमभिसंधाय तदुक्तं क्षणिकविज्ञानस्य वृत्तिमत्वलक्षणधर्मत्वविरहाच्च न तत्र व्यभिचार इति भावः वृत्तिमत्वं च दैशिकसंबंधेन बोध्यं
तेन कालिकेन क्षणिकविज्ञानस्य वृत्तिमत्वेपि न व्यभिचारस्तादवस्थ्यं बुद्धेस्तु प्रकृतिपरिणामत्वेन तद्वृत्तित्वान्न स्वरूपासिद्धिः॥

ए०॥ ननु तद्भिन्ने मानाभावादित्यसंगतं कर्तृभिन्नानां प्रकृत्यर्थानां सत्वादत आदिं पूरयति चेतन इत्यादिरिति बुद्धिः कर्तृत्वाभाववती जन्यत्वादिति पाठः ज
न्यधर्माश्रयत्वादिति प्रामादिकः यद्यपि नैयायिकानां प्रयोगस्तदा तन्मते कर्तृजन्यधर्माश्रयत्वाद्व्यभिचारित्वापत्तेः यदि च सांख्यमतप्रविष्टस्यैव तन्मते तस्मि
न्पुरुषस्यैव कर्तृत्वमस्तु न बुद्धेरित्यभिप्रायेणायं प्रयोग इत्युच्यते तदा स्वमतव्याघातः कर्तृत्वस्यापि जन्यधर्मतया पुरुषधर्मत्वासंभवेन कर्तृत्वस्याधर्मत्वापत्ति
श्चेति यदि च तत्पाठप्रामाण्ये प्याग्रहस्तदा जन्यधर्मः कर्तृत्वातिरिक्तत्वेन विशेषणीयस्तथा च सांख्यमतानुयायिन एव पुरुषस्यैव कर्तृत्वं चेतनत्वं चास्तीत्यभि

दि०॥ दित्यस्य चेतन इत्यादिच पूर्वोक्तदूषणसमुच्चायकः कर्तृत्वाश्रयो न चेतनः जन्यधर्माश्रयत्वात् घटवदिति बाधकसत्वाच्चेतनोहङ्क
रोमीति प्रतीतिश्चैतन्यांशे भ्रम इत्याशङ्क्य ते चेतनोहमिति कृत्यंशेपीति बुद्धिः कर्तृत्वाभाववती जन्यधर्माश्रयत्वात् इति बाधकस्य त
त्रापि सत्वादिति भावः अन्यथेति कर्तृचेतनयोर्भेदाङ्गीकार इत्यर्थः बुद्धेर्नित्यत्व इति कर्तृभिन्नस्य चेतनस्य स्वीकारे तस्मिन् सुखदुःखा

मु०॥ चेतनोहङ्करोमीति प्रतीतेः चैतन्यांशे भ्रम इति चेत् कृत्यंशेपि किं नेष्यते अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पू
र्वमसंसारापत्तिः॥ ॥भावात् संसारमोक्षयोरनुपपत्त्या पूर्वोक्तरीत्या बुद्धिसत्वासत्वाभ्यामेव संसारापवर्गौ वाच्यौ तथा च बुद्धेर्नित्यत्वे तु तत्सत्व
निबन्धनस्य संसारस्य सर्वदापत्त्या मोक्षाभाव एव स्यात् बुद्धेरनित्यत्वे तु तत्र जन्यत्वं स्वीकरणीयमजन्यस्य नाशासम्भवात् तथा च तदुत्पत्तेः
पूर्वं तत्सत्वनिबन्धनः संसारो न स्यादित्यर्थः वस्तुतस्तु तदुत्पत्तेः पूर्वं तदाश्रितादृष्टादेरभावाद्बुद्धेरनुत्पत्त्या संसारः कदापि न स्यादित्यवधेयम्

प्रायेणोपमाशंका भवति केचित्तु जन्यधर्मत्वादित्यस्य बहुव्रीहिमाश्रित्य जन्यधर्माश्रयत्वादित्यर्थं परिकल्प्य एतद्ग्रन्थस्य कर्तृत्वाभावसाधनेन तात्पर्यं अपि
तु व्यभिचारिणोक्तहेतुना चेतनत्वाभावो न साधयितुं शक्योऽन्यथा तेनैव व्यभिचारिहेतुना कर्तृत्वाभावोपि किं न सिद्ध्येदित्यापादन एव तात्पर्यमित्याहुः ननु क
र्तृनित्यत्वे निर्मोक्षप्रसंग इति मूलमसंगतं कर्तुर्नित्यत्वेपि तद्भिन्नस्य चेतनस्यात्यंतिकदुःखनिवृत्तिरूपमोक्षे बाधकाभावादित्यत आह कर्तृभिन्नस्येति तस्मि
न् चेतने सुखेति शुभाशुभकर्माकर्तरि सुखदुःखयोरसंभवादिति भावः न स्यादित्यर्थ इति न चेष्टापत्तिरिति वाच्यं पूर्वमसंसारिणोपि संसारित्वोपगमे मुक्तस्या

का॰मु॰ रा॥ संसारित्वापत्त्या मोक्षार्थं कोऽपि न प्रवर्तेतेति भावः पूर्वमसंसारे कदापि संसारो न स्यादित्यप्यापत्तिः संभवतीत्याह वस्तुतस्त्विति तदुत्पत्तेर्बुद्ध्युत्पत्तेः तदाश्रि
दि॰ए॰ तेति बुद्ध्याश्रितेत्यर्थः अदृष्टादेरित्यादिना तज्जनककर्मणः परिग्रहः अनुत्पत्त्येति कार्यमात्रे अदृष्टस्य कारणत्वादिति भावः नन्वनादेर्नाशायोगादिति मूल
१०६ मसंगतं प्रागभावस्यानादेरपि नाशदर्शनादित्यत आह अनादेरित्यस्येति प्रकृतेर्गुणैः क्रियमाणानि सर्वशः कर्माणीत्यस्योत्तरार्धे अन्वयासंभवः कर्मा

दि॥ असिद्धेरिति बुद्धौ प्रकृतिकार्यत्वाभावादिति भावः ननु कर्तृत्वेन जन्यत्वानुमितिः परिशेषात्प्रकृतिजन्यत्वविषयिणी स्यादित्यत आह कर्तु
रिति कर्तृत्वस्य जन्यत्वव्याप्यत्वेऽनुकूलतर्काभावादित्यर्थः प्रस्तुत तद्विपरीतानादित्वग्राहकसत्त्वादनादित्वमेव कर्तुरित्याह वीतरा
गेति वीतरागजन्मादर्शनादिति न्यायसूत्रं सरागजन्मदर्शनादिति तदर्थः अनादित्वमिति स्तन्यपाने बालस्य प्रवृत्तिर्नेष्टसाधनताज्ञान
मन्तरेण तच्च नानुभवस्वरूपम्बाधात् स्मरणस्य स्वसमानाधिकरणपूर्वानुभवसापेक्षतया पूर्वजन्मसत्त्वे पूर्वजन्मन्यपि प्रथमप्रवृत्त्यनु

मु॰॥ नन्वचेतनायाः प्रकृतेः कार्यत्वाद्बुद्धेरचेतनत्वम् कार्यकारणयोस्तादात्म्यादिति चेन्न असिद्धेः कर्तुर्जन्यत्वे मानाभावा
त् वीतरागजन्मादर्शनादनादित्वम् अनादेर्नाशासम्भवान्नित्यत्वम् तत्किम्प्रकृत्यादिकल्पनेन न च प्रकृतेः क्रियमाणा
नि गुणैः कर्माणि सर्वशः अहङ्कारविमूढात्मा कर्ताहमिति मन्यत इत्यनेन विरोध इति वाच्यम् प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यै
रिच्छादिभिः कर्ताहमेवेत्यस्य तदर्थत्वात्॥ ९९ रोधेन तत्पूर्वस्यैवं तत्पूर्वस्य जन्मनः सिद्धावनादित्वमात्मन इति भावः अनादेरित्य

स्याभावस्येति शेषः जन्यभावत्वेन नाशहेतुत्वादिति भावः न च प्रकृतेरिति प्रकृतिर्माया तस्या गुणैः सत्त्वरजस्तमोलक्षणैः क्रियमाणा
नि कर्माणि भवन्ति अहङ्कारोऽहं करोमीति प्रत्ययस्तेन विमूढ आत्मा अन्तःकरणं यस्य स तथाविधः पुरुषः कर्ताहमिति मन्यत इत्यर्थः के
न भगवद्वचनेनेत्यर्थः तेनात्मनः कर्तृत्वाभावप्रतिपादनादिति भावः॥ ९९ णीत्यस्य द्वितीयान्तत्वोपगमेऽपि कर्तेति कृद्योगे षष्ठ्यापत्त्या साधु
त्वानुपपत्तेर्निराकांक्षतापरिहाराय क्रियापदमध्याहरति भवन्तीति इयं चोत्तरार्धात्प्रागेवमपीत्यपिः पूर्णीपद इति भावः अहमिति प्रत्यय इत्यस्य कर्तरि बुद्धौ स एमः
ति इत्यादिस्तथा सत्येव तेन विमूढत्वोपपत्तिः आत्मेत्यस्य पुरुषार्थकत्वे भेदनियतग्रहस्य षष्ठ्यनुपपत्तिरतो व्याचष्टे अंतःकरणमिति विरोधे हेतुमाह तेनेति॥ १०६

रा०॥ स्वतंत्रकर्तृत्वंकारणांतरनिरपेक्षनिष्ठकर्तृत्वं अधिष्ठानमाधारः दैवमदृष्टं कर्तृत्वंप्रतिपाद्यकारणत्वंप्रतिपाद्येत्यर्थः क्रियानुकूलकृतिमत्वरूपस्वत
स्याधिष्ठानादौवाधात् एवंचाहमेवकर्तेत्यत्रापि अहमेवकारणमित्येवार्थः तथासत्येवसूत्रतोपपत्तिरन्यथाकारणानांवहुत्वेपिस्वस्यैवकर्तृत्वयाहमेव

दि०॥ अहमेवेति तथाचतेनस्वतन्त्रकर्तृत्वाभावएवात्मनिप्रतिपाद्यते नतुकर्तृत्वसामान्याभावःप्रकटीकृतोयमिति अधिष्ठानन्तथाकर्त्ताक
रणञ्चपृथग्विधम् विविधाश्चपृथक्चेष्टादैवञ्चैवात्रपञ्चममित्यनेनपञ्चानामपिकर्तृत्वम्प्रतिपाद्यतन्त्रैवंसतीत्यादिनापिस्वतन्त्रक
र्तृत्वस्यैवात्मनोनिषिद्धत्वादितिभावःएवम्पुरुषस्यैवकर्तृत्वमस्तुनचकारणत्वाभावेनकर्तृत्वाभावएवतत्रसाधनीयइतिवाच्यम् स्वरू
पासिद्धेः कार्यकारणयोरभेदात्कार्यनाशेकार्यरूपतयानाशेनस्यादित्यकारणत्वम्पुरुषस्येत्यपिनसत्कार्यकारणयोरभेदस्यैवासिद्धत्वाद

मु०॥ तत्रैवंसतिकर्त्तारमात्मानङ्केवलन्तुयइत्यादिवदताभगवदता------ प्रकटीकृतोयमुपरिष्टात् आशयइतिसंक्षेपः ध
र्माधर्माश्रय आत्मेत्यनुषज्यते शरीरस्यतदाश्रयत्वे देहान्तरकृतकर्मणान्देहान्तरेभोगानुपपत्तेः अध्यक्षोविशेषगुण
योगतः॥४९॥ योग्यविशेषगुणस्यज्ञानसुखादेःसम्बन्धेनात्मनःप्रत्यक्षंसम्भवतिनत्वन्यथाहञ्जानेऽहङ्करोमीत्यादि
प्रतीतेः॥४९॥ प्रवृत्त्याद्यनुमेयोयम् आत्मापरदेहादौप्रवृत्त्यादिनानुमीयते प्रवृत्तिरत्रचेष्टाज्ञानेच्छाप्रयत्नादीनान्देहे॥

त्यादिविस्तरभियानोक्तमित्यभिप्रायवानाहसंक्षेपइति इतिसांख्यमतखंडनम् तदाश्रयत्वेधर्माधर्माश्रयत्वे अन्यथाविशेषगुणसम्बं
धाहंतेइत्यादिप्रतीतेरिति इत्यादौज्ञानादिसम्बन्धेप्रकारेणैवात्मनःप्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थः॥४९॥ परकीयप्रवृत्यादेरतीन्द्रिय
त्वेनहेतुज्ञानासम्भवात् स्वरूपासिद्धेश्चाह प्रवृत्तिरत्रेतिउक्तप्रायत्वादिति शरीरस्यनचैतन्यमित्यनेनोक्तत्वा॥ ॥कृतेत्यस्यप्रमात्वापत्तिरिति॥

धेयंस्वरूपासिद्धेरिति परकीयशरीरस्यैवपक्षतयातत्रप्रवृत्तिरूपहेतोरभावादितिभावः॥४९॥ दृष्टांतासिद्धिमिति शरीरमिदंचेतनाधिष्ठितंचेष्टावत्वाद्र
थवदित्यनुमानेचेतनाधिष्ठितत्वंचेतनप्रयुक्तक्रियावत्वमेवतस्यदृष्टांतरथेसत्वेपिचेष्टारूपहेतोरभावात् शरीरक्रियायामेवचेष्टात्वांगीकारादितिभावः
॥५०॥

का॰मु॰ रा॰॥ अर्थापत्तिरपीति पीनो देवदत्तो दिवा न भुंक्ते इति ज्ञानानंतरं पीनत्वान्यथानुपपत्त्या रात्रिभोजनं कल्पयति इयमर्थापत्तिरित्यर्थः अनुपलब्धिरिति अ
दि॰रा॰ भावेन्द्रियसन्निकर्षाभावेन प्रत्यक्षासंभवात्तद्ग्रहार्थं प्रतियोग्युपलंभाभावस्य प्रमाणत्वं परिकल्प्य तज्जन्यैवाभावप्रतीतिरिति भाट्टवेदांतिनश्चेत्यर्थः संभवे
१०२ दि॰॥दित्यर्थः इच्छादीनामभावस्य कण्ठरवेणानुक्तेः प्रायः पदम् चेष्टायाः प्रवृत्तिज्ञापकत्वेनुकूलतर्कमाह चेष्टा याश्चेति चेष्टयेति परशरी
रे समवायेन चेष्टानुमितस्यावच्छेदकतया प्रयत्नस्य समवायेनाश्रय आत्मैवेति भावः दृष्टान्तासिद्धिमाशङ्क्य निराकरोति यद्यपीति तथा
पीति तथा चोत्तरसंयोगप्राप्तियोग्यक्रियावत्त्वस्यैव हेतुत्वमिति भावः आत्मनो मनोमात्रजन्यज्ञानविषयत्वे हेतुमाह रूपाद्यभावेनेति
कालखात्मदिशां सर्वगतत्वम्परममहदित्यनेनात्मनि परममहत्त्वस्योक्तेः पौनरुक्त्यमाशङ्क्याह तच्चेति पूर्वमुक्ता इति बुद्ध्यादिषट्कं संख्या

मु॰॥ भावस्योक्तप्रायत्वात् चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्मानुमीयत इति भावः तत्र दृष्टान्तमाह रथगत्येव
सारथिः यद्यपि रथकर्म चेष्टा न भवति तथापि तेन कर्मणा सारथिर्यथानुमीयते तथा चेष्टात्मकेन कर्मणा परात्मानुमी
यत इति भावः अहङ्कारस्याश्रयोयम् अहङ्कारोऽहमिति प्रत्ययः तस्याश्रयो विषय आत्मा न शरीरादिरिति मनोमात्रस्य गो
चरः ।५०। मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयः मानसप्रत्यक्षविषयश्चेत्यर्थः रूपाद्यभावेनेन्द्रियान्तराग्राह्यत्वात् विभुर्बुद्ध्या
दिगुणवान् विभुरिति विभुत्वम्परममहत्परिमाणवत्त्वम् तच्च पूर्वमुक्तमपि स्पष्टार्थमुक्तम् बुद्ध्यादिगुणवानिति बुद्धिसुखदुःखे
च्छादयश्चतुर्दशगुणाः॥ ११ दिपञ्चकम्भावनातथाधर्माधर्मौ गुणा एते आत्मनि सुश्चतुर्दश इत्यनेन साधर्म्यप्रकरणोक्ता इत्य
र्थः ।५०। इतिश्रीभारद्वाजकुलोद्भववालकृष्णभट्टतनूद्भवमहादेवभट्टकृतौ मुक्तावलीप्रकाशे द्वितीयः परिच्छेदः मूले बुद्धिस्तु द्विविधाम
ता अनुभूतिः स्मृतिश्च स्यादित्युक्तं तत्रानुभूतिः प्रत्यक्षात्मिकैवेति चार्वाकाः अनुमितिरपीति कणादसुगतौ॥ ११ तिह्यरूपे अपीति शतमस्ती
ति ज्ञानानंतरं शतं पंचाशद्वृत्तिमिति ज्ञानात्पंचाशदस्तीति संभवानुभवः इह वटे यक्षस्तिष्ठतीत्यज्ञातमूलवक्तृकवाक्याज्जायमानो अनुभव ऐतिह्यं न चायं १०७

रा०॥ आप्तोक्तत्वेन निश्चितशब्दस्यैव तत्करणत्वे तदभावादिति भावः ॥ ननु अनुभूतिश्चतुर्विधेति वाक्यमात्रेण कथं न्यूनाधिकसंख्यानिरास इत्याशंक्य स्वयं युक्तिमाह अनुमिनोमीत्यादि अभाव एवान्तर्भाव इति उपलब्ध्यभाव एवानुपलब्धिर्न तु प्रथमतः विशेषणतासंनिकर्षेणाभावज्ञानं प्रत्यक्षात्मकमेवेति भावः ॥

दि०॥ उपमितिरपीति केचिन्नैयायिकैकदेशिनः अर्थापत्तिरपीति प्राभाकराः अनुपलब्धिरपीति भाट्टा वेदान्तिनश्च संभवैतिह्यरूपेपीति पौराणिकाः तत्सर्वमयुक्तमिति सूचयितुमनुभूतेश्चातुर्विध्यमाह अनुभूतिश्चतुर्विधेति अनुमिनोमि उपमिनोमि शाब्दयामीतिप्रतीतिसिद्धानामनुमित्यादीनामनुर्वीरतया चार्वाकाद्युदितमयुक्तम् अर्थापत्तेश्चानुमितावेवान्तर्भावो व्यतिरेकिग्रंथे व्यक्तीभविष्यति अनुपलब्धेस्त्वभाव एवान्तर्भावः अन्यासाञ्च यथायथमनुमित्यादावन्तर्भावः उद्दिष्टासु प्रमासु प्रथमोपस्थितत्वात्प्रत्यक्षं लक्षयति मुक्तावल्या

मु०॥ पूर्वमुक्ताः वेदितव्याः अत्रैव प्रसङ्गात्कतिपयपस्तुहेः प्रपञ्चन्दर्शयति बुद्धिस्तु द्विविधा मता द्वैविध्यमुत्पादयति अनुभूतिः स्मृतिश्च सा द्वनुभूतिश्चतुर्विधा। ५१। प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे एतासाञ्च तत्करणाङ्कुराणि चत्वारि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रोक्तानि वेदितव्यानि इन्द्रियजन्यं ज्ञानम्प्रत्यक्षम् यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानं तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने करणत्वं तत्प्रत्यक्षमिति विवक्षितम् ईश्वरप्रत्यक्षन्तु न लक्ष्यम् ॥ ८ ॥मिन्द्रियजन्यमिति इन्द्रियजन्यत्वमिंद्रियरूपाद्यवयस्य नो ज्ञानमिति अनुमित्यादावतिव्याप्तिवारणायेन्द्रियजन्यमिति इन्द्रियजन्यत्वविशेषणे दत्तेप्यनुमित्यादावतिव्याप्तिस्तदवस्थेत्याशङ्कते यद्यपीति नन्विन्द्रियजन्यत्वाभावादीश्वरप्रत्यक्षेऽव्याप्तिरत आह ईश्वरप्रत्यक्षन्त्विति तथा च जन्यप्रत्यक्षमेव लक्ष्यमिति भावः ॥ ९ ॥ यायथमिति संभवस्यानुमितावैतिह्यस्य शब्दे अंतर्भाव आप्तोक्तत्वसंदेहाद् प्रामाण्यज्ञानास्कंदितः स इति भावः इन्द्रियरूपाद्यवपीति इदं च यथाश्रुताभिप्रायेण वस्तुतो मनोरूपेंद्रियजन्यानुमित्यादावतिव्याप्तिवारणाय इंद्रियत्वावच्छिन्नजनकतानिरूपितजन्यताविवक्षणस्यावश्यकतया ज्ञानपदं स्वरूपकीर्तनमेवेति बोध्यं अनुमित्यादावित्यादिनोपमित्यादिपरिग्रहः ॥ ६ ॥ ६ ॥ ६ ॥

का॰मु॰ रा॰॥ अर्थापत्तिरपीति पीनो देवदत्तो दिवा न भुंक्ते इति ज्ञानानंतरं पीनत्वान्यथानुपपत्त्या रात्रिभोजनं कल्पयति इयमर्थापत्तिरित्यर्थः अनुपलब्धिरिति अ
दि॰रा॰ भावे इन्द्रियसन्निकर्षाभावेन प्रत्यक्षासंभवात् तद्ग्राहार्थप्रतियोग्युपलंभाभावस्य प्रमाणत्वं परिकल्प्य तज्जन्यैवाभावप्रतीतिरिति भाट्टवेदांतिनश्चेत्यर्थः संभवे
१०७ दि॰॥ दित्यर्थः इच्छादीनामभावस्य कण्ठरवेणानुक्तेः प्रायः पदम् चेष्टायाः प्रवृत्तिज्ञापकत्वेनुकूलतर्कमाह चेष्टायाश्चेति चेष्टयेति परशरी
रे समवायेन चेष्टानुमितस्यावच्छेदकतया प्रयत्नस्य समवायेनाश्रय आत्मैवेति भावः दृष्टान्तासिद्धिमाशङ्क्य निराकरोति यद्यपीति तथा
पीति तथा चोत्तरसंयोगप्राप्तियोग्यक्रियावत्त्वस्यैव हेतुत्वमिति भावः आत्मनो मनोमात्रजन्यज्ञानविषयत्वे हेतुमाह रूपाद्यभावेनेति
कालखात्मदिशां सर्वगतत्वम्परममहदित्यनेनात्मनि परममहत्त्वस्योक्तेः पौनरुक्त्यमाशङ्क्याह तच्चेति पूर्वमुक्ताइतिबुद्ध्यादिषट्कं संख्या

मु॰॥ भावस्योक्तप्रायत्वात् चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्मानुमीयत इति भावः तत्र दृष्टान्तमाह रथगत्येव
सारथिः यद्यपि रथकर्म चेष्टा न भवति तथापि तेन कर्मणा सारथिर्यथानुमीयते तथा चेष्टात्मकेन कर्मणा परात्मानुमी
यत इति भावः अहङ्कारस्याश्रयोयम् अहङ्कारोऽहमिति प्रत्ययः तस्याश्रयो विषय आत्मा न शरीरादिरिति मनोमात्रस्य गो
चरः॥५०॥ मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयः मानसप्रत्यक्षविषयश्चेत्यर्थः रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् विभुर्बुद्ध्या
दिगुणवान् विभुरिति विभुत्वम्परममहत्परिमाणवत्त्वम् तच्च पूर्वमुक्तमपि स्पष्टार्थमुक्तम् बुद्ध्यादिगुणवानिति बुद्धिसुखदुःखे
च्छादयश्चतुर्दश गुणाः॥ ॥ दि॰ पञ्चकम्भावना तथा धर्माधर्मौ गुणा एते आत्मनि स्युश्चतुर्दश इत्यनेन साधर्म्यप्रकरणे कथिता इत्य
र्थः॥५०॥ इति श्रीभारद्वाजकुलोद्भवबालकृष्णभट्टतनूद्भवमहादेवभट्टकृतौ मुक्तावलीप्रकाशे द्वितीयः परिच्छेदः मूले बुद्धिस्तु द्विविधा म
ता अनुभूतिः स्मृतिश्च स्यादित्युक्तं तत्रानुभूतिः प्रत्यक्षात्मिकैवेति चार्वाकाः अनुमितिरपीति कणादसुगतौ॥ ॥ तिद्यरूपे अपीति शतमस्ती रामः
ति ज्ञानानंतरं शतं पंचाशद्घटितमिति ज्ञानात् पंचाशदस्तीति संभवानुभवः इह वटे यक्षस्तिष्ठतीत्यज्ञातमूलवक्तृकवाक्याज्जायमानो अनुभव ऐतिह्यं न चायं १०७

रा०॥आप्तोक्तत्वेननिश्चितशब्दस्यैवतत्करणत्वेनतद्भावादितिभावः॥ ननुअनुभूतिश्चतुर्विधेतिवाङ्मात्रेणकथंन्यूनाधिकसंख्यानिरासइत्याशंक्यस्वयंयु
क्तिमाह अनुमिनोमीत्यादि अभावस्यांतर्भावइति उपलब्ध्यभावएवानुपलब्धिर्नतुप्रथमतःविशेषणतासंनिकर्षेणाभावज्ञानंप्रत्यक्षात्मकमेवेतिभावः॥

दि०॥उपमितिरपीतिकेचिन्नैयायिकैकदेशिनः अर्थापत्तिरपीतिप्राभाकराः अनुपलब्धिरपीतिभाट्टावेदान्तिनश्चसम्भवैतिह्यरूपेपीति
पौराणिकाः तत्सर्वमयुक्तमितिसूचयितुमनुभूतेश्चातुर्विध्यमाह अनुभूतिश्चतुर्विधेति अनुमिनोमि उपमिनोमि शाब्दयामीतिप्रतीति
सिद्धानामनुमित्यादीनांचतुर्वारतयाचार्वाकाद्युदितमयुक्तम् अर्थापत्तेश्चानुमितावेवान्तर्भावोव्यतिरेकिग्रंथेव्यक्तीभविष्यति अनुपल
ब्धेस्त्वभावएवान्तर्भावः अन्यासाञ्चयथायथमनुमित्यादावन्तर्भावः उद्दिष्टासुप्रमासुप्रथमोपस्थितत्वात्प्रत्यक्षंलक्षयतिमुक्तावल्या

मु०॥पूर्वमुक्ताः वेदितव्याः अत्रैवप्रसङ्गात्कतिपयपस्तुद्देशःप्रपञ्चन्दर्शयतिबुद्धिस्तुद्विविधामतातद्वैविध्यमुत्पादयति अनुभूतिःस्मृ
तिश्चस्यादनुभूतिश्चतुर्विधा।५१॥ प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजेएतासाञ्चतत्करणाङ्करणानिचत्वारिप्रत्यक्षानुमा
नोपमानशब्दाः प्रमाणानीतिसूत्रोक्तानिवेदितव्यानिइन्द्रियजन्यज्ञानम्प्रत्यक्षम् यद्यपिमनोरूपेन्द्रियजन्यंसर्वमेवज्ञा
नन्तथापीन्द्रियत्वेनरूपेणेन्द्रियाणांयत्रज्ञानेकरणत्वन्तत्प्रत्यक्षमितिविवक्षितम् ईश्वरप्रत्यक्षन्तुनलक्ष्यम्॥ ॥मिन्द्रियजन्यमि

तिइन्द्रियजन्यत्वमिंद्रियरूपाद्यवप्यस्त्यतोज्ञानमिति अनुमित्यादावतिव्याप्तिवारणायेन्द्रियजन्यमिति इन्द्रियजन्यत्वविशेषणेदत्तेप्यनु
मित्यादावतिव्याप्तिस्तदवस्थेत्याशङ्कते यद्यपीतिनन्विन्द्रियजन्यत्वाभावादीश्वरप्रत्यक्षेऽव्याप्तिरतआह ईश्वरप्रत्यक्षन्त्विति तथाच
जन्यप्रत्यक्षमेवलक्ष्यमितिभावः॥ ॥ यथायथमितिसंभवस्यानुमितावैतिह्यस्यशब्देअंतर्भावआप्तोक्तत्वसंदेहादप्रामाण्यज्ञानास्कंदितःस
इतिभावः इन्द्रियरूपाद्यवपीति इदंचयथाश्रुताभिप्रायेणवस्तुतोमनोरूपेंद्रियजन्यानुमित्यादावतिव्याप्तिवारणायइंद्रियत्वावच्छिन्नजनकतानि
रूपितजन्यताविवक्षणस्यावश्यकतयाज्ञानपदंस्वरूपकीर्तनमेवेतिबोध्यं अनुमित्यादावित्यादिनोपमित्यादिपरिग्रहः॥ ६ ॥ ६ ॥ ६ ॥

का॰मु॰ रा॰॥ ननु सूत्रे अव्यभिचारिपदवैयर्थ्यमित्याशंक्याह भ्रमेतिनचोक्तलक्षणस्य प्रत्यक्षभ्रमे अव्याप्तिरित्यत आह एतावतेति तथा च प्रत्यक्षप्रमायाल
दि॰ए॰ क्ष्यतया भ्रमस्यालक्ष्यत्वान्न तत्राव्याप्तिरिति भावः न चैवं मूलोक्तलक्षणस्य भ्रमेतिव्याप्तिस्तस्यापि लक्ष्यत्वाभ्युपगमे च सूत्रानुसारित्वानस्यादिति
१०९ वाच्यं ज्ञानपदस्य मूलस्थलक्षणे प्रमापरत्वादत एव न तद्वैयर्थ्यमिति भावः तद्विषयकमितीति पदवाच्यत्वाविषयकमित्यर्थः नन्वयं घट इत्या।

दि॰॥ ननु तस्यैव लक्ष्यत्वे किम्मानमत आह इन्द्रियार्थेति इन्द्रियार्थसन्निकर्षोत्पन्नमित्यनेनेश्वरप्रत्यक्षमनुमित्यादि च व्यावर्त्यते भ्र
मवारणायाह अव्यभिचारीति भ्रमभिन्नमित्यर्थः एतावता प्रत्यक्षप्रमायालक्षणमुक्तम् तद्विभागमाह अव्यपदेश्यमिति निर्वि
कल्पकमित्यर्थः न चाव्यपदेश्यपदेन कथन्निर्विकल्पकलाभ इति वाच्यम् व्यपदेश्यम्पदवाच्यत्वं तत्तद्विषयकमित्यर्थाद्विशि

मु॰॥ इन्द्रियार्थसन्निकर्षोत्पन्नम्प्रत्यक्षज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकमिति सूत्रे ॥ ६ ॥

ष्टज्ञाने तत्तत्पदवाच्यत्वमुपनीतम्भासत इति प्राचीनमतानुसारित्वात् अत एव कणादं कणादनामानं मुनिमित्यादि तत्र तत्रोक्तं स
ङ्गच्छते यद्वा व्यपदेशः शब्दप्रयोगः स च विशिष्टज्ञानादेवेत्यव्यपदेश्यत्वेन व्यपदेश्यानर्हत्वेन निर्विकल्पकलाभः व्यवसाया
त्मकमिति विशिष्टव्यवसायात्मकमित्यर्थः॥ ६ ॥ ६ ॥

दि विशिष्टज्ञानस्यापि पदवाच्यत्वाविषयकत्वान्निर्विकल्पकविभाजकधर्मस्य विशिष्टज्ञानसाधारण्यादसंगतिरित्यत आह विशिष्टज्ञान इति।
तथा चायं घटपदवाच्य इत्यादिरेव विशिष्टज्ञानाकार इति भावः एतत्कल्पे व्यपदेश्यपदविषयकप्रत्ययार्थः नवीनमतमनुसृत्याह यद्वेति एत राम॰
त्कल्पे तु अर्हे एव प्रत्ययार्थ इति भावः॥ ६ ॥ ६ ॥ ६ ॥ १०८

रा०॥ अनुव्यवसायभिन्नज्ञानमात्रस्यैवव्यवसायत्वेननिर्विकल्पसाधनव्यवसायत्वमतआहविशिष्टेति इंद्रियार्थसंनिकर्षोत्पन्नंज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकमितिसूत्रयोजनमाहएवंचेतिनन्वीश्वरप्रत्यक्षंतुलक्ष्यमित्युक्त्वासूत्रेतथैवोक्तत्वादितिमूलकारोक्तिरसंगताउक्तसूत्रेईश्वरप्रत्यक्षलक्ष्यताया अनभिधानात्तदर्थमाहेश्वरेतिनतुजन्यप्रत्यक्षप्रमालक्षणस्यसूत्रकारोक्तावपिप्रत्यक्षप्रमासामान्यलक्षणंकिमितिशिष्यजिज्ञासयाप्रत्यक्षप्रमासामान्यलक्षणंवक्तव्यमेवेत्यस्वरसाल्लक्षणांतरमवतारयतिईश्वरेतिअव्याप्तिरितिनिर्विकल्पकस्यज्ञानाजन्यतयालक्ष्यस्यतत्रसत्वेनविशिष्टज्ञानलक्षणसमन्वयस्यावश्यकत्वात् अव्याप्तौहेतुमाहविशिष्टेतिजन्येत्यादिस्तेनेश्वरविशिष्टज्ञानस्यविशेषणज्ञानाजन्यत्वेपिनक्षतिरर्थकमात्रप

दि०॥ विशिष्टज्ञानात्मकमितियावत् एवंचसूत्रेइन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारि अव्यपदेश्यंव्यवसायात्मकमितियोजनाबोध्या अन्यथालक्षणवाक्येविभागबोधकपदेनव्यवधानादसङ्गतेरिति तथैवोक्तत्वादितिईश्वरप्रत्यक्षालक्ष्यत्व—स्यैवाभिप्रेतत्वादित्यर्थः

मु०॥ तथैवोक्तत्वात् अथवाज्ञानाकरणकज्ञानम्प्रत्यक्षम्॥ ६ ॥

ईश्वरप्रत्यक्षस्यापिलक्ष्यत्वमभिप्रेत्याह अथवेति ज्ञानाकरणकमिति ज्ञानाजन्यमित्युक्तौचाव्याप्तिःविशिष्टज्ञानमात्रस्यविशेषणज्ञानजन्यत्वादतो ज्ञानाकरणकमिति अनुमित्यादौव्याप्त्यादिज्ञानस्यकरणत्वमस्त्येवेतिनानुमित्यादावतिव्याप्तिः॥ ६ ॥ ॥

रा०संगतिःयन्वीश्वरज्ञानंनिर्विकल्पकमेवेतितदसत्कार्यमात्रंप्रत्यन्वयव्यतिरेकाभ्यांलोकेविशिष्टज्ञानस्येवकारणत्वावधारणाद्विशिष्टज्ञानस्यैवेश्वरेसकर्तृकत्वानुमित्यासिद्धेःयदिचकार्यसामान्येकृतेरेवकारणत्वंनंज्ञानेच्छयोःतयानयोरन्यथासिद्धत्वात्तथाचसकर्तृकत्वानुमानेनेश्वरेकृतेरेवसिद्धिर्नज्ञानेच्छयोःनचैवमीश्वरेज्ञानेच्छयोःकथंसिद्धिरितिवाच्यंयस्सर्वज्ञ इत्यादिश्रुत्याज्ञानस्यसएेक्षतबहुस्यामितिश्रुत्याइच्छायास्तत्रसिद्धेरीश्वरस्येच्छारूपत्वादितिविभाव्यनेतदायथाश्रुतमेवसाधुनचैवमपिजन्यनिर्विकल्पकस्यापीश्वरज्ञानजन्यतयातत्राव्याप्तेरनुपपत्त्याद्ग्रंथकारस्यन्यूनतादुर्वारैवेतिवाच्यंज्ञानजन्येत्यस्यसमवायसंबंधावच्छिन्नजनकतानिरूपितजन्यताशून्यार्थकत्वेनिर्विकल्पकेव्याप्तसंभवेनतदुपेक्षणसंभवादितिध्येयं॥

का॰उ॰रा॰॥ अनुमित्यादौ लक्षणसत्त्वमुपपादयति अनुमित्यादाविति ॥ इदं लक्षणमीश्वरप्रत्यक्षसाधारणमित्याह अकारणकेत्यादि करणसामान्यशून्य
दि॰रा॰ त्वादेवेत्यर्थः ननु तत्त्वज्ञानात्मकप्रत्यक्षे अव्याप्तिस्तत्र निदिध्यासनव्यापारकस्य अनुमित्यादिज्ञानस्य कारणत्वादित्याशंकते अथेति ज्ञानत्वगर्भेति
१०९ त्वघटितेत्यर्थः कारणत्वाभावस्येत्यस्य निरूपकतासंबंधेनेत्यादिः योगिप्रत्यक्षं तत्त्वज्ञानरूपं बोध्यं नन्वेवमपि विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे वि
शेषणतावच्छेदकप्रकारकज्ञानव्यापारकनिर्विकल्पककरणके अव्याप्तिरीश्वरे वेत्यस्वरसादाह अथवेति करणतानयद्गति परामर्शाभावादेव घटा

दि॰॥ अकरणकत्वादेव चेश्वरज्ञानसङ्ग्रहः अथ निदिध्यासनद्वारा मननादिज्ञानकरणके योगिप्रत्यक्षे लक्षणमिदमव्यापकमिति चे
न्न ज्ञानाकरणकपदेन ज्ञानत्वगर्भधर्मावच्छिन्नकरणकत्वाभावस्य विवक्षितत्वात् न चेदं योगिप्रत्यक्षाव्यापकम् श्रवणादिप्र
तिपत्तीनां शाब्दत्वादिनैव जनकत्वेन विशिष्टाभावसत्त्वादिति अथवा ज्ञानकरणत्वाव्यभिचारिजातिशून्यज्ञानत्वमिह विवक्षि

मु॰॥ अनुमितौ व्याप्तिज्ञानस्य॰॥ ६ ॥

तं नादृशी च जातिरनुमितित्वादिरेव एतेनानुमित्यादौ व्याप्तिज्ञानादेर्ज्ञानत्वेन करणतानपेज्ञानत्वघटितकरणतावच्छेदक
धर्माप्रसिद्धाः सम्भवोपि प्रत्युक्त इति व्याप्तिज्ञानस्येति षष्ठ्यन्तचतुष्टयस्य करणत्वादित्यनेनान्वयः न च स्मरणात्मकपरामर्श
स्थले व्याप्तिज्ञानस्य करणत्वासम्भव इति वाच्यम् तत्र व्याप्तिज्ञानस्य संस्कारद्वारा हेतुत्वात्॰॥ ‹‹ दिज्ञानादनुमितिवारणसंभवादिति

भावः एतच्च यथाश्रुताभिप्रायेणोक्तं पर्याप्तिनिवेशसूचनाये वघटितेत्युपादानादेव ज्ञानत्वघटितत्वं ज्ञानत्वविषयकप्रतीत्यविषयत्वमात्रं ननु
ज्ञानत्वभिन्नत्वमपि तत्र घटकं प्रयोजनाभावात् संभवाप ते श्चेति विभावनीयं करणत्वासंभव इति व्याप्तिज्ञानासत्त्वेपि विशिष्टविषयकसंस्काराहि
शिष्टविषयकस्मरणात्मकपरामर्शोत्पत्तेरिति भावः संस्कारद्वारेति तथा च व्याप्तिज्ञानस्य स्वजन्यपरामर्शसंबंधेन अनुमितौ कारणता परामर्शे स्वज्ञ
न्यत्वं च स्वनिष्ठसमवायस्वजन्यसंस्कारान्यतरसंबंधावच्छिन्नकारणतानिरूपितकार्यतारूपं नातः प्रात्यक्षिकपरामर्शजन्यानुमितेर्व्याप्तिज्ञानका रा॰ग॰
रणत्वमुपपादितमिति भावः ॥ ६ ॥
१०९

रा॰॥ ज्ञानपदमिति अनुमितौ व्याप्तिज्ञानंकारणमित्यत्रज्ञानपदमित्यर्थः तथाच स्मरणात्मकपरामर्शस्यापि व्याप्तिविषयकसंस्कारजन्यतायाकारण
त्वमक्षतमितिभावः एवंचकारणंव्याप्तिधीरितिकारिकायामपिधीपदंसविषयकपरमेवेतिभावः तत्रेतिस्मरणात्मकपरामर्शइत्यर्थः यद्यपिसमान
विषयकनिश्चयस्य संस्कारद्वाराकैश्चिदनुभवत्वेन कैश्चिज्ज्ञानत्वेनस्मरणजनकत्वंक्लृप्तमेवेतिनैनदनुरोधेनतत्कल्पनोपमित्यसंगतमेवतत्तथापिहे
तुत्वकल्पनेनेत्यस्यनादृशहेतुत्वघटितलक्षणकल्पनेनेत्यर्थकतया अन्यतरसंबंधेनव्याप्तिज्ञानजन्यत्वस्यलक्षणघटकत्वमपेक्ष्यसमवायेनव्या
प्तिविषयकजन्यत्वस्यलक्षणघटकत्वेलाघवान्नासंगतिः अतिप्रसक्तत्वादिति अथव्याप्तिविषयकत्वेनकारणतापक्षेव्याप्तिविषयकेच्छादावपिका

दि॰॥ नचज्ञानपदस्यसविषयकपरत्वमेवास्ताम् किंव्याप्तिज्ञानस्य संस्कारद्वारा तत्रहेतुत्वकल्पनेनेतिवाच्यम् इच्छादितः संस्कारा

मु॰॥ उपमितौसादृश्यज्ञानस्यशाब्दबोधेपदज्ञानस्यस्मृतावनुभवस्यकरणत्वात्तत्रनातिव्याप्तिः॥ ६॥

च्चानुमितेरनुदयात्सविषयकत्वस्यातिप्रसक्तत्वात् सादृश्यज्ञानस्यसादृश्यप्रकारकज्ञानस्यतत्र अनुमितौ॥ ६॥ ॥

रणत्वमस्त्येवेतिकथमतिप्रसक्तता अन्यथाअनुमित्यनुपधायकव्याप्तिज्ञानेपिव्याप्तिज्ञानत्वसत्वेनअतिप्रसक्ततया तदपिकारणतावच्छेदकंन
स्यात् यदिच अनुमित्यनुपधायकेपिव्याप्तिज्ञानेस्वरूपयोग्यतारूपकारणत्वस्वीकारान्नातिप्रसक्तिरित्युच्यतेतदाप्रकृतेपीदमेवोत्तरमितिमै
वंकतिपयव्याप्तिज्ञानेषुकारणत्वकल्पनापेक्षया अनंतेच्छादिषुतत्कल्पनगौरवस्यैवतन्मतेदूषणत्वेनप्रकृतग्रंथाभिप्रेतत्वात्तदेवैतत्सूचनायै
वेच्छातइत्यपेक्ष्य इच्छादितः संस्कारेत्युक्त्येतावत्पर्यंतमभिहितमित्यवधेयं उपमितौसादृश्यज्ञानंकरणमित्यत्रगवयादिविशेष्यकसादृश्यप्रका
रकज्ञानस्यव्यापारताभ्रमंनिराकर्तुमाचष्टेसादृश्यप्रकारकेति॰॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥

रा॰॥ नचैवं यद्व्यापारद्वारे लभ्यं अतिदेशवाक्यार्थस्मृतेर्व्यापारत्वेन वक्ष्यमाणत्वात् तथा चेति व्याप्तिविशिष्टं व्याप्तिप्रकारकं पक्षविशेष्यकं पक्षधर्मताज्ञानं हेतुतावच्छेदकसंसर्गावगाहिज्ञानमित्यर्थः परामर्शजन्यसंस्कारे अतिव्याप्तिवारणाय ज्ञानपदोपादानं नन्वनुव्याप्तिविशिष्टपक्षधर्मताज्ञानमिति व्युत्पत्त्या वह्निव्याप्यविशेष्यकपर्वतादिवृत्तित्वप्रकारकज्ञानजन्यत्वं ततो लभ्यते तथा च वह्निव्याप्यधूमवानिति परामर्शजन्यानुमितावव्याप्तिरित्याशंकापामाह भवति हीति वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानं भवतीत्यन्वयः उक्तरीत्या व्याप्तिप्रकारकपक्षविशेष्यकहेतुतावच्छेदकसंबंधावगाहिज्ञानस्यैव तादृशज्ञानलभ्यत्वादितिभावः नचैवमपि वह्निव्याप्यो धूमः पर्वत इति ज्ञानजन्यानुमितावतिव्याप्तिर्धूमो वह्निव्याप्यो धूमवान् पर्वत इति

दि॰॥ अनुमितिं लक्षयति परामर्शेति परामर्शत्वञ्च व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वम् तथा च व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानमनुमितिरिति फलितम् भवति हि वह्निव्याप्यधूमवान्पर्वत इति ज्ञानम्व्याप्तिविशिष्टपक्षधर्मताज्ञानम् तज्जन्यम्पर्वतो वह्निमानिति ज्ञानमिति तत्र लक्षणसमन्वयः यद्यपीत्यादि प्रत्यक्षादिकमित्यादिना विशेषणतावच्छेदकप्रकारकनिश्चयविधया परामर्शजन्यस्य

मु॰॥ इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् परामर्शजन्यज्ञानमनुमितिः यद्यपि परामर्शप्रत्यक्षादिकम्परामर्शजन्यन्तथापि परामर्शजन्यं हेत्व विषयकज्ञानमनुमितिः नच कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम् ॥

विशिष्टवैशिष्ट्यबोधस्य परिग्रहः परामर्शजन्यमिति विषयविधया तत्र परामर्शस्य हेतुत्वादितिभावः कादाचित्केति धूमवान्पर्वतो वह्निमानित्यनुमितौ पक्षतावच्छेदकविधया धूमस्य भानादितिभावः॥ ((परामर्शानात्मकज्ञानजन्यप्रत्यक्षादावतिव्याप्तिर्वह्निव्याप्यधूमवानिति परामर्शस्यापि कालविधया घटादिप्रत्यक्षहेतुतया तत्रातिव्याप्तिश्चेति वाच्यम् एतद्वारणाय च हेतुतावच्छेदकसंबंधावच्छिन्नव्याप्त्यवच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यताया एव लक्षणे निवेशनीयत्वादितिभावः अनुमितिसमानविशेष्यकतया पक्षविशेष्यकपरामर्शस्यैवानुमितिहेतुत्वादितिभावः यद्यपीत्यादीति ननु प्रत्यक्षे विषयस्य सामान्यतो विषयत्वेन विशेषतश्च तत्तद्व्यक्तित्वेनैव हेतुतया लक्षणे चोक्तनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यताया एव विवक्षणीयतया नो कातिव्याप्तिरित्यत आह आदिनेत्यादि तथा चैतदस्वरसेनैव मूले आदिपदमुपात्तं ॥ ६ ॥

रा०॥ विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकविशेषणनिश्चयत्वेनैव हेतुतया भवति तत्रातिव्याप्तिरिति भावः धूमवान्पर्वत इत्यादि आलोकादिलिंगकधूमवत्पर्वतपक्षकानुमित्यादावित्यर्थः ॥ सत्तामादायेति पर्वतो वह्निमानित्यनुमितिवृत्तिसत्ताजातिमत्त्वस्य प्रत्यक्षादावपि सत्त्वादिति भावः ननु अनुभवत्वव्याप्यमेवेति न मादायैव अतिव्याप्तितादवस्थ्यमित्यत आह अनुभवत्वेति अत्र च धूमवान्पर्वतो वह्निमानित्यनुमितावव्याप्तिवारणायैव जातिघटितलक्षणादरणमिति बोध्यं लाघवादिति व्याप्तिज्ञाननिष्ठस्वजन्यज्ञानसंबंधावच्छिन्नजनकताकत्वं व्याप्तिज्ञानकरणकत्वं न तु व्याप्तिज्ञानजन्यज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यत्वं व्याप्तिज्ञानकरणत्वं तेन कालोपाधिविधया व्याप्तिज्ञानजन्यत्वमादाय तथैवंप

दि०॥ तादृशेति कथितनिश्चयजन्यहेतुविषयकेत्यर्थः सत्तामादायातिव्याप्तिरतोऽनुभवत्वव्याप्येति अनुभवत्वन्यूनवृत्तित्वन्तदर्थः तेनानुभवत्वजातिमादाय प्रत्यक्षादावतिव्याप्तिः जातिमत्त्वञ्च समवायेन विवक्षितम् तेन कालिकसम्बन्धेन जातिमति कालेनातिव्याप्तिः प

मु०॥ तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः ॥

क्षधर्मतायाः अप्रवेशेन लाघवाल्लक्षणान्तरमाह अथवेति अत्रापि साध्यतावच्छेदकधर्मसाध्यतावच्छेदकसम्बन्धहेतुतावच्छेदकधर्महेतुतावच्छेदकसम्बन्धानामननुगमादेकव्याप्त्युपादानेऽन्यानुमितावव्याप्तेरेकां व्याप्तिमुपादाय तज्ज्ञानकरणकवृत्त्यनुभवत्वव्याप्यजातिमत्त्वं विवक्षणीयम् ॥

रामर्शजन्यत्वमादाय च घटादिप्रत्यक्षेनातिव्याप्तिः अत्रापि लिंगाविषयकत्वनिवेशनमावश्यकं अन्यथा वह्निव्याप्यधूमवत्पर्वतवान्देश इति विशिष्टवैशिष्ट्यावगाहिज्ञाने अतिव्याप्तिप्रसंगात् लिंगाविषयकत्वं व्याप्यत्वावच्छिन्नप्रकारताशून्यत्वमेव तेन धूमत्वादिना धूलीपटलादिविषयकविशेष्यावगाहिप्रत्यक्षेनातिव्याप्तितादवस्थ्यं न चैवमव्याप्तिर्लिंगेन घटाद्यवगाहिविशिष्टवैशिष्ट्यप्रत्यक्षवारणासंभव इति वाच्यं हेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपिताधिकरणत्वावच्छिन्नप्रकारतानिरूपिताधेयत्वावच्छिन्नप्रकारतेत्यादिक्रमेणाधेयत्वावच्छिन्नप्रकारतापर्यन्तमुपादाय तन्निरूपितसाधनतावच्छेदकावच्छिन्नप्रकारिताशून्यत्वस्य निवेशनीयत्वादिति भावः तज्ज्ञानकरणकत्वेनेति तद्व्याप्तिज्ञानकरणकज्ञानवृत्तीत्य

रा॰॥कारणत्वमितिपरामर्शरूपकारणांतराभावादेवयत्किंचिज्ज्ञानात्केवलमनसोवानुमितिवारणासंभवादितिभावः अत्रचज्ञानत्वेनकारणताप
क्षेअनंतज्ञानव्यक्तीनांकारणत्वकल्पनापत्तिरपिचज्ञानस्यसमवायेनकारणत्वेपिक्षत्यभावात्परामर्शस्यापिज्ञानत्वाद्गुरुभूतस्वजन्यज्ञानस्यसंबंधे
नतस्यतथात्वेमानाभावाच्चेतिमनस्त्वेनवेत्युक्तंनतुपरामर्शातिदेशवाक्यार्थस्मरणद्वारानुमित्युपमित्योरेकमनःकरणकत्वेइंद्रियत्वव्याप्तिज्ञानत्वादि
नाप्रमाणविभागोनस्यात् नचप्रत्यक्षकरणत्वानुमितिकरणत्वादिनाएकस्यापिमनसोविभागसंभवः परस्परासंकीर्णव्याप्यधर्मकथनंविभागइत्यत्रपरस्प

दि॰॥नन्वस्त्वनुमितिस्थलेप्यपिनव्याप्तिज्ञानत्वेनकरणत्वङ्किंतुज्ञानत्वेनमनस्त्वेनैववाएवमेवोपमित्यादावपिमनस्त्वेनैवकरणत्वम् नचका
र्यवैजात्यन्नस्यादितिवाच्यम् सामग्रीवैलक्षण्यादेवतदुपपत्तेः नचप्रमाणविभागानुपपत्तिःक्रियाविशेषात्तदुपपत्तेरतःपूर्वोक्तानुमित्यादिलक्ष
णानामसम्भवइत्यतआह वस्तुतइतिघटेऽतिव्याप्तिवारणायवृत्त्यन्तम् वृत्तित्वंसमवायेनविवक्षितम् तेनानुमितौकालिकेनघटत्वस्यवृत्तित्वेपि

मु॰॥एवंसादृश्यज्ञानकरणकज्ज्ञानमुपमितिः पदज्ञानकरणकज्ज्ञानंशाब्दबोधः वस्तुतोयाङ्काङ्क्षिरनुमितिव्यक्तिमादायतद्व्यक्ति
वृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम् एवंयत्किञ्चित्प्रत्यक्षादिकमादायतद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वम्प्रत्यक्षत्वा
दिकम्वाच्यमिति॥ ॥नातिव्याप्तिज्ञानत्वानुभवत्वादिकमादायप्रत्यक्षादावतिव्याप्तिवारणायविशेष्यदलम् ननुमनसःकरणतापक्षेज्ञानाकरण
कत्वम्प्रत्यक्षलक्षणमनुमित्यादावतिव्याप्तमतःप्रत्यक्षस्यलक्षणान्तरमाहएवमिति॥ ॥रासंकीर्णत्वस्यस्वावच्छिन्नविषयिताव्यापकविषयितावच्छेद
कत्वरूपत्वादन्यथाव्यभिचाराभिन्नविरोधाप्रसिद्ध्याहेत्वाभासविभागानुपपत्तेरितिवाच्यंमनस्त्वेनैवोभयत्रकरणत्वेअनुमितित्वोपमितित्वयोरेवनियाम
काभावेनकथंचिदपिविभागासंभवादित्याशंकातेनचेतिक्रियाविशेषादितिक्रियाधात्वर्थोनतुकर्मतथाचप्रत्यक्षादिप्रमारूपधात्वर्थवैजात्योपप्रमाभे
देनैवप्रमाणानांविभागसंभवादितिभावः मनसइत्यस्यानुमित्यादावित्यादिः अतिव्याप्तमितिनित्यप्रत्यक्षेअव्याप्तिभियाइंद्रियजन्यत्वस्यप्रत्यक्षलक्षणता रामः
संभवादितिभावःप्रत्यक्षत्वमितिउपमित्यादेस्सर्वेवा[illegible]प्रत्यक्षलक्षणघटकत्वेनोक्तिः॥ ६ ॥ १११

रा०॥ आदिपदग्राह्यमुपमितित्वं शाब्दत्वं च निर्वक्ति यत्किंचिदिति शब्दभेदेनेति प्रत्यक्षलक्षणे अनुमित्यसमवेतेनेति तदितरलक्षणेषु प्रत्यक्षासमवेतेनेति शब्दविशेषणेोत्यर्थः प्रथमतो मूले अनुमितिलक्षणस्यैव जातिघटितस्योक्तत्वात्प्रत्यक्षादीनामित्युपेक्ष्य अनुमित्यादीनामित्युक्तं अनुभवत्वजात्यंगीकारेणेति विशेषणज्ञानादिजन्यतावच्छेदककोटौ स्मृत्यन्यत्वनिवेशे गौरवापत्त्यात्तज्जन्यतावच्छेदककोटिप्रविष्टतयैवानुभवत्वजातिसिद्धेरिति भावः एवं च सर्वलक्षणेषु स्मृत्यसमवेतेत्युक्तौ अनुभवत्वमादाय अनुमित्यादावतिव्याप्त्यापत्त्या एकत्रानुमित्यसमवेतत्वस्या

दि०॥ प्रत्यक्षत्वादिकमिति यत्किञ्चिदुपमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वमुपमितित्वम् यत्किञ्चिच्छाब्दबोधव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वं शाब्दबोधत्वमिति वाच्यमित्यर्थः शब्दभेदेनानुमित्यादीनां लक्षणकथनमनुभवत्वजात्यङ्गीकारेण तदनङ्गीकारे तद्व्यक्तिसमवेतस्मरणासमवेतधर्मसमवायित्वरूपस्य लक्षणचतुष्टयस्यैकशब्देन वक्तुंश

मु०॥ जन्यप्रत्यक्षं विभजते घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधम्मतम्।५१॥ घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रम्मानसमिति षड्विधम्प्रत्यक्षम् न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वं जन्यप्रत्यक्षत्वस्यैव निरूपणीयत्वात् उक्तसूत्रानुसारात्।५१।५२॥ घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः गोचर इति ग्राह्य इत्यर्थः गन्धत्वादिरित्यादिपदात्सुरभित्वादिपरिग्रहः गन्धस्य प्रत्यक्षत्वात्॥१ क्यत्वादिति ध्येयम् उक्तसूत्रेति इन्द्रियार्थसन्निकर्षोत्पन्नमित्याद्युपदर्शितसूत्रानुसारादित्यर्थः॥५१॥५२॥ घ्राणस्य निर्विषयकत्वादाह ग्राह्य इति सुरभित्वादीत्यादिना सुरभित्वपरिग्रहः॥ १अन्यत्र प्रत्यक्षासमवेतत्वस्यैव निवेशनीयतया शब्दभेदेन लक्षणाभिधानमावश्यकमेवेति वोध्यं तद्व्यक्तिसमवेतेति एकशेषेण प्रत्यक्षादिव्यक्तिसमवेतेत्यर्थः ज्ञानत्वादिकमादाय अन्यत्रातिव्याप्तिवारणाय अत्र स्मरणासमवेतेत्युक्तं सूत्रानुसारादिति सूत्रानुसारेण प्रत्यक्षसामान्यस्य लक्षणप्रदर्शनपक्षे जन्यप्रत्यक्षस्यैकत्वेन न तद्विभागासंभवाज्जन्यप्रत्यक्षस्यैव विभाग इति भावः।५१।५२। ननु गोचरपदस्य विषयार्थकतया घ्राणस्य गोचरो गंध इत्यसंगतमित्याशंकां निराकरोति घ्राणस्येति ग्राह्य इ

का॰मु॰रा॰॥ चरपदस्यजन्यज्ञानविषयार्थकतयानासंगतिरितिभावः॥ १॥ ५३॥ नतत्प्रत्यक्षमित्यस्यनोष्माद्रिप्रत्यक्षमितिनार्थः रूपेउद्भूतत्वप्रवेशेनत

दि॰रा॰ दि॰॥ नहृत्तीतिगन्धवृत्तीत्यर्थः॥ ५३॥ उद्भूतेति उद्भूतपदस्यकृत्यमाह ग्रीष्मेतिऊष्माद्रावित्यादिनाचूर्णप्रविष्टतेजः परिग्रहः नतत्प्र

११२ त्यक्षम् नोष्माद्रिगतरूपम्प्रत्यक्षं॥ ५४॥ न्यूनतांम्परिहर्तुमाहपृथक्त्वादिकमपीति आलोकसंयोगइतितस्यकारणत्वमन्धकारे

सु॰॥ नहृत्तिजातिरपिप्रत्यक्षागन्धाश्रयग्रहणेतुघ्राणस्यासामर्थ्यमितिबोध्यम् नथारसोरसज्ञायास्तथाशब्दो

पिचक्षुते॥ ५३॥ रसत्वादिसहितइत्यर्थः तथाशब्दोपिशब्दत्वादिसहितः गन्धोरसश्चोद्भूतोबोध्यः॥ ५३॥ उद्भूत

रूपन्नयनस्यगोचरोद्रव्याणितद्वन्तिपृथक्त्वसंख्येविभागसंयोगपरापरत्वस्नेहोद्रवत्वम्परिमाणयुक्तम्॥ ५४॥

क्रियाजातियोग्यवृत्तिः समवायश्चतादृशः ग्रीष्मोष्मादावनुद्भूतरूपमितिनतत्प्रत्यक्षम् तद्वन्तिउद्भूतरूपवन्ति॥

५४॥ योग्येतिपृथक्त्वादिकमपियोग्यव्यक्तिवृत्तिबोध्यम् तादृशः योग्यव्यक्तिवृत्तिः चक्षुर्योग्यत्वमेवकथन्तदाह

गृह्णातिचक्षुः सम्बन्धादालोकोद्भूतरूपयोः॥ ५५॥ आलोकसंयोगउद्भूतरूपञ्चचाक्षुषप्रत्यक्षेकारणम् त

त्रद्रव्यचाक्षुषम्प्रतितयोः समवायसम्बंधेनकारणत्वन्द्रव्यसमवेतरूपादिप्रत्यक्षेस्वाश्रयसमवायसम्ब

न्धेनद्रव्यसवेतसमवेतस्परूपत्वादेः प्रत्यक्षेस्वाश्रयसमवेतसमवायसम्बंधेनेति॥ ५५॥ उद्भूतस्पर्शवद्रव्य

ङ्गोचरः सोपिचत्वचः उद्भूतस्पर्शवद्रव्यन्त्व चोगोचरः सोपिउद्भूतस्पर्शोपिस्पर्शत्वादिसहितः॥ ६ ॥

चाक्षुषापत्तिवारणायोद्भूतरूपन्तुपिशाचादीनाम्प्रत्यक्षवारणायेत्यवधेयम् तयोः उद्भूतरूपालोकसंयोगयोः॥ ५५॥ ६॥

प्रत्यक्षवारणासंभवान् द्रव्याणितद्वृत्तीत्यनेनैवतत्प्रत्यक्षस्यवारणीयत्वादत्तोव्याचष्टेनोष्मादिगतेति॥ ५४॥ ५५॥ ६॥ ६॥ ६॥ रामः ११२

रा॰॥ रूपत्वादिभिन्नमितीति इदमंशपूरणं नतु विवरणं तथात्वे रूपादिभिन्नमित्येव ब्रूयादिति बोध्यं ननु रूपमत्रापिकारणमित्यत्रैव श्लोकसमाप्तेर्द्र व्याध्यक्ष इतिद्वितीयकारिकास्थमेकंपदं किमित्यत्रैवोपात्तमित्याशंकां निरस्यति द्रव्याध्यक्ष इतीति पुनः शंकत इति मूले लाघवादित्यस्य आत्मावृत्ति

दि॰॥ रूपभिन्नस्य रूपत्वादेस्त्वगिन्द्रियेणाग्रहणादाह रूपत्वादिभिन्नमिति आदिना नीलत्वादिपरिग्रहः द्रव्याध्यक्ष इति पूर्वान्वयी न तूत्तरा न्वयीति बोधयितुं रूपमत्रापिकारणं द्रव्याध्यक्ष इत्यन्तप्रतीकधारणम् शङ्कते बहिरिन्द्रियेति ननु कार्याभावे कारणाभावस्य प्रयो जकतया गगनादौ बहिरिन्द्रियजन्यप्रत्यक्षाभावे रूपाभावस्पर्शाभावयोः प्रयोजकत्वकल्पने गौरवात्तादृशप्रत्यक्षे रूपत्वेन हेतुता

मु॰॥ रूपान्यच्चक्षुषोयोग्यम् रूपभिन्नं रूपत्वादिभिन्नं यच्चक्षुषो योग्यं तत्त्वगिन्द्रियस्यापि ग्राह्यम् तथा च पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रियाजाति योग्यवृत्तयः त्वचोग्राह्या इत्यर्थः रूपमत्रापिकारणम् ५६॥ द्रव्याध्यक्षे अत्रापि त्व गिन्द्रियजन्येपि द्रव्यप्रत्यक्षे रूपङ्कारणम् तथा च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपङ्कारणमिति नवीनास्तु बहिरिन्द्रियजन्य द्रव्यप्रत्यक्षमात्रे न रूपङ्कारणम्प्रमाणाभावात् किन्तु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणमन्वयव्यतिरेकात् ब हिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किङ्कारणमिति चेन्न किञ्चिदात्मावृत्ति शब्दभिन्नविशेषगुणत्वं वा प्रयोजकमस्तु रूपेस्य कारणत्वे लाघवमिति चेन्न वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात् इष्टापत्तिरिति चेत्त् उद्भूतस्पर्श एव लाघवात्कारणमस्तु प्र भाया अप्रत्यक्षत्वे त्विष्टापत्तिरेव किन्नस्यात्॥ ॥ ङ्कल्पयित्वा तद्वच्छिन्नाभावत्वेनैव तादृशप्रत्यक्षाभावे प्रयोजकत्वमुचितमित्य त आह आत्मावृत्तीति आत्मनो बहिरिन्द्रियजन्यप्रत्यक्षवारणायात्मावृत्तीति आकाशस्य बहिरिन्द्रियजन्यप्रत्यक्षवारणाय शब्द भिन्नेति कालादौ तद्वारणाय विशेषेति शङ्कते रूपस्येति पुनः शङ्कते इष्टेति प्रतिबन्ध्योत्तरयति उद्भूतेति॰॥ ६ ॥

शब्दभिन्नविशेषगुणापेक्षयेत्यादिः रूपापेक्षयास्पर्शस्य लाघवाभावात् तथा च उद्भूतरूपत्वेन उद्भूतस्पर्शत्वेन वा कारणमित्यत्र विनिगमनाविर हः वायोरिव प्रभायाः प्रत्यक्षाभावे इष्टापत्तिसंभवादित्यत्रैव तद्ग्रन्थतात्पर्यमिति बोध्यं॥ ६॥

रा॰॥ एतदेवस्पष्टयति प्रतिबंध्येतिसमानंविरोध्युत्तरं प्रतिबंधी ॐ उपसंहरतीतिगुरुभूतस्यापिआत्मावृत्तिविशेषेत्यादिना पूर्वमुक्तस्यकारणत्वमेवव्यवस्थापयतीत्यर्थः अनुद्भिन्नइतिचतुरणुकादिवायोरपिस्पर्शान्यत्वाद्द्रव्यसमवेतत्वाच्चतत्रचकारणीभूतत्वक्संयुक्तस्पार्शनवत्समवायाभावात्त्र्यणुकस्यस्पार्शनविषयत्वादितिभावः ननुवायुगतसंख्यादिप्रत्यक्षापत्तिदोषेणैववायुप्रभयोरितिग्रंथस्यावतारितत्वेनतत्रप्रभागतसंख्याप्रत्यक्षेदृष्टापत्तिरयुक्तेत्यत आहदृष्टांतार्थमितिवाधकाभावइति अत्रचयद्यपिवायोःस्पार्शनोपगमेनस्यापिस्पर्शान्यद्रव्यसमवेतत्वेनतत्प्रत्यक्षेकारणीभूतस्यत्वक्संयुक्तस्पार्शनवत्समवेतत्वस्यविरहएववाधकोभवतिपरमाणुस्तुमहत्वाभावादेवनस्पार्शनयोग्यःनचवायुचतुरणुकस्यनेष्यतएवस्पार्शनमपितुपंचा

दि॰॥ उपसंहरतितस्मादितिनतुत्रुटेःस्पार्शनानंगीकारात्तत्स्पार्शनवारणायस्पर्शान्यद्रव्यसमवेतस्पार्शनंप्रतित्वक्संयुक्तस्पार्शनवद्द्रव्यसमवायत्वेनहेतुत्वस्यवाच्यतयावायोःस्पार्शनांगीकारोनोचितः अन्यथावायुगतसंख्यापरिमाणयोस्त्वचाग्रहणप्रसंगादित्यत

मु॰॥ तस्मात्प्रभांपश्यामीतिवत् वायुंस्पृशामीतिप्रत्ययसंभवात् वायोरपिप्रत्यक्षत्वंसंभवत्येवबहिर्द्रव्यप्रत्यक्षमात्रेनरूपस्यनवास्पर्शस्यहेतुत्वम् वायुप्रभयोरेकत्वङ्गृह्यतएवक्वचिद्द्वित्वादिकमपिक्वचित्संख्यापरिमाणाद्यग्रहोदोषादित्याहुः

आहवायुप्रभयोरितिप्रभोपादानन्दृष्टान्तार्थम् गृह्यतएवेतितथाचवायुगतसंख्यादिग्रहेदृष्टापत्त्यावायोःस्पार्शनांगीकारेवाधकाभावइति क्वचिदितिसजातीयसंवलनाभावइत्यर्थः आदिपदात्परिमाणपरिग्रहः तद्ग्रहस्यभूयोवयवावच्छेदेनत्वगिन्द्रियसन्निकर्षस्थले बोध्यः॥

णुकादीनामेवेतिवाच्यंचतुरणुकस्यस्पार्शनाविषयत्वेपंचाणुकेपिकारणासंपत्तेरिदमसंगतमित्याक्षिप्यतथापिवायोःस्पार्शनमंगीकुर्वता नवीनेनद्रव्यसमवेतेत्यत्रद्रव्येत्रुटिभिन्नत्वस्यप्रकृष्टमहत्वस्यवाविशेषणतामंगीकृत्यैववायुस्पार्शनस्योपपादनीयत्वान्नासंगतिः ग्रंथकारेणचप्राचीनसम्मतकार्यकारणभावएवप्रदर्शितस्तेनवायोःस्पार्शनानंगीकारेणद्रव्येतद्विशेषणस्यानर्थकत्वादितिकेचनसमादधिरेतन्नमनोरमं वायुस्पार्शनानंगीकर्त्रापिपार्थिवचतुरणुकादिस्पार्शनोपपत्तयेद्रव्येतद्विशेषणस्योपादेयत्वात् वस्तुतःस्पार्शनवत्वंचनलौकिकविषयतयास्पार्शनविशिष्टत्वंतथारामः सत्यवयवस्पार्शनानुत्तरावयविस्पार्शनानुपपत्ते [illegible] सिद्धंतस्यस्पार्शनानुपपत्तेरतः॥ ६॥

रा॰॥स्पार्शनयोग्यत्वमेवनह्याच्यंतद्योग्यताचप्राचांमहत्वेसति उद्भूतरूपस्पर्शवत्वंनवीनानांउद्भूतस्पर्शहितंमहत्वमतोनानुपपत्तिः इत्थंचपूर्वोक्तवायु स्पार्शनानौचित्ये अन्यथेत्यादिनोक्तस्यवासंख्यापरिमाणप्रत्यक्षापादनस्यैववीजतावोध्यातद्ग्रहश्चेतिपरिमाणग्रहश्चेत्यर्थः मूर्तप्रत्यक्षइतिइंद्रियत्वसा तिगुरुतयाचर्हिरिंद्रियजन्यत्वपरित्यागःकृतः उक्तलाघवेतिमूर्तप्रत्यक्षाभावेरूपस्पर्शयोरभावद्वयस्यप्रयोजकताकल्पनमपेक्ष्यएकस्यरूपाभावस्य नथात्वेलाघवमित्यनेनोक्तलाघवेत्यर्थः नन्वेकस्पर्शाभावस्यतथात्वेपिलाघवानपायात्स्पर्शस्यैवकारणतालाघवात्सिद्ध्यतामित्यत आहयच्चोक्त

दि॰॥ननुसजातीयसंवलनदशायामूर्योऽवयवावच्छेदेनत्वगिन्द्रियसन्निकर्षाभावेचकथन्नवायुगतद्वित्वपरिमाणयोर्ग्रहइत्यत आहक्व चित्संख्यापरिमाणयोर्निर्दोषादितिसजातीयसंवलनादिरूपदोषादित्यर्थः आहुरित्यनेनास्वरसस्तद्बीजन्तुवायोःप्रत्यक्षतासन्देहेनलाघ वान्मूर्तप्रत्यक्षत्वावच्छिन्नंप्रतिरूपत्वेनैवकारणमुचितम् नचवायुगतप्रत्यक्षतासंन्देहाधीनव्यभिचारसन्देहस्यप्रतिवन्धकस्यसत्वात्कथ

मु॰॥त्वचोयोगोमनसाज्ञानकारणम् त्वङ्मनःसंयोगोज्ञानसामान्येकारणमित्यर्थः॥

ङ्कारणताग्रहइतिवाच्यम् लाघवतर्काभावविशिष्टस्यैवव्यभिचारसंदेहस्यप्रतिवंधकतयाप्रकृतेपूर्वोक्तलाघवतर्कस्यसत्वेनतदभा वविशिष्टव्यभिचारसन्देहाभावस्यसत्वात् यच्चोक्तम्प्रभायाअप्रत्यक्षेत्विष्टापत्तिरित्येवकिन्नस्यादितितदपिनउपरिदेशेविहङ्गमइत्य त्रप्रभामण्डलस्यैवोपरिदेशतयातत्प्रत्यक्षंविनोपरिदेशेविहङ्गमइतिप्रत्यक्षानुपपत्तेरित्यादिकमिति।पृ॰ ज्ञानसामान्येजन्यज्ञानसामान्ये

मिति उपरिदेशेविहंगमइतीति॥ एतच्चप्रात्यक्षिकप्रतीत्यभिप्रायेणशाब्दवोधेप्रथमांतपदोपस्थाप्यस्यैवमुख्यविशेष्यतयाभाननियमेन उपरिदेशस्या प्रत्यक्षत्वेपिविहंगमांशेविशेषणतयोपनयसंनिकर्षेणभानसंभवादनुपपत्त्यभावात्तथाचोपरिदेशविशेष्यकविहंगमप्रकारकप्रत्यक्षस्यैवानेनशब्दे नाभिलापादुपनीतविशेषणतयैवभासतइतिनियमादुपरिदेशस्याप्रत्यक्षत्वेतस्यप्रत्यक्षेमुख्यविशेष्यतयाभानानुपपत्तिःवायोरप्रत्यक्षत्वेतुनकाचिद नुपपत्तिरस्त्वितिभावः॥पृ॰॥ ननुज्ञानसामान्येत्वङ्मनोयोगस्यकारणत्वंमूलोक्तमसंगतंनित्यज्ञानेतस्याकारणत्वादतोव्याचष्टे जन्यज्ञानेति॥

रा॰॥ प्रमाणमितीति इदमुपलक्षणं तत्रेत्यस्याप्यनुषंगो बोध्यः आम्रस्य को रस इति प्रश्नोत्तरभूते मधुर इत्यादौ किंशब्दं विहाय प्रश्नस्यस्यस र्वस्यैव अनुषंगदर्शनादन्यथा प्रश्नवाक्यतो रसत्वावान्तरधर्मप्रकारकआम्रविशेष्यकज्ञानेच्छाया लाभेनोत्तरतो मधुरत्वप्रकारकाम्ररसविशेष्यकबोधानुत्पत्तौ तस्योत्तरत्वानुपपत्तेरिति ध्येयं त्वगादेरिति पुरीततित्वगिंद्रियाभावेन तत्रस्थितमनस्त्वक्संयोगासंभवादिति भावः ननु ज्ञानादेरभावादेव न मानसमिति मुले केयमित्याकांक्षाया अनिवृत्तेराह अत्रेति नन्वेवमभावादित्यत्रापि ताहशाकांक्षायास्तनात्तदनिवृत्तिताद्वस्थ्यमत आह अभावादित्यत्रा

दि॰॥ ज्ञानाजननमिति प्रमाणमित्यनुषज्यते चक्षुरादीत्यादिना त्वगादेः परिग्रहः तदभावादेव चक्षुरादिनामनोयोगाभावादेव ज्ञानादेरभावादेव न मानसमिति अत्र ज्ञानादेर्न मानसमित्यन्वयः अभावादित्यत्रापि ज्ञानादेरित्यस्यान्वयो बोध्यः न प्रत्यक्षमिति योग्यगुणासंबंधे

मु॰॥ किन्तत्र प्रमाणं सुषुप्तिकाले त्वचन्मनः पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति ननु सुषुप्तिकाले किंज्ज्ञानं न भविष्यति अनुभवरूपं स्मरणरूपं वा नाद्यः अनुभवसामग्र्यभावात् तथाहि प्रत्यक्षे चक्षुरादिना सह मनः संयोगस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम् ज्ञानादेरभावादेव न मानसम्प्रत्यक्षं ज्ञानाद्यभावे च आत्मनोपि न प्रत्यक्षमिति व्याप्तिज्ञानाभावादेव नानुमितिः सादृश्यज्ञानाभावान्नोपमितिः पदज्ञानाभावान्न शाब्दबोधः इत्यनुभवसामग्र्यभावान्नानुभवः उद्बोधकाभावाच्च न स्मरणम्॥ 1नैवात्मनो मानसप्रत्यक्षस्वीकाराद्योग्यविशेषगुणप्रत्यक्षसामग्र्यन्तर्गतस्य ज्ञानादेरभावादेवनात्मप्रत्यक्षमित्यर्थः उद्बोधकाभावादिति उद्बोधकस्य फलवत्त्वकल्प्यत्वादिति भावः॥ 1पीति यद्यपि न मानसमित्यस्य मानससामान्याभाव एवार्थः संभवति मनोयोग्यस्यात्मनः सत्वेपि योग्यगुणसंबंधाभावादेव तत्प्रत्यक्षस्याप्यसंभवात्तथाप्यत्रैव मानससामान्याभावोक्तौ उत्तरग्रंथानुन्थितेस्तथानोक्तमिति ध्येयं योग्यगुणेति मनोग्रहणयोग्येत्यर्थः धर्मो धर्माश्रयो ध्यसोदिशेषगुणयोगत इति कारिकायामेवोक्तत्वादिति भावः ननु ज्ञानमात्रस्य प्राथमिके दृष्टसाधनतास्मरणे जीवनादृष्टस्याप्युद्बोधकस्य कल्पनादत्रापि संबंधिज्ञानानुरूपोद्बोधकासंभवेप्यदृष्टविशेषस्योद्बोधकत्वसंभवादुद्बोधकाभावादिति मूलमसंगतमत आह उद्बोधकस्येति तथाच स्मरणस्य प्रमाणसिद्धत्वे तदनुरोधेन कस्यचिदुद्बोधः॥ १ ॥ १॥ ११४

रा॰॥ कल्पनीयः नचान्तस्मरण— मनुभवसिद्धमितिभावः नन्तु प्रथमोपस्थितज्ञानमुपेक्ष्येच्छादिव्यक्तेरितिमूलाभिधानमसंगतमित्यत आह इच्छायाइत्यादि ज्ञानमात्रमिति यद्यपिसुषुप्तिप्राक्काले कदाचिदिच्छादेरपिसंभवेनतदनुक्त्यामूलस्यन्यूनतापत्त्यामात्रपदमसंगतंकिंतुनन्तुरुष बहुव्रीहिभ्यांज्ञानादिविवक्षितमित्येववक्तुमुचितंतथापिस्वप्नावस्थानंतरमेवसुषुप्तिरितिनियमेनस्वप्नदशायांचमिथ्यामनःसंयोगरूपदोषवशाद्भ्रमात्मकज्ञानमेवोत्पद्यतेनत्विच्छादिकमन्यथास्वप्नदशायांचिकीर्षावलात्प्रवृत्तेरप्यापत्त्यागत्यादेरप्यापत्तेरितिसिद्धांतमनुसृत्यैवमभिहितमिंतिमंतव्यंवस्तुतोज्ञानादिव्यक्तेरित्युक्तौकेषांचिज्ज्ञानानांसिध्यांतेप्यतींद्रियतयावक्ष्यमाणस्यतस्यातींद्रियत्वइत्यादिदूषणस्यासंगत्यापत्त्यामूलक्ते

दि॰॥ इच्छादिव्यक्तेरिति इच्छाया आदिरिति व्युत्पत्त्याज्ञानमात्रंविवक्षितम् तदतीन्द्रियत्वेज्ञानातीन्द्रियत्वेननुसुषुप्तिप्राक्कालीनज्ञा

मु॰॥ मैवम् सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बंधेनात्मनश्चप्रत्यक्षत्वप्रसङ्गात् तदतीन्द्रियत्वेमानाभावात्सुषुप्तिप्राक्कालेनिर्विकल्पकमेवनियमेनजायते इत्यत्रापिप्रमाणाभावात् अथज्ञानमात्रेत्वङ्मनःसंयोगस्यहेतुत्वात्तदाराधनचास्सुषादिप्रत्यक्षकालेत्वाचप्रत्यक्षसंस्यात्विषयत्वक्संयोगस्यत्वङ्मनःसंयोगस्यचसत्वात्॥ ९॥

स्यनिर्विकल्पकरूपत्वात्तदतीन्द्रियत्वमुभयवादिसिद्धमेवेत्यत आह सुषुप्तिप्राक्कालेइतित्वङ्मनःसंयोगस्यचेतितदस्वीकारे चासुषमपि

नाज्ज्ञानमुपेक्षितमेनदूषणस्यसविकल्पकज्ञानोपगमेपिसुगमतयातदुपेक्ष्यनिर्विकल्पकमेवजायतइत्याशंक्याग्रेमूलेनिराकरिष्यते अतएवस्वप्नावस्थायांप्रलापादेरप्यनुभवसिद्धतयातदानीमिच्छादेःप्रामाणिकत्वेपिनासंगतिरितियुक्तमुत्पश्यामः नन्तुसुषुप्तिप्राक्कालोत्पन्नज्ञानव्यक्तीनामतींद्रियत्वेमानाभावइतिमूलोक्तमसंगतंतदानींनिर्विकल्पस्यैवोत्पत्त्यातदतींद्रियत्वस्यसर्ववादिसिद्धत्वादित्याशंक्योत्तरग्रंथमवतारयतिनन्वित्यादितदतींद्रियत्वंनिर्विकल्पकातींद्रियत्वंमूलेविषयत्वक्संयोगस्येत्यस्यभुज्यमानद्रव्यवाय्वादिनात्वक्संयोगस्येत्यर्थः तदस्वीकारइतित्वङ्मनस्संयोगस्वीकारइत्यर्थःनस्यादितीति ज्ञानसामान्येत्वयातस्यहेतुत्वस्वीकारादितिभावः॥

रा॰॥ स्वहस्तितत्वादिति स्वीकृतत्वादित्यर्थः इष्टापत्त्यादिनेति स्पार्शनं चाक्षुषादिकालेऽपि भवत्येवेतीष्टापत्तेरित्यर्थः आदिना चाक्षुषादिकं कदापि नोत्पद्य
तएवेत्यपलापपरिग्रहो वोध्यः ननु पुरीतति मनःप्रवेशस्य सुषुप्तिपदार्थतया त्वङ्मनःसंयोगस्य ज्ञानकारणत्वेऽपि न तदनुपपत्त्यभावात्सुषुप्त्यनुरोधे
नेत्यसंगतमत आह सुषुप्ताविति न संभवतीति चर्ममनःसंयोगस्य चाक्षुषादिकाले सत्वेऽपि तत्रास्थितेन त्वगिंद्रियेण मनःसंयोगाभावादिति भावः न

दि॰॥ ननु चाक्षुषादिसामग्र्याः स्पार्शनप्रतिवन्धकत्वादेव न स्पार्शनं तत्रेत्यत आह परस्परेति अनुभवानुरोधादिति अनुभवसत्त्वेऽपि स्व
हस्तितत्वादन्यथाइष्टापत्त्यादिनात्वदुक्तापत्तेरसङ्गतत्वापातादिति भावः मिश्रमतमाह अन्ये त्वित्यादिना सुषुप्त्यनुरोधेन सुषुप्तौ
ज्ञानानुत्पादानुरोधेन इत्यन्वः चाक्षुषादिकाले पूर्वोक्तस्पार्शनापत्तिर्न संभवतीत्याह चाक्षुषादीति अत्र नव्याः सुषुप्त्यव्यवहितप्राक्काले ज्ञा

मु॰॥ परस्परप्रतिबन्धादेकमपि वा न स्यादिति अत्र केचित् पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादि
सामग्र्याः स्पार्शनादिप्रतिवन्धकत्वमनुभवानुरोधात्कल्प्यत इति अन्ये तु सुषुप्त्यनुरोधेन चर्ममनःसंयोगस्य ज्ञान
हेतुत्वङ्कल्प्यते चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्नत्वाच प्रत्यक्षमिति॥ ॥नोत्पत्तिर्यदि स्यात्तदा तत्प्रत्यक्षा

पत्तिभियात्वङ्मनःसंयोगस्य चर्ममनःसंयोगस्य वा हेतुत्वं सैव तु न युक्तिसिद्धा तथाहि सुषुप्त्यनुकूलमनःक्रियया मनस आत्मनो वि
भागस्ततआत्ममनःसंयोगनाशस्ततः पुरीतति रूपोत्तरदेशेन मनःसंयोगरूपा सुषुप्तिरुत्पद्यते एवञ्च सुषुप्त्यव्यवहितपूर्व
क्षणे आत्ममनःसंयोगरूपासमवायिकारणनाशात्तत्क्षणे ज्ञानोत्पत्तेरभावात् असमवायिकारणस्य कार्यसहभावेन हेतुत्वात्॥

त्यमतमुपन्यस्यति अत्र नव्याइतितत्क्षणे सुषुप्त्यव्यवहितप्राक्क्षणे अभावादिति ननु कारणस्य कार्योत्पादपूर्वक्षण एव सत्त्वमपेक्षितं न तु का
र्योत्पत्तिकालेऽपि तथा च ज्ञानोत्पत्तिपूर्वक्षणे विभागकालेऽपि आत्ममनःसंयोगोऽस्त्येव ज्ञानोत्पत्तिकाल एव पूर्वोत्पन्नविभागेन तस्य नाशात् तः सुषु
प्त्यव्यवहितपूर्वक्षणेऽपि ज्ञानोत्पत्तौ न वाधकमत आह असमवायिकारणस्येति कार्यसहभावेनेति कार्यकालवृत्तित्ववैशिष्ट्येनेत्यर्थः॥ ६॥

रा॰॥ यदि चेति असमवायिकारणनाशस्य द्रव्यरूपकार्यनाशं प्रत्येव हेतुता न तु गुणादिरूपकार्यनाशं प्रत्यपीति द्रव्यं प्रत्येवासमवायिकारण
स्य कार्यकालवृत्तित्वेन कारणता न तु गुणादिकं प्रत्यपीति भावः तत्प्रत्यक्षवारणात् सुषुप्त्यव्यवहितपूर्वक्षणोत्पन्नज्ञानप्रत्यक्षवारणात् पुरीतद
वच्छेदेनात्ममनःसंयोगे वैजात्यानंगीकारादिति भावः वैजात्येनेति यद्यप्यात्ममनःसंयोगस्य कारणताकॢप्तैव वैजात्यस्य तदवच्छेदकत्वमेव क
ल्पनीयं त्वङ्मनःसंयोगस्य तु कारणतैव न कॢप्तेति वैषम्याच्च विनिगमनाविरहावकाशस्तथापि वैजात्यस्य कॢप्तस्य कल्पनीयतया कॢप्तत्वङ्मन

दि॰॥ यदि च कार्यनाशजनकनाशप्रतियोगिन एवासमवायिकारणस्य कार्यसहभावेन हेतुत्वमिति मन्यते तथापि न
सुषुप्त्यव्यवहितप्राक्कालोत्पन्नज्ञानव्यक्तेः सुषुप्तिकाले प्रत्यक्षापत्तिभियात्वङ्मनःसंयोगादेर्हेतुत्वमिति विजा
तीयात्ममनःसंयोगस्य हेतुत्वेनैव तत्प्रत्यक्षवारणात् तच्च वैजात्यम्पुरात्ममनःसंयोगपुरीतत्यवच्छिन्नात्ममनःसं
योगव्यावृत्तमेषितव्यमिति भावः न च वैजात्येनात्ममनःसंयोगस्य त्वङ्मनःसंयोगस्य वा हेतुत्वमित्यत्र विनिग
मकाभावः त्वङ्मनःसंयोगादेरवच्छेदकतासम्बन्धेन हेतुत्वापेक्षयासमवायेनात्ममनःसंयोगस्य हेतुत्वे लाघ-
वात् त्वङ्मनःसंयोगस्य हेतुत्वे चासुषादिसामग्र्याः स्पार्शनप्रतिबन्धकत्वकल्पनागौरवाच्च॰ ॥ ६ ॥ ६ ॥

संयोगे कारणतैव कल्प्यते कल्पनीयस्योभयत्र तुल्यत्वादिति भावः त्वङ्मनसंयोगादेरित्यादिना चर्ममनस्संयोगपरिग्रहः अवच्छेदकेनेति समवा
येन तयोरात्मन्यसत्वादिति भावः लाघवादिति अवच्छेदकतायास्तत्तदवच्छेदकस्वरूपायाः कारणतावच्छेदकसंबंधत्वेनानाव्यक्तिषु संबंधत्वं
कल्पने गौरवं एकस्य समवायस्य तथात्वे लाघवादित्यर्थः त्वङ्मनस्संयोगस्य कारणतापक्षे गौरवांतरमप्याह चासुषादिति॥ एतेनेत्यादि व
क्ष्यमाणदूषणेनेति तदर्थः एवं चेत्तत्र सुषुप्तित्वाभावाच्चेति चकारः प्रामादिक एवेति बोध्यं न च विजातीयात्ममनःसंयोगस्य समवायेन कार
वक्ष्यमाणोपायेनेति तदर्थः इति पाठः॥टी॰॥१ ॥ णत्वे लाघवस्यापि च॥ ६॥

रा॰॥ कारेणसमुच्चयसंभवाच्चकारस्यप्रामादिकत्वकल्पनमसंगतमितिवाच्यंपुरीततिक्रिययासुषुप्तिस्थलेपूर्वतनात्ममनस्संयोगात्नयायात्सुषु
प्तावपिज्ञानोत्पादापत्यानद्वारणायपुरीततिमनस्संयोगस्यज्ञानंप्रतिप्रतिबंधकताकल्पनस्यावश्यकत्वेवैजात्यंकल्पयित्वाविजातीयात्ममनः
संयोगत्वेनकारणतायामेवमानाभात् यदिचतत्संयोगव्यक्तावपिवैजात्यंनांगीक्रियतइत्युच्यतेतदाजाग्रदवस्थायामपितदात्ममनःसंयोग
व्यक्तितोज्ञानानुत्पादप्रसंगइत्यवधेयं अथपुरुषांतरीयात्मनापुरुषांतरीयमनस्संयोगात् ज्ञानोत्पत्तिवारणायपुरुषांतरीयात्ममनःसंयोगव्या
वृत्तंवैजात्यंकल्पयित्वाविजातीयात्ममनःसंयोगत्वेनज्ञानहेतुता आवश्यकीतच्चवैजात्यंसुषुप्तिकालीनात्ममनःसंयोगव्यावृत्तमपीतिकल्प
नयोपपत्तौत्वङ्मनःसंयोगादेःकारणत्वांतरकल्पनमयुक्तमितिचेदनधिगतभावोसिपूर्वोक्तसुषुप्तिदशायांपूर्वज्ञानोत्पत्त्युपरोधेनक्ऌप्तवैजा

दि॰॥ एतेनयत्रमनःक्रिययानपुरीततिसंयोगरूपासुषुप्तिःकिंतुपुरीततिक्रिययैवात्मसंयुक्तेनमनसापुरी
ततिसंयोगरूपासुषुप्तिः तत्रपूर्वोक्तापत्तिवारणायत्वङ्मनःसंयोगादेर्हेतुत्वमित्यपास्तम् पुरीततिक्रिया
जन्यमनःपुरीततिसंयोगस्यसुषुप्तित्वाभावाच्च तदानीम्मनसःसर्वावयवावच्छेदेनपुरीततिसंयोगा
भावेनपुरीततिवहिर्देशावच्छिन्नात्ममनःसंयोगस्यसत्वात् ज्ञानाद्युत्पत्तौबाधकाभावात् अतएवपरा
त्वचन्यत्कामनःपुरीततिमनुविशतीतिग्रन्थकाराणांलेखःसङ्गच्छतइतिवदन्ति॥ ९ ॥

त्यात्ममनःसंयोगस्यसत्वेनविजातीयात्ममनःसंयोगकारणतायावारयितुमशक्यतयासुषुप्तेरेवज्ञानप्रतिबंधकत्वस्यावश्यकत्वेवैजात्यस
तच्छिन्नसुषुप्तिकालीनात्ममनःसंयोगव्यावृत्तत्वकल्पनेपिवीजाभावात् तादृशसुषुप्त्यंगीकारपक्षेज्ञानसामान्येत्वङ्मनःसंयोगस्यकारणत्वम
प्यप्रामाणिकमेवतथाविधसुषुप्तिसमयेमनसोनिश्चलत्वेनपूर्वतनत्वक्संयोगस्यापिसत्वेनतत्कारणतयापिज्ञानवारणासंभवेनअगत्यापुरी
ततिमनःसंयोगस्यज्ञानमात्रप्रतिबंधकत्वमेवकल्पनीयमित्थंचत्वङ्मनःसंयोगचर्ममनःसंयोगयोःकारणतयापितदानीं ज्ञानवारणासंभ
वेनादिपदेनपुरीततिमनःसंयोगस्यैवज्ञानकारणतायांग्रंथकारेणतात्पर्यस्यचित्तमितिविभावनीयंनव्यमतएवग्रंथकाराणामपिनिर्भरो

रा०॥लौकिकचाक्षुषादेरपिमनोजन्यतयामनोग्राह्यत्वस्यघटादावतिव्याप्तिमाशंक्याहमनोमात्रेतिमनोलौकिकसन्निकर्षजन्यत्वविवक्षायांमात्रप
दंविनाप्युपपत्तिरितिध्येयं।५८ननुविशिष्टबुद्धौविशेषणज्ञानस्यहेतुत्वेमानाभावःचक्षुःसंयोगद्वितीयक्षणएवघटइतिविशिष्टप्रत्यक्षोपगमेक्षति
विरहात् नहितृतीयक्षणएवतादृशप्रत्यक्षमितिलोकानामनुभवःक्षणस्यातिसूक्ष्मत्वेनक्षणविलंबस्यदुरवधारणत्वात् रक्तोदंडइतिनिर्णयंविना

दि०॥मनोग्राह्यत्वस्यसार्वत्रिकत्वादाहमनोजन्येतिमनोमात्रजन्येत्यर्थःन्यूनताम्परिहरतिएवमिति।५७।निर्विकल्पकेप्रमाणन्दर्शय
तिचक्षुःसंयोगादीतिविशेषणज्ञानस्यकारणत्वादितिकदाचिद्घटइत्याकारकंस्वरूपतोघटत्वप्रकारकंकदाचिज्जातिमानितिजाति

मु०॥मनोग्राह्यंसुखंदुःखमिच्छाद्वेषोमतिःकृतिः।५८मनोजन्यप्रत्यक्षविषयमित्यर्थःमतिर्ज्ञानम् कृतिर्यत्नःएवंसुखत्व
दुःखत्वादिकमपिमनोग्राह्यम् एवमात्मापिमनोग्राह्यःकिन्तुमनोमात्रस्यगोचरइत्यनेनपूर्वमुक्तत्वादत्रनोक्तः॥
५८ज्ञानंयन्निर्विकल्पाख्यन्तदतीन्द्रियमिष्यते चक्षुःसंयोगाद्यनन्तरङ्घटइत्याकारकंघटत्वादिविशिष्टज्ञानन्न
सम्भवतिपूर्वंविशेषणस्यघटत्वादेर्ज्ञानाभावात् विशिष्टबुद्धौविशेषणज्ञानस्यकारणत्वात्॥ ६ ॥ ६ ॥

त्वेनघटत्वादिप्रकारकज्ञानञ्जायतेइत्यनुभवसाक्षिकत्तन्निर्वाहायघटत्वांशेऽन्याप्रकारकघटत्वप्रकारकबुद्धौतादृशघटत्व
ज्ञानत्वेन घटत्वांशेजातित्वप्रकारकघटत्वविशिष्टबुद्धौचतादृशघटत्वज्ञानत्वेनहेतुत्वस्यावश्यकत्वादितिभावः॥ ६ ॥

रक्तदंडवानितिनिर्णयानुरोधेनअन्वयव्यतिरेकाभ्यांभवतुविशिष्टवैशिष्ट्यप्रत्यक्षेविशेषणतावच्छेदकप्रकारकनिश्चयस्यकारणत्वंनिर्विकल्पकस्यअ
तीन्द्रियत्वेनविशेषणज्ञानेहेतुतायामन्वयव्यतिरेकप्रत्यक्षासंभवात्तोविशेषणज्ञानहेतुत्वेयुक्तिमाहकदाचिदित्यादितन्निर्वाहायतादृशानु
भवनिर्वाहायअन्यथाजातिमानितिघटत्वप्रकारकबोधोत्पादकायामपिघटइत्याकारकप्रत्यक्षापत्तेरितिभावःघटइतिप्रत्यक्षकालेजातिमानि
तिप्रत्यक्षापत्तिस्तुनसंभवति विशेषणतावच्छेदकप्रकारकज्ञानरूपकारणविरहादित्यवधेयंज्ञानत्वेनेति॥ ६ ॥ ६ ॥ ६ ॥ ॥

रा०॥ अथ विशिष्टवैशिष्ट्यावगाहितया जातिमानिति बुद्धेस्तत्र जातित्वप्रकारकघटत्वविशेष्यकनिश्चयत्वेनैव हेतुतया ज्ञानत्वेनेत्यसंगतमिति चेन्न विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या जायमानस्य जातिमानिति ज्ञानस्य विशिष्टवैशिष्ट्यानवगाहित्वात् न च प्रकारांशे किंचित्प्रकारकत्वादिति रिक्तस्य विशिष्टवैशिष्ट्यावगाहित्वस्य दुर्वचतया नत्रापि वैशिष्ट्यावगाह्येवेति वाच्यं विशेषणावच्छिन्नप्रतियोगिकत्वेन संसर्गावगाहिज्ञानस्य विशिष्टवैशिष्ट्यावगाहित्वात् विशेषणावच्छिन्नप्रकारताशालित्वमेव तत् विशेष्ये विशेषणमिति रीत्या उत्पन्नज्ञाने तु प्रकारप्रकारेणावच्छेदकतारव्याविलक्षणतानानत्तस्य तथात्वापत्तिरित्यपि केचित् इत्थमेव च दंडो रक्तो न वेति संशयानन्तरमौचित्या ज्ज्ञानो रक्तदंडवान्न वेति संदेहोऽप्युपपादनीयः इदं पुनरिहावधेयं विशे

टि०॥ वैशिष्ट्यानवगाह्येवेति वैशिष्ट्यनिष्ठसांसर्गिकविषयताशून्यमेवेत्यर्थः वैशिष्ट्यसांसर्गिकविषयतानिरासेनैव घटघटत्वयोर्विशेष्यताप्रकारताशून्यत्वं लब्धं तयोर्वैशिष्ट्यसांसर्गिकविषयतानियतत्वात् नचैवन्निर्विकल्पकस्य निर्विषयत्वापत्तिस्तुरीयविषयतायाएव तत्र स्वीकारात् एतेन निर्विकल्पकस्य घटत्वावगाहित्ववद्वैशिष्ट्यावगाहित्वमपि दुर्वारम् घटेन्द्रियसन्निकर्षकाले इन्द्रिय

मु०॥ तथा च प्रथमतः घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानञ्जायते ॥ ❀ ॥

सम्बद्धविशेषणतायास्तद्वैशिष्ट्ये सत्वादिति वैशिष्ट्यानवगाहित्वोक्तिरसङ्गतेत्यपास्तम् वैशिष्ट्यानवगाह्येवेत्येवकारेण कल्पनीयविशेषणज्ञानस्य वैशिष्ट्यावगाहित्वे तस्यापि विशिष्टबुद्धितया विशेषणज्ञानान्तरसापेक्षतास्यादेवं तस्यापि वैशिष्ट्यावगाहित्वमित्यनवस्थाभिया प्राथमिकविशेषणज्ञानं वैशिष्ट्यानवगाह्येव स्वीकार्यमिति सूचितम्॥ ((ष्ये विशेषणमिति न्यायेन जायमाने जातिमानिति ज्ञाने न जातित्वप्रकारकघटत्वज्ञानत्वेन हेतुताविशकलितजातित्वघटत्वज्ञानादपि तादृशबुध्युत्पादादिति विशिष्टवैशिष्ट्यावगाहिबुद्धिपरमेवेदमेवं च ज्ञानपदं निश्चयार्थकतयाव्याख्येयमिति ननु निर्विकल्पकस्य वैशिष्ट्यानवगाहित्वमसिद्धं विशेषणतासन्निकर्षेण घटघटत्वयोरिव तत्समवायस्यापि निर्विकल्पके भानसंभवादत आह वैशिष्ट्यनिष्ठेति एवं प्रकारताशून्यत्वं विशेष्यताशून्यत्वं च लक्षणं संभवतीति सूचयन्नाह वैशिष्ट्येत्यादिनिर्विषयत्वापत्तिरिति त्रिविधविषयतानामप्यसत्वादिति भावः तुरीयविषयताया एवेति प्रकारतादित्रितयभिन्नविषयताया इत्यर्थः॥ ६ ॥

रा·॥प्रत्येकमेवेतिएकत्रलक्षणेइतरविषयतावत्त्वशून्यत्वनिवेशप्रयोजनाभावादितिभावःसमूहालंबनेतिविशेष्येविशेषणमितिन्यायेनानुव्यवसा
योपगमेरक्तत्वघटयोःपूर्वमुपस्थित्यातादृशानुव्यवसायसंभवाद्विशिष्टवैशिष्ट्यावगाहित्वेनतुपूर्वंरक्तोघटइतिज्ञानविरहान्नतादृशानुव्यवसायइतिभावः
पद्यपिघटत्वप्रकारकशाब्दबोधोत्तरोत्पन्ननिर्विकल्पकस्यतादृशानुव्यवसायःसंभवत्येवतथापिपूर्वंघटत्वज्ञानसत्त्वेविशिष्टप्रत्यक्षस्यसामग्रीस

दि·॥तदेवतादृशविषयतात्रयशून्यमेवनिर्विकल्पकन्निर्विकल्पकस्वरूपंलक्षणन्तुप्रकारताशून्यत्वादिकम्प्रत्येकमेवेतिध्येयम्नि
र्विकल्पकंमूलोक्तमतीन्द्रियत्वंसाधयतितथाहीत्यादिनाज्ञानस्यप्रत्यक्षंवैशिष्ट्यानवगाहिनभवतीत्यन्वयःइतिप्रत्ययादितिघ
टाद्यवगाहित्वेनैवज्ञानप्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थःतत्रघटमहञ्जानामीतिप्रत्ययेघटत्वादिविशिष्टघटादिवैशिष्ट्यभान

मु·॥तदेवनिर्विकल्पकन्तच्चनप्रत्यक्षम् तथाहिवैशिष्ट्यानवगाहिज्ञानस्यप्रत्यक्षन्नभवतिघटमहञ्जानामीतिप्रत्ययात्त
त्रात्मनिज्ञानम्प्रकारीभूयभासतेज्ञानेघटस्तत्रघटत्वम्प्रकारोयःसएवविशेषणमित्युच्यतेविशेषणेयद्विशेषणन्त
द्विशेषणतावच्छेदकमित्युच्यतेविशेषणतावच्छेदकप्रकारकज्ञानंविशिष्टवैशिष्ट्यज्ञानेकारणन्निर्विकल्पकेचघटत्वा
दिकन्नप्रकारस्तेनघटत्वादिविशिष्टघटादिवैशिष्ट्यभानंज्ञानेनसम्भवतिघटत्वाद्यप्रकारकञ्चघटादिविशिष्टज्ञानन्नस
म्भवतिजात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्यकिञ्चिद्धर्मप्रकारकत्वनियमात्॥‘‘ज्ञानेनसंभवतीतिनचविशेष्येविशे

षणमितिरीत्यैवनिर्विकल्पकानुव्यवसायोऽस्त्वितिवाच्यम् रक्तःपटोघटोद्रव्यमितिसमूहालंबनानन्तरंरक्तङ्घटञ्जानामीतिप्रतीत्या
पत्त्याविशिष्टवैशिष्ट्यविषयताशून्यज्ञानानुव्यवसायानभ्युपगमादिति॥ ‘‘त्वाच्चक्षुःसंयोगानंतरंविशिष्टप्रत्यक्षमेवस्वीक्रियतेनतुनिर्वि

कल्पकमतएवस्थिरचक्षुःसंयोगस्थलेघटविशिष्टप्रत्यक्षधारैवोपपद्यतेनतुनिर्विकल्पकान्तरितप्रत्यक्षधारेतिमंतव्याअथैवमपिनिर्विकल्पक
स्यघटत्वरूपविषयोपरागेणप्रत्यक्षंदुर्वारमेवस्वीयजानीतरस्यैवस्वरूपतःप्रकारत्वानभ्युप·॥ ६॥ ६॥ ६॥ ६॥ ६.॥ ६॥

का॰मु॰ रा॰॥ गमेन तस्य ज्ञाने विषयिता स्वरूपत एव प्रकारत्वसंभवादिति भैवं जातेस्समवायेनैव स्वरूपतः प्रकारत्वाभ्युपगमादन्यथा कालो घटो ज्ञानं

दि॰रा॰ घट इत्यादिप्रत्ययापत्तेः तादृशप्रतीतेरनुभवविरुद्धत्वादिति ध्येयं ॥ षड्विध इत्युक्तमिति तथा च षड्विध इत्यस्य षड्विधसाधारणप्रत्यक्षत्वावच्छि

११९ न्न इत्येवार्थो न तु श्रावणत्वाद्यवच्छिन्न इति तदर्थ इति भावः आत्मादाविति अत्रादिपदेन चर्ममनस्संयोगस्य ज्ञानकारणत्वपक्षे तत्संग्रहः ——

दि॰॥ महत्त्वं षड्विध इति यद्यपि श्रावणादौ महत्त्व—स्य हेतुत्वे प्रयोजनाभावः तथापि द्रव्यसमवेतप्रत्यक्षत्वादेस्तज्जन्यतावच्छेद कस्य श्रावणादिसाधारण्यात् श्रावणाद्यन्यत्वनिवेशे गौरवात् प्रयोजनाभावाच्च षड्विध इत्युक्तमिति ध्येयम् आत्मादिवारणा

मु॰॥ महत्त्वं षड्विधे हेतुः द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणम् द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वा श्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धे न कारणमिति इन्द्रियं करणमुच्यते ॥ ५८ ॥ विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः अत्रापि षड्विध इत्यनु षज्यते इन्द्रियत्वं तु जातिः पृथिवीत्वादिना साङ्कर्यात् किन्तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकार णमनःसंयोगाश्रयत्वमिन्द्रियत्वम् आत्मादिवारणाय सत्यन्तम् उद्भूतविशेषगुणस्य श्रोत्रे सत्त्वाच्छब्देतरेति॥

येति आत्मादौ योऽतिव्याप्तिरूपो दोषस्तद्वारणायेत्यर्थः सत्यन्तदाने च शब्दादितरे ये उद्भूतविशेषगुणाः सुखादयस्तदाश्रयत्व स्यैवात्मनि सत्त्वान्नातिव्याप्तिरिति भावः श्रोत्रे सत्त्वादिति तथा च तत्राव्याप्तिरिति भावः ॥ ६ ॥

अत एव लघुभूतस्यापि आत्मभिन्नत्वस्य परित्यागस्तथा सति आत्मभिन्ने चर्मण्येवातिप्रसंगात् नवीनमते तु शब्देतरेत्यत्र शब्दे पदं ज्ञानेच्छाकृती नामप्युपलक्षणं बोध्यं तेनेश्वरस्यैव श्रोत्रेन्द्रियत्वोपगमेनान्यथा श्रोत्रे अव्याप्तिप्रसंगादेवं तन्मते अनुभूतविशेषगुणपदं समवेतभूतमेवमन एमः

इति न तत्राप्यव्याप्तिरिति ध्येयम् ॥ ६ ॥ ६ ॥ ११८

ए॰॥भूमिकामितिप्रयोजनसंपादिकांयुक्तिमित्यर्थः उद्भूतत्वस्य प्रत्यक्षजनकतावच्छेदकजातिरूपत्वे तादृशजातेः संयोगादिसामान्यगुणे कल्पकाभावेन उद्भूतगुणभूयस्त्वोक्तावपि चक्षुरादावप्रसक्तेः उद्भूतत्वाभावकूटस्य तत्त्वएव संयोगादावनुद्भूतत्वजातौ मानाभावेन तद्व्याप्तिदानसंभवाद्भूमिकात्वमवसेयं नोक्तदोषइतीति एकत्रावृत्तित्वप्रयुक्तकारणत्वानुपपत्तिरूपदोषइत्यर्थः इंद्रियावयवेति॰ इंद्रियावयवावयवयोः संयो

दि॰॥विशेषपदस्यप्रयोजनंवक्तुम्भूमिकामाह उद्भूतत्वमिति जनकत्वानुपपत्तेरिति एकैकस्यकारणतावच्छेदकत्वेव्यभिचारात्कूटस्यैकत्रावृत्तितयाकारणतानवच्छेदकत्वादितिभावः तदभावकूटश्चोद्भूतत्वमिति तथाचतादृशकूटस्यकारणतावच्छेदकत्वमि

प्र॰॥विशेषगुणस्य रूपादेश्चक्षुरादावपिसत्त्वादुद्भूतेति उद्भूतत्वन्नजातिः शुक्लत्वादिनासङ्करात् नचशुक्लत्वादिव्याप्यनानैवोद्भूतत्वमितिवाच्यम् उद्भूतरूपत्वादिनाचाक्षुषादौजनकत्वानुपपत्तेः किन्तुशुक्लत्वादिव्याप्यनानैवोद्भूतत्वम् तदभावकूटश्चोद्भूतत्वन्तच्चसंयोगादावप्यस्ति तथाच शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादावप्यस्त्यतो विशेषेति कालादिवारणायविशेष्यदलम् इन्द्रियावयवविषयसंयोगस्यापिप्राचाम्मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणा॰ यनवीनमते कालादौरूपाभावप्रत्यक्षेसन्निकर्षघटकतयाकारणीभूतचक्षुःसंयोगाश्रयस्यकालादेर्वारणायमनःपद

तिनोक्तदोषइतिभावः इन्द्रियावयववारणायेतिमनःपदमित्यनेनान्वितम् नवीनमतेमनःपदप्रयोजनमाह कालादाविति समवायेनघटाद्यभावादौनाकालेसत्त्वेपिनतत्रप्रत्यक्षम् योग्यानुपलब्धेरभावात् तोरूपाभावपर्यन्तानुधावनम्॥ १॥ १॥ १॥

गस्यापिप्राचांमतेज्ञानकारणतयातमादायेंद्रियावयवेअतिव्याप्तिवारणायमनःपदमितिभावः योग्यानुपलब्धेरिति यस्मिन्कालेघटः स्यात्तदाघटवत्तयाउपलभ्येतेत्यापत्तेः कालस्यायोग्यत्वेन असंभवादितिभावः कालेपदिरूपंस्यात्तदाउपलभ्येतेत्यापत्तिस्तुसंभवतीनोरूपत्वेनैवकालस्यायोग्यतायाःसंपादनीयतयारूपसत्त्वेतदनिर्वाहादितिभावः॥

का॰मु॰ रा॰। मूले तद्द्वारणायैवेति कालस्येंद्रियत्ववारणायैवेत्यर्थः यद्यपि ज्ञानकारणत्वोपादानेपि कालविधया कालमनस्संयोगस्यापि ज्ञानकारणतया तद्दोषता
दि॰रा॰ दवस्थ्यं समवायेन कारणत्वविवक्षणे तु क्वापि कार्ये कालमनःसंयोगस्य समवायेनाकारणत्वात् ज्ञानपदमनर्थकं तथापि समवायेन कारणतालाभायै
११९ व ज्ञानपदम् अथवा वैशेषिकपरत्वादिकारणदिङ्मनःसंयोगमादाय दिश्यतिव्याप्तिवारणाय तत्पदमिति भावः॥५८॥ ननु विषयेंद्रियसंबंधो व्यापार इति
मूलमसंगतं शब्दश्रोत्रसंबंधस्य समवायस्य नित्यतया तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वस्यासंभवात् अत एवैतदस्वरसेनैव व्यापारपदं
सन्निकर्षार्थकतया विवृतं मुक्तावल्यामित्याह जन्यत्वेत्यादि वस्तुतस्तु तत्र समवायोपि व्यापार एव कथमन्यथा शब्दप्रत्यक्षे श्रोत्रेंद्रियस्य कारणत्वं व्यापा

दि॰॥ तद्द्वारणायेति कालादेर्वारणायेत्यर्थः॥५८॥ जन्यत्वघटितस्य व्यापारत्वस्य श्रोत्रसम्बन्धे समवायरूपेऽभावादाह व्यापारः सन्नि

मु॰॥ ज्ञानकारणमित्यपि तद्द्वारणाय करणमिति असाधारणं कारणं करणम् असाधारणत्वम् व्यापारवत्त्वम्।५८॥ व्या
पारः सन्निकर्षः षड्विधं सन्निकर्षमुदाहरणद्वारा प्रदर्शयति द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः॥५९॥ द्रव्येषु सम
वेतानां तथा तत्समवायतः तत्रापि समवेतानां शब्दस्य समवायतः।६०। तद्वृत्तीनां समवेतसमवायेन तु ग्रहः विशेषण
तया तद्वदभावानां ग्रहो भवेत्।६१। यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते प्रत्यक्षं समवायस्य विशेषणतया भवेत्।६२।

कर्ष इति द्रव्यप्रत्यक्षमिति द्रव्यवृत्ति लौकिकविषयतासम्बन्धेन प्रत्यक्षमित्यर्थः॥ ९रवत्कारणस्यैव करणत्वात् किंतु तज्जन्यत्वं व्याप
रलक्षणप्रविष्टं तद्भिन्नसत्ताकत्वमेव शब्दप्रतियोगिकत्वविशिष्टसमवायस्यैव प्रत्यक्षजनकतया तादृशस्याकाशात्मकश्रोत्रसत्त्वाधीनसत्ताव
त्त्वान्न व्यापारत्वविरोध इति मंतव्यं अस्तु वा इंद्रियस्य करणत्वोपपत्तये शब्दादेर्विषयस्यैव व्यापारत्वं प्रत्यक्षे विषयस्य कारणत्वात् शब्दादेर्विषयस्या
काशादिजन्यत्वात् सुखादेरप्यात्ममनःसंयोगजन्यत्वेन मनोजन्यत्वानपायादिति विभावनीयं ननु द्रव्यप्रत्यक्षे इंद्रियसंयोगस्य न समवायेन
कारणतासंभवः तस्य विषयनिष्ठस्याप्यन्यसंभवादिति विषयतैव कार्यतावच्छेदकसंबंधो वाच्यस्तथा च द्रव्यविषयकप्रत्यक्षस्य घट इत्याद्याका रामः
रकस्य विषयतया घटत्वाद्यावृत्त्यव्यभिचार इत्यतो द्रव्यप्रत्यक्षमित्यस्यार्थमाह द्रव्यवृत्तीति॥ ६॥ ११९

रा०॥ तथाच प्रत्यक्षत्वमेवेंद्रियसंयोगजन्यतावच्छेदकं द्रव्यवृत्तिलौकिकविषयतायाः कार्यतावच्छेदकसंबंधत्वादेव घटत्वादौ न व्यभिचार इति भावः एवं संयुक्तसमवायादावप्यूहनीय इत्याह द्रव्यसमवेतेति द्रव्यप्रत्यक्ष इति द्रव्यवृत्तिलौकिकविषयतासंबंधेन प्रत्यक्ष इत्यर्थः इंद्रियसन्निकर्षत्वेन इंद्रियसंयोगत्वेन चाक्षुषापत्तिरिति यद्यपि चाक्षुषत्वस्यैंद्रियसंयोगजन्यतावच्छेदकत्वे नेंद्रियसंयोगकारणबलाच्चाक्षुषापत्तिरयुक्ता तद्बलेन प्रत्यक्षत्वावच्छिन्नस्यैव आपादनसंभवात् तथापि जायमानं प्रत्यक्षं चाक्षुषमेवांगीकार्यं न स्पार्शनं नत्वोद्भूतस्पर्शाभावात् स्पार्शने तस्य हेतुत्वात् इंद्रियांतरं चक्षुः।

दि०॥ द्रव्यसमवेतेति द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमित्यर्थः एवमग्रेपीति द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमिन्द्रियसंयुक्तसमवेतसमवायजन्यमित्यर्थः ननु द्रव्यप्रत्यक्षे इन्द्रियसन्निकर्षत्वेन हेतुत्वे त्वक्प्रभासंयोगाच्चाक्षु।

मु०॥ द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम् द्रव्यसमवेतप्रत्यक्षमिंद्रियसंयुक्तसमवायजन्यम् एवमग्रेपि वस्तुतस्तु द्रव्यचाक्षुषम्प्रति चक्षुःसंयोगः कारणं द्रव्यसमवेतचाक्षुषम्प्रति चक्षुःसंयुक्तसमवायः कारणम् द्रव्यसमवेतसमवेतचाक्षुषम्प्रति चक्षुःसंयुक्तसमवेतसमवायः एवमन्यत्रापि विशिष्यैव कार्यकारणभावः॥

॥षापत्तिरेवमन्धकारे घटचक्षुःसंयोगात्स्पार्शनापत्तिश्चेत्यत आह वस्तुतस्त्विति नन्वेवमात्मप्रत्यक्षानुरोधेन मनःसंयोगस्य ज्ञानादिप्रत्यक्षानुरोधेन मनःसंयुक्तसमवायस्य प्रत्यासत्तित्वेपि चक्षुरादिसंयोगतत्संयुक्तसमवाययोः प्रत्यासत्तित्वे प्रमाणाभावः चक्षुरादिसंयुक्तसमवेतेन समवायेनैव त्र्यणुकादेश्चाक्षुषाद्युपपत्तेरत आह॥

व्यग्राहकमेवेनेत्यभिप्रायेण चाक्षुषापादनान्नासंगतिः एवमुत्तरत्रापि चाक्षुषे आलोकसंयोगस्य हेतुतया तदभावान्नांधकारे चाक्षुषापत्तिरतः स्पार्शनापादनमिति बोध्यं अथ विशिष्य कार्यकारणभावस्योक्तयुक्त्यावश्यकत्वेपि यद्विशेषयोरिति न्यायेनोक्तकार्यकारणभावोप्यावश्यक एवेति वस्तुतस्त्वित्यादिनामूलेन तत्परित्यागोनुचित इति चेन्नैवं तादृशन्याये मानाभावान्नैकस्यैंद्रियसंयोगाभावस्य प्रत्यक्षसामान्याभावप्रयोजकत्वे लाघवमेव तत्र मानमिति वाच्यं घ्राणेंद्रियादिसंयोगसत्वेपि द्रव्यनिष्ठलौकिकविषयतया प्रत्यक्षसामान्याभावसत्वेन तस्य तत्र प्रयोजकत्वासंभवादिति ध्येयं॥ ६ ॥

रा॰॥ एवंविशिष्यैवकार्यकारणभावेचक्षुर्घटितेतिपरकीयचक्षुर्घटितेत्यर्थः स्वस्मिन्स्वप्रतियोगिकसंयोगानुयोगित्वासंभवात् संयुक्तपदार्थैकदेशइति पद्यपिसामानाधिकरण्यसंबंधेनसंयोगेरूपावच्छिन्नत्वनिवेशापेक्षयासंयुक्तएवसमवायेनरूपावच्छिन्नत्वनिवेशएवलाघवंतथापिविभिन्नाव च्छेदेनालोकचक्षुस्संयोगाभ्यांदंडादिप्रत्यक्षवारणायाग्रेचक्षुःसंयोगेआलोकसंयोगनिष्ठावच्छेदकतानिरूपकत्वस्यविवक्षणीयतयातत्रैवम हत्वोद्भूतरूपवैशिष्ट्यंनिवेशितंएकत्रैकंविशेषणंअपरत्रविशेषणद्वयमितिसौकार्येअर्धजरतीन्यायापत्तेरितिभावः वस्तुतउक्तलाघवानुरोधेन

दि॰॥ परन्त्विति परम्परयास्वाश्रयसमवेतसमवेतत्वादिसम्बन्धेनउद्भूतरूपावच्छिन्नमहत्वावच्छिन्नचक्षुःसंयुक्तसमवायस्यैति अत्रचक्षुर्घटितचक्षुःसन्निकर्षाच्छुक्लत्वादीनाम्प्रत्यक्षवारणायोद्भूतेतिउद्भूतरूपावच्छिन्नेतिमहत्वावच्छिन्नेतिचक्षुःसंयुक्त

मु॰॥ परन्तुपृथिवीपरमाणुनीलेनीलत्वम्पृथिवीपरमाणौपृथिवीत्वञ्चचक्षुषाकथन्नगृह्यतेतत्रपरम्परयोद्भूतरूपस म्बन्धस्यमहत्वसम्बन्धस्यचसत्वात् तथाहिनीलेनीलत्वजातिरेकैवघटनीलेपरमाणुनीलेचवर्ततेतथाचमहत्वस म्बन्धोघटनीलमादायवर्ततेउद्भूतरूपसम्बन्धस्तूभयमादायैववर्ततेएवम्पृथिवीत्वेपिघटादिकमादायमहत्वसम्बन्धो वोध्यः एवंवायौतदीयस्पर्शादौचसत्ताया श्चाक्षुषप्रत्यक्षंस्यात् तस्मादुद्भूतरूपावच्छिन्नमहत्वावच्छिन्नचक्षुःसंयुक्तसम

पदार्थैकदेशसंयोगेनान्वेति तथाचमहत्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्यत्रसरेणावभावात् तच्चाक्षुषाद्यनुपपत्तिर तःसंयोगस्यप्रत्यासत्तित्वमावश्यकमितिभावः संयुक्तसमवेतसमवायेनसंयुक्तसमवायस्यनान्यथासिद्धिरित्याह॰॥ ६ ॥

चक्षुस्संयोगएवविशेषणद्वयमुचितमेकत्रविशेषणत्रयोपगमेपरस्परविशेषणविशेष्यभावेविनिगमनाविरहेणकार्यकारणभावाधिक्यप्रसंगा दित्यवधेयंननूक्तग्रंथस्यसंयुक्तसमवेतसमवायेनैवोपपत्तौसंयोगसंयुक्तसमवाययोर्वैयर्थ्यमित्याशंकयैवअवतारिततयासंयोगमहत्वा वच्छिन्नत्वनिवेशेनैवताहशशंकानिरासादुद्भूतरूपावच्छिन्नत्वविशेषणप्रदर्शनंमूलेविफलमित्याशंकांपरिहरति॰॥ ६ ॥ ६ ॥ ॥ १२०

रा॰॥ एतदिति तथाच स्मृतस्योपेक्षानर्हत्वादेवतत्रविशेषणद्वयमभिहितमितिनदोषइतिभावः अत्रचाग्रेचेत्यादिकं पयालोकसंयोगावच्छिन्नत्वोपादानंप्रयोजनांतरार्थमेवनतुसंयोगसंयुक्तसमवाययोः सन्निकर्षोपपत्त्यर्थंतयोरुद्भूतरूपावच्छिन्नत्वनिवेशनमपिचक्षुष्ट्वादेःचाक्षुषनिरासनायैवेतिदि॥

दि॰॥ द्रव्यसमवेतेति तादृशेतिमहत्त्वाद्यवच्छिन्नेत्यर्थः तथाच महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्य त्रसरेणुरूपेऽभावाच्चाक्षुषानुपपत्त्यासंयुक्तसमवायस्य प्रत्यासत्तित्वमितिभावः एतत्प्रसङ्गेनपूर्वरूपावच्छिन्नत्वमग्रेचालोकसंयोगावच्छिन्नत्वञ्चक्षुःसंयोगेनत्प्रयोजनत्वाभिहितमितिबोध्यम् स्पार्शनप्रत्यक्षेत्वक्सन्निकर्षस्यकारणत्वम्प्रपञ्चयति स्पर्शमित्यादिना ए॥

मु॰॥ द्रव्यसमवेतचाक्षुषेतादृशचक्षुःसंयुक्तसमवेतसमवायस्यद्रव्यसमवेतसमवेतचाक्षुषे कारणत्वंवाच्यम् इत्यञ्चपरमाणुनीलादीननीलत्वादिग्रहः परमाणौचक्षुःसंयोगस्यमहत्त्वावच्छिन्नत्वाभावात् एवंवाय्वादीनसत्तादिचाक्षुषन्तत्रचक्षुःसंयोगस्यउद्भूतरूपावच्छिन्नत्वाभावात् एवंयत्रघटस्यपृष्ठावच्छेदेनालोकसंयोगःचक्षुःसंयोगस्त्वग्रावच्छेदेनतत्रघटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वञ्चक्षुःसंयोगेविशेषणन्देयम् एवन्द्रव्यस्पार्शनप्रत्यक्षेत्वक्संयोगःकारणम् द्रव्यसमवेतस्पार्शनप्रत्यक्षेत्वक्संयुक्तसमवायःद्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षेत्वक्संयुक्तसमवेतसमवायः अत्रापिमहत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वञ्चपूर्ववदेवबोध्यम्॥

र्ववदेवेति परमाणुघटितत्वक्सन्निकर्षेणस्पर्शत्वस्पार्शनवारणायमहत्त्वावच्छिन्नत्वम्प्रभाघटितसन्निकर्षेणस्पर्शत्वस्पार्शनवारणायोद्भूतस्पर्शावच्छिन्नत्वादिविशेषणम्बोध्यमित्यर्थः॥

शंतविधयैवोक्तंतेनवक्ष्यमाणग्रंथस्योक्ताशंकयानवतारितत्वेपिनक्षतिःप्रभायांसत्तास्पार्शनवारणंत्वक्संयोगेउद्भूतरूपावच्छिन्नत्वनिवेशान्नसंभवतीतिस्पर्शानुधावनं॥ ६ ॥

का॰मु॰ ए॰॥श्रोत्रावच्छिन्नत्वस्य समवायविशेषणस्यफलमाहसकलेतिनन्विंद्रियसंवध्धविशेषणतयासमवायाभावयोःप्रत्यक्षमितिवदतोमूलकारस्येंद्रियसं
दि॰न॰ वध्धविशेषणतात्वेनविशेषणतयाविभागइतिग्रंथकाराणामाशयोलभ्यतेसचासंगतःइंद्रियेणकालिकेनसंवन्धेघटादौविशेषणतयाफलत्वाभावा
१२१ देःप्रत्यक्षत्वानुत्पत्तेःकिंतुसंयुक्तविशेषणतात्वादिनैवसन्निकर्षतायावाच्येतिविभागोपितेनतेनरूपेणैवकार्यस्तथाचसन्निकर्षस्यषड्विधत्वव्याघातइ
त्याशंक्यनिराचष्टेयद्यपीतियद्यपीयमाशंकाग्रेमूलकृतैवक्रियतेसमाधीयतेचोक्तसमाधानेनैवेतिव्याख्यानेएतदाशंकायास्तत्समाधानस्यचवैफल्य.

दि॰॥श्रोत्रावच्छिन्नेतिसकलपुरुषाणांसर्वशब्दप्रत्यक्षापत्तिरतःश्रोत्रावच्छिन्नेतिइन्द्रियसम्बद्धेतियद्यपीन्द्रियसंयुक्तविशेषण

मु॰॥एवङ्गन्धप्रत्यक्षेघ्राणसंयुक्तसमवायःगन्धसमवेतस्यघ्राणजप्रत्यक्षेघ्राणसंयुक्तसमवेतसमवायःरासनप्रत्यक्षे
रसनासंयुक्तसमवायःरससमवेतरासनप्रत्यक्षेरसनासंयुक्तसमवेतसमवायःकारणम् शब्दप्रत्यक्षेश्रोत्रावच्छिन्न
समवायःशब्दसमवेतश्रावणप्रत्यक्षेश्रोत्रावच्छिन्नसमवेतसमवायःकारणम् अत्रसर्वत्रप्रत्यक्षंलौकिकम्बोध्यम्
वक्ष्यमाणमलौकिकप्रत्यक्षमिन्द्रियसंयोगादिकंविनापिसम्भवतिएवमात्मप्रत्यक्षेमनःसंयोगःआत्मसमवेतमा
नसप्रत्यक्षेमनःसंयुक्तसमवायःआत्मसमवेतसमवेतमानसप्रत्यक्षेमनःसंयुक्तसमवेतसमवायःकारणम् अभा
वप्रत्यक्षेसमवायप्रत्यक्षेचेन्द्रियसम्बद्धविशेषणताहेतुः॥ ॰॰तादिन्द्रियसंयुक्तसमवेतविशेषणतेत्यादिक्रमेणवाहुल्य

मेवतथापिविशेषणतात्वेनैवरूपेणविभागःनचैवंसमवायत्वेनचतुर्णामनुगमप्रसङ्गःपरिभाषायाअपर्यनुयोज्यत्वात्॥ ६

मेवतथापिविशेषणतानांविशेषणतात्वेनविभागेसंयुक्तसमवायादीनांचतुर्णांकेवलसमवायविभाजकसमवायत्वेनानुगमसंभवेनसंयोगसमवा
यविशेषणतास्त्रयःसन्निकर्षाइत्येवकुतोनोक्तमित्याक्षेपस्यमूलकृतातादृशसमाधानोपर्यनिराकृततयातन्निरासायैवमूलोक्तार्थस्यानुवादइति
विभावनीयंपरिभाषायाःषड्विधसन्निकर्षइतिशास्त्रकारीयसंकेतस्यअपर्यनुयोज्यत्वादितिसंयोगादिभेदेनत्रिविधःसन्निकर्षइत्येवकुतोनोक्त रा॰म॰
मित्याक्षेपानर्हत्वादित्यर्थःतथाविभागेपिक्षतिविरहादितिभाः॥ ॥ १२१

रा०॥ मूलेवैशेषिकमतेसमवायोनप्रत्यक्षइत्युक्तंतत्रयुक्तेरनुक्तत्वात्तत्रयुक्तिमाहसंबंधप्रत्यक्षइतिसमवायेस्यैकतयाएकदाभाविभूतसकलाश्रयप्रत्यक्षी
भोज्ज्ञानासंभवादितिभावः न्यायमतेतुसंबंधप्रत्यक्षत्वंनकार्यतावच्छेदकंसंबंधत्वस्यअनुगतस्यनिर्वक्तुमशक्यत्वात्सांसर्गिकविषयतावत्त्वस्यकथंचित्तु
वचनेपितादृशसंबंधत्वस्यघटत्वादिसाधारणतयातत्प्रत्यक्षेव्यभिचारापत्तेरपितुसंयोगप्रत्यक्षत्वमेवकार्यतावच्छेदकमतःसमवायस्यतन्मतेनप्रत्यक्ष

दि०॥ समवायोनप्रत्यक्षइति सम्बन्धप्रत्यक्षेयावदाश्रयप्रत्यक्षस्यहेतुत्वादितिभावः नचतुविशेषणतयातद्ग्रहदित्याद्यसङ्गतेविशेष
णताप्रत्यासत्तेरभावात् नचतत्प्रत्यासत्तेरनभ्युपगमेऽभावप्रत्यक्षानुपपत्तिरितिवाच्यमिष्टापत्तेरनुपलम्भस्यैवतत्प्रत्यक्ष

मु०॥ वैशेषिकमतेतुसमवायोनप्रत्यक्षः अत्रयद्यपिविशेषणतानानाविधातथाहि भूतलादौघटाद्यभावःसंयुक्तविशेष
णतयागृह्यतेसंख्यादौरूपाद्यभावःसंयुक्तसमवेतविशेषणतयासंख्यात्वादौरूपाद्यभावःसंयुक्तसमवेतसमवे
तविशेषणतयाशब्दाभावःकेवलश्रोत्रावच्छिन्नविशेषणतयाकादौखत्वाद्यभावःश्रोत्रावच्छिन्नसमवेतविशे
षणतयाएवङ्कत्वाद्यवच्छिन्नाभावेगत्वाभावादिकंश्रोत्रावच्छिन्नविशेषणतयाघटाभावादौपटाभावःचक्षुः
संयुक्तविशेषणविशेषणतयाएवमन्यत्राप्यूह्यम् तथापिविशेषणतात्वेनैकैवसागण्यते अन्यथाषोढासन्नि
कर्षइतिप्राचाम्प्रवादोव्याहन्येत॥ ६ ॥

स्योपगमात् नचसमवायप्रत्यक्षानुरोधात्विशेषणताप्रत्यासत्तिस्वीकारः समवायानङ्गीकारात्तएवाभावप्रत्यक्षेइन्द्रियसन्निक
र्षाङ्गीकारेनुयोग्यानुपलब्धिरेवेतिभाट्टानामाक्षेपन्दूषयितुम्मूले॥ ॥त्वानुपपत्तिरितिभावःसमवायप्रत्यक्षानुरोधादित्यस्यविशेषणतायास्स
न्निकर्षत्वमितिशेषःतस्यसमवायप्रत्यक्षस्यअनुपगमात्स्वीकारादित्यर्थःभट्टैरितिशेषःतैःसमवायस्यैवानंगीकारात्द्रव्ययवावयव्यादीनांस्वरू
पस्यैवतन्मतेसंबंधत्वादितिभावः अतएवविशेषणताप्रत्यासत्तेरभावादेवेत्यर्थः॥ ६ ॥

का॰ऊ॰ रा॰॥ ननु यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते तत्र विशेषणतया अभावानां ग्रहो भवेदित्यनेन मूलेन नोक्तभङ्गमतनिराकरणं संभवति तत्र तादृश
दि॰रा॰ मतनिरासकयुक्तेरस्फुरणात्तत्सद्भावमाह तथाचेति निर्वाह इति विशेषणतासन्निकर्षेणाभावप्रत्यक्षोपगमेन यापिशाचादीनामप्यभावप्रत्यक्षा
१२२ पत्तिरित्यनिर्वाहः योग्यानुपलब्धेरभावग्राहकत्वे तु पिशाचस्यायोग्यतया योग्यप्रतियोग्युपलंभाभावरूपकारणाभावेन न तत्प्रत्यक्षापत्तिरिति भा
वः इदानीं तु अभावग्राहकसन्निकर्षसत्वेपि सहकारिणा योग्यानुपलंभस्याभावादेव न पिशाचाभावादि प्रत्यक्षापत्तिरिभावः अनुचितमिति यद्यप्यनुपल
ब्धेः कारणत्वकल्पनं विशेषणतासन्निकर्षाकल्पनं चापेक्ष्य अनुपलब्धौ प्रमाणत्वकल्पनमेवोचितं तथापि अनुपलब्धेर्व्यापाराभावेन व्यापारवत्कार

दि॰॥ यदि स्यादिति तथाचेन्द्रियाणामभावप्रत्यक्षजननीये योग्यानुपलब्धेः सहकारितामात्रेण निर्वाहे ऽतिरिक्तप्रमाणकल्पनम

मु॰॥ यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते इति अत्राभावप्रत्यक्षे योग्यानुपल
ब्धिः कारणम् तथाहि भूतलादौ घटादिज्ञाने जाते घटाभावादिकन्नज्ञायते॥

नुचितमितिभावः तत्र योग्यानुपलब्धेरभावप्रत्यक्षे हेतुत्वे युक्तिमाह तथाहीति घटादिज्ञाने घटादिभ्रमे॥ ६ ॥ ६॥

णत्वघटितप्रमाणत्वासंभवात् अभावज्ञानस्य अधिकरणविषयकस्य अनुभवेन अनुपलब्धिजन्याभावज्ञाने अधिकरणभावानानुपपत्तिः भ्रमा
वज्ञानस्य प्रत्यक्षस्वरूपतायाएवस्वीकरणीयत्वात्तथासति चाभावस्य विशेषणतयाधिकरणस्य च संयोगादिनाएकस्मिन्नेव ज्ञाने भानसंभवा
न्नानुपप ...त्तिरितिभावः ननु घटस्य प्रमारूपज्ञानदशायामभावप्रत्यक्षमेव न संभवति घटसत्त्वएव तत्प्रमासंभवेन तदानीमभावे विशेषणतास
न्निकर्षस्यैव अभावात्ततो ज्ञानपदं भ्रमार्थकमित्याह घटाभ्रम इति ननु भ्रमकाले घटाद्यभावप्रत्यक्षानुदयेन अभावप्रत्यक्षे प्रतियोगिभ्रमजनक रा॰म॰
दोषाभावस्यैव कारणत्वमस्तु न तु प्रतियोग्युपलंभाभावस्य तत्कारणता तथासत्यपि भ्रमोत्पत्तिकाले अभावप्रत्यक्षापत्तेरवारणादित्याशंकते॥ १२२

रा०॥ नचेति दोषाभावस्याभावप्रत्यक्षकारणत्वेपियत्रविनश्यद्वस्थापन्नदोषाद्घटादिभ्रमः तत्रभ्रमानंतरमभावप्रत्यक्षवारणाय प्रतियोगिनउपलं
भाभावस्यापिकारणत्वमावश्यकमितिसमाधत्ते विनश्यदवस्थेतिवस्तुतः प्रतिबंधकतयास्वमतेपितस्यहेतुतासिद्धेरित्याशंकनीयं घटप्रकारकोप
लंभविषयः स्यादित्यापत्तेर्भूतले घटप्रकारकत्वात् यद्यत्रघटः स्यादितितु आप ‾ तिकारणीभूत आपादकवत्ताज्ञानप्रदर्शनपरमेवननत्वापत्तिवि
षयाभिलापरूपं तथाचापत्तेः कारणत्वेपितस्याः घटप्रकारकत्वेनस्वमतेप्रतियोग्यारोपस्याकारणत्वाप्रसक्तेः तादृशापत्तियोग्यत्वेनापेक्षितानत्वाप

दि०॥ ननु घटादिभ्रमहेतुर्दोषएवनतत्प्रतिवन्धकः अन्यथाभ्रमोत्पत्तिकालेतदभावप्रत्यक्षापत्तिरितिवाच्यम् विनश्यदवस्थदोषा
द्यत्रभ्रमस्तत्रभ्रमोत्पत्तिकाले प्रतिवन्धकीभूतदोषाभावस्यसत्वादभावप्रत्यक्षापत्तेः अभावोपलम्भे तदिन्द्रियजन्यतत्सम्बन्धावच्छि
न्नतदभावलौकिकप्रत्यक्षे प्रतियोग्युपलम्भाभावइति तदिन्द्रियजन्यानाहार्यतत्संसर्गकतत्प्रकारकोपलम्भाभावइत्यर्थः इन्द्रि

मु०॥ तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम् तत्रयोग्यताप्यपेक्षिता॥

यान्तरजन्ये आनुमानिके च तदुपलम्भे सत्यपि तदभावप्रत्यक्षात्तदिन्द्रियजन्येति अभावप्रत्यक्षहेतुकप्रतियोग्यारोपसत्वेप्य
भावप्रत्यक्षादनाहार्येति तत्रप्रतियोग्युपलम्भाभावे अपेक्षितेति तेन न जलपरमाण्वादौ पृथिवीत्वाभावादेः प्रत्यक्षमिति भावः॥

तिरपीति अग्रेवक्ष्यमाणत्वाच्चेतिमंतव्यं अनाहार्येणेति एवमेकसंसर्गेण प्रतियोगिप्रकारकज्ञानसत्वेप्यन्यसंसर्गेणाभावप्रत्यक्षोत्पत्त्याउभयत्रसंस
र्गनिवेशइत्यपिवोध्यं ननु मूले अभावप्रत्यक्षजनकप्रतियोगितावच्छेदकावच्छिन्नतत्संबंधावच्छिन्नप्रकारतानिरूपिततदधिकरणनिष्ठविशेष्यता
शाल्युपलंभाभावे योग्यतानिवेशिता तत्प्रयोजनं तु नोक्तमतस्तत्प्रयोजनंप्रदर्शयन् तद्वैयर्थ्यशंकामपाकरोति तेनेत्यादितथाचतदनिवेशे जलप
रमाणुविशेष्यकसमवायावच्छिन्नपृथिवीत्वत्वावच्छिन्नप्रकारकोपलंभाभावरूपकारणवलात्तत्र पृथिवीत्वाभावप्रत्यक्षापत्तिरिति भावः॥ ६ ॥

का॰मु॰ रा॰॥ मणिकृन्मतेनेति अनेन च योग्यप्रतियोगिप्रकारकयोग्याधिकरणविशेष्यकोपलंभप्रतियोगिकत्वरूपयोग्यतानिर्वचनमपि संभवतीति सूचितं
दि॰ एवमपि स्तंभादिविशेष्यकपिशाचोपलंभस्य जलपरमाण्वादौ पृथिवीत्वोपलंभस्य च योग्यताप्रकारकत्वयोग्यविशेष्यकत्वविरहेणैव पिशाचाभाव
१२३ स्य जलपरमाण्वादौ पृथिवीत्वाभावस्य च अप्रत्यक्षत्वोपपादनसंभवादिति भावः मूले प्रतियोगिसत्त्वेति प्रतियोगिसत्त्वस्य प्रत्यक्षविषयाभावप्रतियोगि
सत्त्वस्य प्रसंजनेन आहार्यारोपेणेत्यर्थः आसत्त्वापाद्यव्याप्यापादकवत्ताज्ञानस्य हेतुतया निर्घटदेशादौ प्रतियोगिसत्त्वज्ञानस्याहार्यत्वाच्चेति भावः प्र
संजितइत्यस्यार्थमाह आपादितइति ननु जलादिविशेष्यकप्रतियोगिसत्त्वप्रसंजन प्रसंजितोपलंभस्य विशेष्यतासंबंधेन अभावस्य जलपरमाण्वादौ सत्त्वे

दि॰॥ मणिकृन्मतानुसारेणायोग्यतानिर्वक्ति साचेति प्रसञ्जितः आपादितः स उपलम्भाभावः अभावप्रत्यक्षे हेतुरिति अत्र तदधि

मु॰॥ साच प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा तदर्थश्च प्रतियोगिनो घ
टादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः॥ ६

करणविषयकाभावप्रत्यक्षे तदधिकरणकतदापादककप्रतियोग्यतदुपलम्भस्य विषयतासम्बन्धावच्छिन्नप्रतियोगिताकोऽभावो हे
तु तत्र पृथिवीत्वस्याभावप्रत्यक्षापत्तिः न च घटाभावे सन्निकर्षाभावादेव नेयमापत्तिरिति वाच्यं अधिकरणान्तरान्तर्भावेन घटाभावे सन्निकर्षस्यापि स
त्त्वात् न च समवायेन कार्यतावच्छेदकसंबंधो वाच्यः आत्मनि च तादृशोपलंभस्य सत्त्वादेवाभावविरहाच्च तत्र समवायेन भूतलविशेष्यकघटाभाव
प्रत्यक्षापत्तिरिति वाच्यं तथा सति तदधिकरणकतदापादककप्रतियोग्यत्वस्य तदधिकरणावृत्तिधर्मानवच्छिन्नप्रतियोगिसत्त्वनिष्ठव्याप्तिनिरूपकत्व
स्यैव वक्ष्यमाणतया भूतलातिरिक्तविशेष्यकघटप्रकारकोपलंभदशायामपि भूतलविशेष्यकघटाभावप्रत्यक्षानुपपत्तिः तादृशोपलंभाभावस्यात्म
न्यभावात् अतो निष्कृष्टकार्यकारणभावं दर्शयति अत्रेति तदधिकरणविषयकाभावप्रत्यक्ष इति तदधिकरणनिष्ठलौकिकविषयतासंबंधेन तदभा रामः
वप्रकारकप्रत्यक्षं प्रतीत्यर्थः तदुपलंभस्य पदभावप्रत्यक्षं जननीयं तत्प्रकारकोपलंभस्य तत्प्रतियोगिसत्त्वेति॥ १२३

रा॰॥ यत्प्रतियोगिकाभावप्रत्यक्षंजननीयंतत्प्रतियोगिसत्वेत्यर्थः॥ ननुमूले आपादितइत्युक्तौ आपादनमेवापेक्षितमितिलभ्यतेतत्कथंयोग्यताविवक्षितेत्यत आह तत्रेतिभूतलादौचक्षुःसंयोगानंतरमापादनंविनापिघटोनास्तीतिप्रतीतेरनुभवसिद्धतयायोग्यतानिवेशइतिभावः ननुघटादिसत्वेपिचक्षुःसंयोगाद्यभावेघटोपलंभानुदयात्केवलप्रतियोगिसत्वस्यव्यापकताउपलंभइतिक्वाप्यभावप्रत्यक्षंनस्यात् यदिचप्रतियोगिसत्वातिरिक्तप्रतियोग्युपलंभकारणकूटविशिष्टप्रतियोगिसत्वव्यापकताविवक्षितेत्युच्यते तदापरमाणौपृथिवीत्वाभावप्रत्यक्षवारणमशक्यमेवेत्याशंकतेनचेतिवाच्यमितिपरेणान्वयःसामग्र्यंतरेतितादृशसामग्रीघटकप्रतियोगिसत्वातिरिक्तकारणेत्यर्थः यथाश्रुतेयत्किंचित्सामग्रीसत्वेतदंतरविरहेपिप्रति

दि॰॥ उपलम्भेतदधिकरणकतदापादककापत्तियोग्यत्वञ्चतत्प्रतियोगिसत्वनिष्ठव्याप्तिनिरूपकत्वम् अत्रचतदापादककापत्तिर्यत्रनो
त्पन्नातत्रैदभावप्रत्यक्षानुपपत्तिरितियोग्यत्वनिवेशःनचप्रतियोगिसत्वस्योपलम्भव्याप्यत्वन्नंनिर्विशेषितस्यउपलम्भसामग्र्यन्तरवि

मु॰॥ तथाहि यत्रालोकसंयोगादिकंवर्त्ततेयद्यत्रघटःस्यात्तर्हिउपलभ्ये
तेत्यापादयितुंशक्यतेतत्रघटाभावादेःप्रत्यक्षम्भवति॥

रहेप्रतियोगिसत्वेप्युपलम्भाभावात् किन्तुमहत्वोद्भूतरूपाद्यवच्छिन्नस्यैवएवञ्चमहत्वादिविशिष्टपृथिवीत्वस्योपलम्भव्याप्यताञ्ज
लपरमाणौपृथिवीत्वाभावप्रत्यक्षापत्तिरितिवाच्यम् तदधिकरणावृत्तिधर्मानवच्छिन्नत्वस्ययोग्यताघटकीभूतव्याप्तंशेनिवेशात्॥

योग्युपलंभासंगत्यापत्तेः महत्वोद्भूतरूपेत्युपलक्षणंप्रतियोगिसत्वातिरिक्तप्रतियोग्युपलंभकारणकूटावच्छिन्नस्यैवप्रतियोगिसत्वस्योपलंभव्याप्यत्वात् नचैवंतथाविधनानाचक्षुःसंयोगव्यक्तीनांत्वक्संयोगव्यक्तीनांचएकत्रासंभवेननातादृशप्रतियोगिसत्वंनकुत्रापीतिवाच्यंयत्किंचिदनुभवनिष्ठकार्यतानिरूपितकारणतावच्छेदकाःयावंतःप्रतियोगिसत्वातिरिक्ततत्तदवच्छिन्नकूटविशिष्टप्रतियोगिसत्वव्यापकतायाविवक्षणीयत्वात् तदधिकरणेतियदधिकरणविशेष्यकाभावप्रत्यक्षंतदधिकरणेत्यर्थः तथाचैतल्लाभायैवपूर्वंतदधिकरणकतदापादककेत्यत्रतदधिकरणेत्युक्तमितिभावः॥

का॰मु॰ रा॰॥ तादृशधर्मानवच्छिन्नत्वाभावादिति परमाणुवृत्तिधर्मावच्छिन्नत्वाभावादित्यर्थः तथाच तदधिकरणपदेन जलपरमाणूपादाने प्रतियोगिसत्त्वनि
दि॰रा॰ ष्ठपरमाणुवृत्तिधर्मानवच्छिन्नव्याप्तिनिरूपकोपलंभाप्रसिद्धा तदभावरूपकारणविरहादेव न परमाणौ पृथिवीत्वाभावप्रत्यक्षमिति भावः ननु मह
१२५ त्त्वस्यानेन गंधवद्गुणभिन्नत्वं निवेश्य तद्विशिष्टत्वे सति इन्द्रियसंयोगादिविशिष्टपृथिवीत्वसत्त्वस्य पृथिवीत्वोपलंभव्याप्यतया तस्य च जलपरमाणुवृ
त्तितया जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षापत्तिरित्याशंकते नेनचेति प्रतियोगिग्राहकेति प्रतियोगिप्रत्यक्षजनकेत्यर्थः गंधवद्गुणभिन्नत्वं तु न प्रत्यक्ष

दि॰॥ महत्त्वस्य जलपरमाणुवृत्तित्वेन तादृशव्याप्तौ तादृशधर्मानवच्छिन्नत्वाभावात् नच गन्धवद्गुणभिन्नत्वविशि
ष्टस्यापि पृथिवीत्वस्य तदुपलम्भव्याप्यत्वाद्गन्धवद्गुणभिन्नत्वस्य जलपरमाणुवृत्तित्वाच्च तद्दोषतादवस्थ्य
मिति वाच्यम् योग्यताघटकव्याप्तौ प्रतियोगिग्राहकातिरिक्तधर्मानवच्छिन्नत्वस्यापि निवेशाद्गन्धवद्गु
णभिन्नत्वादेश्च प्रतियोगिग्राहकातिरिक्तत्वेन तादृशधर्मानवच्छिन्नत्वस्योक्तव्याप्तावभावात् न च प्रतियो
गिग्राहकत्वस्य प्रतियोगिग्रहजनकत्वं तच्च गंधवद्गुणभिन्नत्वपृथिवीत्वोभयसमूहालंबनात्मकलौकिकप्र
त्यक्षे विषयविधया हेतुत्वात् गन्धवद्गुणभिन्नस्याप्यस्तनमिति वाच्यम् प्रतियोगिनिष्ठप्रकारतानिरूपितलौ
किकविशेष्यताविरहप्रयोजकीभूताभावप्रतियोगित्वस्यैव प्रतियोगिग्राहकत्वपदार्थत्वात्॥ ६ ॥ ॥

जनकं तथा सति जलपरमाणौ जलत्वादिप्रत्यक्षापत्तिरिति भावः विरहप्रयोजकेति यद्यपि कारणाभावस्यैव कार्यविरहप्रयोजकतया उक्तविशेष्य
तायामकारणस्य महत्त्वस्याप्यभावो नोक्तविशेष्यताविरहे प्रयोजकः संभवति तथापि लौकिकविषयतासंबंधेन प्रत्यक्षं प्रति महत्त्वस्य कारणतया लौ
किकविषयतया प्रत्यक्षाभावस्य लौकिकविषयत्वाभावसमनियततया तदभिन्नत्वेन लौकिकविषयत्वाभावे प्रयोजकता महत्त्वाभावे अक्षतैव रा॰म॰
व्यापकाभावे प्रयोजकत्वस्य च व्याप्याभावप्रयोजकतानियमेन निरुक्तविशेष्यताविरहप्रयोजकत्वं महत्त्वाभावस्याक्षतमेव॥ ६ ॥ ६ ॥ १२५

रा॰॥ लौकिकविशेष्यत्वाभावप्रयोजके त्युक्तावपि महत्त्वाभावस्य संग्रहेपि इंद्रियसंयोगादीनां अभावासंग्रहात्प्रतियोगिप्रकारतानिरूपितत्वस्य विशेष्यताविशेषणत्वेनोपादानं यद्यप्येवमप्यालोकसंयोगासंग्रहो दुर्वार एव अंधकारे स्पार्शनोत्पत्त्या पृथिवीत्वप्रकारतानिरूपितलौकिक चाक्षुषनिरूपितत्वादृशविशेष्यत्वाभावस्पार्शननिरूपितत्तादृशविशेष्यत्वाभावान्यतरप्रयोजकाभावप्रतियोगित्वेन सर्वेषामेव संग्रहः संभवती

दि॰॥ अथैवम्पिशाचत्वप्रकारतानिरूपितलौकिकविशेष्यत्वाप्रसिद्ध्या तद्घटितनिरुक्तयोग्यानुपलम्भ विरहात्तदभावप्रत्यक्षन्नस्यादिति चेन्न नहि वयं सर्वत्राभावप्रत्यक्षे निरुक्तयोग्यानुपलम्भस्य हेतुत्वम्ब्रूमः किन्तु योग्यस्याभावप्रत्यक्षेऽयोग्यपिशाचत्वाद्यभावप्रत्यक्षे तु तदधिकरणीयत्वप्रसंजनप्रसज्जितप्रतियोगिकस्तदधिकरणीयत्वोपलम्भस्य विषयतासम्बन्धावच्छिन्नाभाव एव प्रतियोगिनिष्ठो हेतुः अत्राप्यापादनस्य सर्वत्रासम्भवेन तदधिकरणीयत्वप्रसञ्जनप्रसज्जितत्वम् तदधिकरणीयत्वनिष्ठव्याप्तिनिरूपकत्वञ्जातित्वादिविशिष्टस्य स्तम्भवृत्तित्वस्योपलम्भव्याप्यत्वात् स्तम्भे पिशाचत्वाभावप्रत्यक्षम् जातित्वादिविशिष्टस्य पिशाचवृत्तित्वस्योपलम्भाव्याप्यत्वान्न पिशाचे स्तम्भत्वाभावप्रत्यक्षम् ॥

तिविभावनीयं प्रतियोगिनिष्ठ इति तदधिकरणनिष्ठलौकिकविशेष्यतानिरूपिताभावनिष्ठप्रकारतानिरूपितप्रतियोगित्वसंबंधावच्छिन्नप्रकारतासंबंधेन योग्याभावप्रत्यक्ष इति शेषः व्याप्तिनिरूपकत्वमिति ननु स्तंभवृत्तित्वं नोपलंभव्याप्यं पिशाचे स्तंभवृत्तित्वसत्वेपि तत्प्रकारकोपलंभस्य विषयतया पिशाचे विरहादित्यत आह जातित्वादिविशिष्टस्येति आदिना इंद्रियसंयुक्तसमवायादिपरिग्रहः तथा च पिशाचे जातित्वविरहान्न व्याप्ति

॥ ६ ॥ ॥ भंग इति भावः ॥ ६ ॥ ६ ॥ ६ ॥

रा॰॥ अथैवंवन्हौ पिशाचत्वाभावोप्येतादृशयोग्यानुपलंभेनैव गृह्यत इत्यायातं तच्च न संभवति वन्हिवृत्तित्वविशिष्टतृणादिजन्यतावच्छेदकजातीनामप्रत्यक्षतया जातित्वादिविशिष्टवन्हिवृत्तित्वस्योपलंभाव्याप्यत्वात् न च जातित्वादिशब्देन योग्यतापि ग्राह्या चेत्तथा च तृणादिजन्यतावच्छेदकजातीनामयोग्यतया न व्याप्तिभंग इति वाच्यं तथा सति पिशाचत्वस्याप्ययोग्यतया तस्य स्तंभवृत्तित्वेपि तत्त्वेनोपलंभासंभवेन पिशाचत्वाभावप्रत्यक्षस्यैव असंभवादिति चेन्न प्रत्यक्षप्रतिबंधकाभावविशिष्टत्वेन जातित्वस्य विशेषणीयत्वात् तादृशजातीनां च तादात्म्येन प्रत्यक्षप्रतिबंधकत्वात् न तासु व्याप्तिभंगः पिशाचत्वं तु न प्रत्यक्षप्रतिबंधकं अयोग्यवृत्तित्वेनैव तस्य योग्यतया तत्प्रत्यक्षापादनासंभवात् तत्प्रतिबंधकताकल्पने बीजाभावात् न पिशाचादाविति पर्य

दि॰॥ एवं तादात्म्येन स्तम्भवृत्तित्वपिशाचवृत्तित्वयोरुपलम्भव्याप्यत्वाव्याप्यत्वाभ्यां स्तम्भपिशाचयोः पिशाचभेदस्तम्भभेदयोः प्रत्यक्षत्वाप्रत्यक्षत्वे अप्युपपादनीये इति न चाक्षुषप्रत्यक्षमिति अनुपलम्भे विद्यमानेपि निरुक्तयोग्यताविशिष्टस्य तस्य तत्राभावादिति भावः॥

मु॰॥ अन्धकारे तु नापादयितुं शक्यते तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम् स्पार्श
नप्रत्यक्षं तु भवत्येव आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात्॥

आपादयितुं शक्यत्वादिति तथा च समानेंद्रियजन्योपलम्भव्याप्यत्वस्य योग्यताघटकत्वान्न तत्र चाक्षुषमिति भावः॥ ६ ॥

पि पिशाचे स्तंभत्वाभावप्रत्यक्षापत्तिर्नोक्तयोग्यानुपलंभेन संभवति अयोग्यप्रतियोगिकाभावप्रत्यक्षस्यैव तस्य कारणतायाः पूर्वमुक्तत्वादेतत्कथनमफलं तथापि स्तंभत्वस्योपलक्षणतया मनस्त्वाभावप्रत्यक्षापत्तिनिरासपरत्वान्नैवैयर्थ्यमिति ध्येयं ननु योग्यवृत्तिजातिरेव यथा योग्यत्वं तथा योग्यजात्यन्यतरप्रतियोगिकाभावस्यैव योग्यत्वमित्युक्तौ च पिशाचाद्यभावप्रत्यक्षवारणं संभवति अंधकारे घटाद्यभावस्य जलपरमाणौ पृथिवीत्वाभावस्य च प्रत्यक्षवारणाय महत्त्वोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नेंद्रियसंयुक्तविशेषणतायाएवाभावग्राहकत्वमास्थीयतां किमुक्तगुरुतरयोग्यानुपलब्धिहेतुत्वस्य कारणत्वेनेत्याशंकानिरासायाह स्वमिति तथा चोक्तरीत्या स्तंभे पिशाचभेदप्रत्यक्षोपपादनस्यासंभवादेव गुरुभूतापि रामः
योग्यानुपलब्धेः कारणतांगीकृतेति भावः॥

रा०॥शक्यत्वादित्नीति ननु यद्यंधकारेपि घटादेः स्पार्शनोपलंभापादनसंभवेन घटाद्यभावस्य स्पार्शनं जायते तदा चाक्षुषमपि स्यात् अंधकारे घटसत्वेस्पार्शनोत्पत्त्या प्रतियोगिसत्वातिरिक्तप्रतियोगिप्रकारतानिरूपितचाक्षुषनिरूपितलौकिकविशेष्यत्वाभावप्रयोजकाभावप्रतियोगितावच्छेदकावच्छिन्नकूटं तथाविधस्पार्शननिरूपितलौकिकविशेष्यत्वाभावप्रयोजकाभावप्रतियोगितावच्छेदकावच्छिन्नकूटएतदन्यतरविशिष्टप्रतियोगिसत्वनिष्ठव्याप्तिनिरूपकत्वस्य यत्किंचिदिन्द्रियजन्यघटोपलंभेसत्वेन प्रतियोग्युपलंभाभावेयोग्यतासत्वात् यदि च प्रतियोग्युपलंभे प्रमेयत्वादिना व्याप्तिनिरूपकतासर्वत्रैव संभवतीति किंचिदिंद्रियजन्यप्रतियोग्युपलंभाभावेयोग्यतासत्वात् यदि च प्रतियोग्युपलंभेप्रमेयत्वादिना व्याप्तिनिरूपकत्वावच्छिन्नैव व्याप्तिनिरूपकतायोग्यतालक्षणेनि

दि०॥ ननु जातित्वादिविशिष्टस्य तेजोवृत्तित्वस्योपलम्भव्याप्यत्वात्तेजसि गुरुत्वाभावप्रत्यक्षापत्तिः एवं स्तम्भेपिशाचत्वाभावप्रत्यक्षवत् पिशाचाभावस्यापि प्रत्यक्षापत्तिरत आह गुरुत्वादिकमिति आदिपदेन पिशाचादिपरिग्रहः अयोग्यस्यापि पिशाचत्वादिजातेरभावस्य प्रत्यक्षत्वाहुरुत्वादिकमित्युक्तम् न योग्यः न प्रत्यक्षविषयः अशक्यत्वादिति निरुक्तयोग्यताघटकव्याप्तौ प्रतियोग्यवृत्तिधर्मानवच्छिन्नत्वस्य निवेशा

मु०॥ गुरुत्वादिकं यद्योग्यं न तदभाव ऽस्तु न योग्यः तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् ॥ ६ ॥

न्न प्रकृते च जातित्वविशिष्टतेजोवृत्तित्वस्योपलम्भव्याप्यत्वेपि जातित्वस्य गुरुत्वावृत्तित्वेन तादृशव्याप्यत्वे प्रतियोग्यवृत्तिधर्मानवच्छिन्नत्वाभावादिति भावः न च तदधिकरणीयत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकस्तदधिकरणीयत्वोपलम्भस्याभावऐन्द्रियकघटाभावादिप्रत्यक्षेहेतुरस्ताम् किम्पूर्वोक्तयोग्यानुपलम्भहेतुतयेति वाच्यम् तथासति परमाण्वादौ महत्वाभावप्रत्यक्षानुपपत्तेरिति॥ स्वेशनोपातया चांधकारे घटाभावचाक्षुषवारणाय प्रतियोग्युपलंभाय यदिन्द्रियजन्याः प्रसिद्धाः प्रत्येकं तत्तदिंद्रियजन्यप्रतियोग्युपलंभत्वावच्छिन्नव्याप्तिनिरूपकताविवक्षणीयेति विभाव्यते तथा घटाभावस्य स्पार्शनमपि न स्यादित्याशंकाभाववर्णनेन निराकरोति तथा चेति समानेति तथा च तदभावचाक्षुषाद्यवच्छिन्नं प्रति तत्प्रतियोगिचाक्षुषाद्यभावत्वेन विशिष्यैव हेतुता योग्यताघटकव्याप्तिनिरूपकतापि प्रतियोगिचाक्षुषाद्यवच्छिन्नैव निवेश्या एवं च व्याप्तावपि चाक्षुषाद्युपलंभकारणकूटविशिष्टप्रतियोगिसत्वनिष्ठत्वमेव निवेशनीयमिति न पूर्वोक्तान्यतरघटनापीति लाघवमिति भावः न चैवमिंद्रियांतरजन्योप

का॰मु॰ रा॰॥ तेपीन्द्रियांतरेणाभावप्रत्यक्षापत्तिरिति वाच्यं इष्टत्वात् लौकिकसन्निकर्षजन्यबुद्धौ समानेंद्रियजन्यविरोधिनिश्चयस्यैव प्रतिबंधकत्वादिति भा
दि॰रा॰ वः॥ पिशाचादीत्यादिना परमाण्वाद्यतीन्द्रियसंग्रहः नन्वेवं गुरुत्वादिकमिति व्यर्थं तद्योग्यं तदभावश्च न योग्य इत्यस्यैव वक्तुमुचितत्वादित्यत
१२६ आह अयोग्यस्येत्यादि तथा च गुरुत्वादिकमिति पदं तादात्म्येन प्रत्यक्षप्रतिबंधकजातिभिन्नसामान्याभावपरमेव तेन वह्निनिष्ठवैजात्याभाव
स्य स्तंभादौ न प्रत्यक्षापत्तिरिति भावः ननु न योग्य इत्यस्य गुरुत्वादिकमतो योग्यं न तद्गुरुत्वाद्यभावोपीत्यर्थकत्वे आपादयितुमशक्यत्वादित्यं नहे

दि॰॥ वायावुद्भूतरूपाभाव इति रूपत्वावच्छिन्नाभावस्यातीन्द्रियानुद्भूतरूपप्रतियोगिकत्वेन प्रत्यक्षासम्भवादुद्भूतेति एवमाद
य इत्यादिना प्रभायामुद्भूतस्पर्शाभावपरिग्रहः प्रत्यक्षे विषयत्वेन कारणत्वस्य क्लृप्तत्वात्तेनैव गुरुत्वाद्यतीन्द्रियाभावप्रत्यक्षवा

मु॰॥ वायावुद्भूतरूपाभावः पाषाणे सौरभाभावः गुडे तिक्ताभावः वन्हावनुष्णत्वाभावः श्रोत्रे शब्दाभावः आत्मनि सुखाद्य
भावः एवमाद्यस्तत्तदिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता॥

रणे तदनुरोधेन तदधिकरणीयत्वेत्यादि द्वितीययोग्यानुपलम्भस्य हेतुतानस्वीकार्ये त्यभिप्रायवान्संसर्गाभावे योग्यत्वमाह
संसर्गेति प्रतियोगिनो योग्यतेति योग्यमात्रप्रतियोगिकत्वे सति योग्यधर्ममात्रावच्छिन्नप्रतियोगिताकत्वमित्यर्थः॥ ॥

तोर्मूलोक्तस्यासंगतिः गुरुत्वादिवत्तस्याप्यप्रत्यक्षत्वादित्यस्यैव वक्तुमुचितत्वात् तत्स्य न प्रत्यक्ष इत्यर्थकतामाह न प्रत्यक्षेतिरेंद्रियकेति इंद्रि
यग्राह्यं यद्घटादि तदभावप्रत्यक्षेपीत्यर्थः परमाण्वादाविति परमाणौ महत्त्वसत्त्वे तद्वृत्तित्वेन परमाणूपलंभापादनस्य कर्तुं शक्यतया परमाणावपि म
हत्त्वाभावस्य प्रत्यक्षत्वोपगमादिति भावः प्रत्यक्षानुपपत्तेरिति परमाणोरयोग्यतया तद्वृत्तित्वस्योपलंभाव्याप्यत्वादिति भावः॥ प्रत्यक्ष इति विषय एम॰
तया लौकिकप्रत्यक्षं प्रतीत्यर्थः विषयत्वेनेति लौकिकप्रत्यक्षविषयतोपलक्षितत्वेनेत्यर्थः क्लृप्तत्वादिति विषयसत्त्वदशायां तद्विषयकलौकिकप्र १२६

रा०॥ प्रत्यक्षवारणायेति तत्तल्लौकिकप्रत्यक्षे तत्तद्व्यक्तित्वेन तादात्म्येन कारणतायाः अवश्यकतयायद्विशेषयोरिति न्यायेन सामान्यतः कार्यकारणभावस्याव
श्यकत्वादिति भावः। गुरुत्वाद्यभाववारणेति तेषु प्रत्यक्षवारणसंभव इत्यर्थः। तेषां लौकिकप्रत्यक्षविषयत्वोपलक्षितत्वाभावेनैव तेषु लौकिकविषयतासं
बंधेन प्रत्यक्षापत्तेरयोगादिति भावः। तदनुरोधेनेति तेषां प्रत्यक्षापत्तिवारणानुरोधेन च पिशाचत्वाभावप्रत्यक्षार्थमेव द्वितीययोग्यानुपलब्धिस्वीकार इति
पूर्वमुक्ततया तदभावे प्रथमयोग्यानुपलब्धेस्तत्रासंभवात्पिशाचत्वाभावप्रत्यक्षं न स्यादिति वाच्यं योग्यप्रतियोगिकाभावप्रत्यक्ष एव प्रथमयोग्या

दि०॥ अत्र द्रव्यसामान्याभाववारणाय मात्रेति गुरुत्ववद्घटात्यन्ताभाववारणाय विशेष्यदलम् रूपगुरुत्वान्यतरावच्छिन्नाभाववार
णाय विशेष्यदले मात्रेति अधिकरणयोग्यतेति योग्याधिकरणवृत्तित्वमित्यर्थः। इदञ्चाभावग्राहकयोग्यसन्निकर्षप्रदर्शनार्थं तेन स्त
म्भ इव वाय्वादौ न पिशाचान्योन्याभावप्रत्यक्षमिति भावः। अन्योन्याभावे योग्यतातु जात्यवच्छिन्नप्रतियोगिताकत्वजात्यतिरिक्तयो

मु०॥ अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यतापेक्षिता अतस्तम्भादौ पिशाचादिभेदोपि चक्षुषा गृह्यत एवं प्रत्य
क्षं लौकिकालौकिकभेदेन द्विविधम् तत्र लौकिकप्रत्यक्षे षोढा सन्निकर्षो वर्णितः॥५९॥६०॥६१॥६२॥

ग्यधर्मावच्छिन्नप्रतियोगिताकत्वान्यतरदेव तेन स्तम्भे पिशाचान्योन्याभाव पिशाचवदन्योन्याभावयोः प्रत्यक्षत्वाप्रत्यक्षत्वो
पपत्तिरित्यन्यत्र विस्तरः॥५९॥६०॥६१॥६२॥

०नुपलब्धिकारणतायाः पूर्वमुक्तत्वेन तदभावे पिशाचत्वाभावप्रत्यक्षबाधकाभावात् न चै
वमयोग्यप्रतियोगिकाभावप्रत्यक्षे योग्यानुपलब्धेरकारणतापत्तिरिति वाच्यं इष्टत्वात्पूर्वमयोग्यस्याभावप्रत्यक्षे योग्यानुपलब्धेः कारणत्व
भावे गुरुत्वाद्यभावस्यापि प्रत्यक्षं स्यादित्यापत्तिवारणार्थमेव अयोग्याभावप्रत्यक्षे तद्धेतुतास्वीकारादिति भावः। संसर्गाभाव इत्यादि यद्यप्ये
तादृशाभिप्राये संसर्गाभावे योग्यताप्रदर्शनमफलमेव तादृशयोग्यताकल्पनेपि गुरुत्वाभावादौ विषयत्वाभावेन अप्रत्यक्षत्वस्य पिशाचत्वाभा
वादौ विषयत्वाभावेन अप्रत्यक्षत्वस्य चोपपत्तेः॥

रा॰॥ न च गुरुत्वाभावादेः प्रत्यक्षविषयत्वोपलक्षितत्वाभावे किं प्रयोजकमित्याकांक्षानिरासायैव संसर्गाभावे योग्यताप्रदर्शितेति वाच्यं गुरुत्वादेर्विषयत्वाभावो यथा तोऽस्मिन् गुरुत्वत्वादिना प्रत्यक्षप्रतिबंधकताप्रयुक्तस्तथा प्रत्यक्षे सामान्यतः संसर्गाभावत्वेन प्रतिबंधकत्वासंभवेऽपि गुरुत्वाभावादीनां तत्तद्व्यक्तित्वेन प्रत्यक्षप्रतिबंधकत्वकल्पनयैव तेषां विषयत्वाभावोपपादनसंभवात् तथापि तत्तदभावानां तत्तद्व्यक्तित्वेन अनंतप्रतिबंधकताकल्पने गौरवमित्यभिप्रायेणैव योग्यताप्रदर्शनमिति वोध्यं ननु केयं योग्यता नाम न तावज्जातिरूपेति शक्यते वक्तुं अभावावृत्तित्वप्रसंगात् नापि प्रत्यक्षप्रयोजकोपाधिरूपा सप्तातिरिक्तपदार्थस्य सिद्धांते अभावात् न चाभावरूपैवेति वाच्यं कस्याभावरूपा सत्यास्ये पक्षे तथाप्यनुद्धारादिति मेवं प्रतिबंधकाभावत्वस्यैव यो

दि॰॥ धूमत्वादिसामान्यलक्षणायाइन्द्रियजन्यत्वाभावाद्व्यापारत्वकथनमसङ्गतमत आह व्यापारः सन्निकर्ष इति यद्यपि धूमत्वादेरिन्द्रियप्र

मु॰॥ अलौकिकसन्निकर्षस्त्वधुनोच्यते अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथेति॥ ६३॥ व्यापारः सन्निकर्षः सामान्यलक्षण इति सामान्यं लक्षणं यस्येत्यर्थः तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते तच्चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतम्बोध्यम् तथाहि यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकन्धूम इति ज्ञानं जातन्तत्र ज्ञाने धूमत्वम्प्रकारस्तत्र धूमत्वेन सन्निकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकज्ञानञ्जायते·

तियोगिकत्वाभावात्सन्निकर्षत्वमयुक्तम् तथापि संयोगस्येन्द्रियप्रतियोगिताकत्वात्तद्घटितस्येन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारीभूतधूमत्वादेः

ग्यतारूपत्वोपगमाद्वाय्वादियोग्यत्वस्य गुरुत्वाद्ययोग्यत्वस्य चोपपादनसंभवात् न चैवं गुरुत्वाभावादीनां गुरुत्वप्रतियोगिकाभावत्वेनैकप्रतिबंधकतासंभवेऽपि परमाण्वादितद्वृत्तानंतरूपादीनां च मनस्त्वपिशाचत्वादीनां च अभावव्यक्तीनां तत्तद्व्यक्तिप्रतियोगिकाभावत्वेन अनंतप्रतिबंधकताकल्पनेन गौरवमपरिहार्यमेवेति वाच्यं योग्यमात्रप्रतियोगिकत्वे सति योग्यमात्रधर्मावच्छिन्नप्रतियोगिताकान्यसंसर्गाभावत्वेनैकप्रतिबंधकतायाः प्रदर्शनायैव एतादृशयोग्यतानिर्वचनादिति ध्येयं अथैवमपि पिशाचत्वादीनां संसर्गाभावप्रत्यक्षानुपपत्तिरशक्यसमाधिरेव निरुक्तप्रतिबंधकतावच्छेदकधर्माक्रांतत्वात्तेषामभावानामिति चेन्न अन्योन्याभावभिन्नत्वरूपसंसर्गाभावत्वस्यापि पिशाचत्वाभावाभावेन प्रतिबंधकतावच्छेदकानाक्रांतत्वात्॥ ६॥

र॰॥ पिशाचत्वात्यंताभावस्य पिशाचभेदसमनियतत्वेन तया तद्भिन्नत्वाद्दृश्यमानाऽन्योन्याभावयोग्यतायास्तत्र सत्त्वाच्च न प्रत्यक्षानुपपत्तिः यद्वा समनियताभावानामैक्यमते पिशाचत्वाभावप्रत्यक्षानुपपत्तिरिति विभाव्य ते तदास्तु पिशाचत्वं नास्तीति प्रतीतावपि पिशाचभेद एव विषयः मणिकारमते मूले महीरुहो न विहंगमसंयोगीति प्रतीतेर्विहंगमसंयोगात्यंताभावविषयकत्ववत् प्रकृतग्रंथस्य समनियताभावैक्यपक्षमवलंब्यैव प्रवृत्तिरित्यस्यापि सुवचत्वाच्च तस्यैकपक्षमवलंब्यैव हीतो पयोग्यानुपलब्धेः पूर्वं हेतुतांगीकारस्यापि सयुक्तिकत्वाच्चेति विभावनीयं सुधीभिः ननु प्रतियोगिनिष्ठयोग्यतायाः संसर्गाभावे असत्त्वात्कथं तस्याः ससंसर्गाभावयोग्यतात्वमित्यभिप्रायेणाह योग्यमात्रेति द्रव्यसामान्याभाववारणायेति तत्प्रत्यक्षवारणायेत्यर्थः ॥ एवमग्रेपि गुरुत्ववदृष्टात्यंता

दि॰॥ तच्च सामान्यस्वरूपञ्च अत्र यदीतिइन्द्रियसम्बद्धं सामान्यम्प्रत्यासत्तिरित्युच्यमानेन तदेत्यर्थः ननु यत्र चक्षुःसन्निकर्षेण धूम इति ज्ञानञ्जातं तत्र चक्षुःसंयोगविगमेपि तादृशज्ञानमाशायेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारस्य धूमत्वादेर्धूमान्तरे सत्त्वाद्धूमान्तराणां सामान्यलक्ष

णु॰॥ अत्र यदीन्द्रियसम्बद्धमित्येवोच्यते तदा धूलीपटले धूमभ्रमानन्तरं सकलधूमविषयकज्ञानन्नस्यात् तत्र धूमत्वेन सहइन्द्रियसम्बन्धाभावात् मन्मते तु इन्द्रियसम्बद्धन्धूलिपटलं तद्विशेष्यकन्धूम इति ज्ञानन्तत्र प्रकारीभूतन्धूमत्वम्प्रत्यासत्तिः

णायाज्ञानापत्तिः न च तदा धूमो नेन्द्रियसम्बद्धः ज्ञानलक्षणात्मकसन्निकर्षस्य धूमे सत्त्वात् न च तत्रैकक्षणे सामान्यलक्षणाजन्यज्ञानस्वीकारे क्षतिविरह इति वाच्यम् ॥ १आवेत्यस्य गुरुत्वावच्छिन्नघटादिनिष्ठप्रतियोगिकात्यंताभावोर्थस्तेन गुरुधर्मस्य प्रतियोगितानवच्छेदकतया गुरुत्वघटत्वोभयधर्मावच्छिन्नाभावस्याप्रसिद्धत्वेपि न क्षतिः अत एव नात्रमात्रपदव्यावृत्तिसंभवतीति तद्व्यावृत्तिमन्यत्रैव दर्शयति रूपेति रूपस्य गुरुत्वस्यैव सत्त्वादुभयावच्छिन्नाभावस्याप्रसिद्ध्या अन्यतरावच्छिन्नेति एतच्चापाततः रूपवान्नास्तीति यत्र प्रतीतिस्तत्रैवान्यतरवान्नास्तीति प्रतीतेर्लाघवाद्रूपमात्रस्यैव तादृशप्रतियोगितावच्छेदकत्वौचित्यान्मात्रपदप्रयोजनं रूपावच्छिन्नाभावप्रत्यक्षवारणमेवउद्भूतानुद्भूतरूपयोर्योग्यायोग्ययोर्द्वयोरेव तदभावप्रतियोगितावच्छेदकत्वादिति मंतव्यं योग्यसंनिकर्षेति इंद्रियसंयुक्तयोग्यविशेषणरूपाभावग्राहकसंनिकर्षप्रदर्शनपरमेवेदं न त्वन्योन्याभावयोग्यताप्रदर्शनपरमिति भावः तेनेति एतादृशसन्निकर्षेणैवाभावग्राहकत्वेनेत्यर्थः ॥

का॰मु॰ दि॰ रा॰ १२५ ॥ अन्योन्याभावयोग्यतायामूलेऽनुक्तत्वात्तामेवाह अन्योन्येति नन्वेतादृशयोग्यतायाः किमित्यन्योन्याभावप्रत्यक्षप्रयोजकताकल्पनीयेत्याशंकायामाह तेनेति पिशाचभेदप्रत्यक्षोपपत्तयेऽजात्यवच्छिन्नप्रतियोगिताकत्वोपादानं घटवदन्योन्याभावादेः प्रत्यक्षोपपत्तयेऽजात्यतिरिक्तेत्यादि उपात्तमितिबोध्यं ॥ नन्विंद्रियसन्निकृष्टयोग्यविशेषणता अभावग्राहकसन्निकर्ष इत्युक्तं तत्र योग्यत्वं महत्त्वोद्भूतरूपावच्छिन्नत्वमेवा

दि॰॥ तन्मूलकज्ञानधारापत्तेर्दुर्वारत्वात् इत्यत आह लौकिकोग्राह्य इति अत्र लौकिकसन्निकर्षस्य विशेषणाविधया घटकत्वम्बोध्यम् अन्यथा तत्र धूमे पूर्वकालीनचक्षुः संयोगमादायतद्दोषतादवस्थ्यमिति ध्येयम् इदमुपलक्षणम् यत्र चक्षुः संयोगे विद्यमाने पि दोषवशात् न धूमचाक्षुषं किन्तु धूमत्वप्रकारकं स्मरणम् तत्र धूमत्वसामान्यलक्षणाजन्यज्ञानापत्ति

मु॰॥ इन्द्रियसम्बन्धश्च लौकिकोग्राह्यः ॥ ६ ॥

वारणाय सामान्यलक्षणाघटकज्ञानेनेन्द्रियजन्यत्वस्य वाच्यत्वात् नन्विन्द्रियसम्बद्धेत्यत्र लौकिकः सम्बन्धः ज्ञानप्रकारेत्यत्र ज्ञानस्येन्द्रियजन्यत्वञ्चेद्विवक्षितं तत्तदाणुत्वेन यत्किञ्चिदणूपस्थितावणुत्वसामान्यलक्षणया सकलाणुगोचरो मानसो बोधो न स्यात् तदाणौ मनसो लौकिकसम्बन्धस्य ज्ञाने मनोजन्यत्वस्य चाभावादत आह ॥ ६ ॥ ६ ॥

न्यस्य दुर्वचत्वात्तथा च परमाणौ महत्त्वाभावस्य वायावुद्भूतरूपाभावस्य च प्रत्यक्षं न स्यादित्यत आह अन्यत्र विस्तर इति अयं भावः महत्त्वाभावप्रत्यक्षे इंद्रियसंयुक्तोद्भूतरूपविशेषणतासन्निकर्षः उद्भूतरूपाभावप्रत्यक्षे चेंद्रियसंयुक्तमहद्विशेषणतैव सन्निकर्षः कारणमतो नानुपपत्तिरिति सन्निकर्ष इतीति ननु सन्निकर्षत्वमिंद्रियसंबंधत्वमेव तदपि सामान्यस्येंद्रियप्रतियोगिकत्वाभावेन दुरुपपादमेवेत्याशंकां समाधत्ते यद्यपीति प्रत्यासत्तिनानिर्वाह इति यद्यप्येवमपि ज्ञानलक्षणयोग॰ ॥ रा॰म॰ १२८

का॰मु॰ दि॰ श॰ १४३ रा॰ च्छेदकसम्बन्धेनतत्प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्धेः नचतत्तद्वन्हिव्यक्त्यभावएवलक्षणघटकोस्त्विति वाच्यम् रूपवान्पृथिवीत्वादित्यादौविषयतया रूपत्ववतोऽभावमादाया व्याप्तिवारणायप्रतियोगितावच्छेदकतायांसाध्यतावच्छेदकताघटक

दि॰ सत्ताधिकरणत्वेपीतितथाचविशिष्टसत्ताभावोनप्रतियोगिव्यधिकरणः अभावान्तरप्रतियोगितायाश्चानवच्छेदकमेववि शिष्टसत्तात्वमित्यतिव्याप्तिरितिभावः नक्षति नोतिव्याप्तिः एवमग्रेपि ननुप्रतियोगितावच्छेदकसम्बन्धेनैवप्रतियोग्यनधिक रणमुच्यतांतावतापिज्ञानवान्सत्वादित्यादावतिप्रसङ्गादित्यत आह इत्यस्येति साध्यतावच्छेदकसम्बन्धेनप्रतियोग्यनधिक रणविवक्षणेचेत्यर्थः वन्हिविरहसत्वेपीति तथाचप्रतियोगितावच्छेदकसमवायेनप्रतियोगिव्यधिकरणताहशाभाव

सु॰ प्रतियोग्यनधिकरणत्वम्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वंवाच्यम् तेनविशिष्टसत्तावान् ॥ जातेरित्यादौजात्यधिकरणगुणादेर्विशिष्टसत्ताभावप्रतियोगिसत्ताधिकरणत्वेपिनक्षतिः अत्रसाध्यता वच्छेदकसम्बन्धेन ॥ प्रतियोग्यनधिकरणत्वम्बोध्यम् तेनज्ञानवान्सत्वादित्यादौसत्ताधिकरणघटादे विषयतयाज्ञानाधिकरणत्वेपिनक्षतिः इत्थञ्चवन्हिमान् धूमादित्यादौधूमाधिकरणेसमवायेनवन्हि विरहसत्वेपिनक्षतिः ॥ ५० ॥

प्रतियोगितावच्छेदकत्वाद्वन्हित्वस्याव्याप्तिः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वेनाग्रिमप्रतियोगिताविशेषणेतुसम्बन्ध द्वयप्रवेशेनगौरवमितिभावः नक्षतिः नाव्याप्तिः समवायेनवन्ह्यभावस्यसाध्यतावच्छेदकसंयोगेनप्रतियोग्यनधिकरण हेत्वधिकरणवृत्तित्वाभावादितिभावः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ऽऽ सम्बन्धावच्छिन्नत्वनिवेशस्यावश्यकतयातद्धर्मा॰ धर्म॰ त्वभावप्रतियोगितावच्छेदकतायास्तत्तत्सम्बन्धावच्छिन्नत्वाभावेनतत्यलक्षणघटकत्वात् नचतद्गुणादिजन्यतावच्छेदकवैजात्यावच्छिन्ना १४३

रा० भाव एव तथाविधः प्रसिद्ध इति निवाच्यम् एवमपि तद्रूपप्रतियोगिकत्वविशिष्टसमवायेन तद्रूपसाध्यकसद्धेतावगतेस्साध्यस्यैव तत्तेन सम्ब-
न्धेनाधिकरणप्रसिद्धेरिति चेन्न विशेषरूपेण संसर्गतानभ्युपगमात् तदभ्युपगमे तु साध्यतावच्छेदकसम्बन्धसामान्ये यदभावप्रतियोगि-
तावच्छेदकावच्छिन्नप्रतियोगिकत्वपर्वताद्यनुयोगिहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः तादृशाभाव एव हेत्वधि-
करणे प्रतियोगिव्यधिकरण इति निर्वचनीयं एवञ्च घटाभावादिरेव तादृशः प्रसिद्ध इति यत्किञ्चिद्घटादिसंयोगवह्नित्वावच्छिन्नप्रति-
योगिकत्वपर्वताद्यनुयोगिकत्वोभयाभावसत्त्वात् वह्न्यभावस्यापि हेत्वधिकरणे प्रतियोगिव्यधिकरणत्वापत्त्या वह्निमान्धूमादित्यादावव्या-

दि० तत्सामान्यस्य प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्य यत्किंचिदिति यत्किंचिद्यत्प्रतियोगितावच्छेदकत्वं तदवच्छिन्नसा-
मान्यस्यैवेत्यर्थः पूर्वक्षणवृत्तित्वविशिष्टेति पूर्वक्षणवृत्तित्वविशिष्टस्य स्वस्य घटाभावादेर्योऽभावस्तदात्मके इत्यर्थः घटाभावा-

मु० ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधिकरणत्वं तत्सामान्यस्य वा य-
त्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वा विवक्षितम् आद्ये कपिसंयोगी एतद्वृक्ष-
त्वादित्यत्र तथैवाव्याप्तिः कपिसंयोगाभावस्य हि प्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसं-
योगोऽपि भवति तदनधिकरणं वृक्ष इति॥

द्यधिकरणेऽपि पूर्वक्षणवृत्तित्वविशिष्टघटाभावादेरभावस्योत्तरक्षणा-
वच्छेदेन सत्त्वादिति भावः ॥ ३ ॥ ६ ॥ ७ ॥

प्तिरतः सामान्यपदम् व्यभिचारिणि साध्याभावस्य लक्षणघटकत्वोपपत्तये यत्किंचित्प-
दं तेनायोगोलकं यत्किंचित्पदेनोपपाद्योभयाभावोपपत्तेर्लक्षणघटकता साध्याभावस्यापीति ध्येयम् एवं विशेषरूपेण संसर्गताभ्युप-
गमे यत्र वह्नित्वप्रतियोगिकसमवायेन वह्नित्वस्य साध्यतावच्छेदकता तत्र हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतायाः साध्य-
तावच्छेदकताघटकसंबन्धावच्छिन्नाया अप्रसिद्धा अव्याप्तिरतः प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्न-
निवेशनीयम् परन्तु अव्याप्तिवारणाय साध्यतावच्छेदकताघटकसम्बंधावच्छिन्नावच्छेदकतीयस्वरूपसम्बन्धेन प्रतियोगितावच्छेदक-
त्वाभावो विवक्षणीय इति विभावनीयम्॥

टि॰ नच पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावादेरभावः स्वाभावस्य प्रतियोगीन घटाभावादेरितिवाच्यम् पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावादेर्योऽभा
वस्तदभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावरूपस्य घटाभावानतिरेकितया विशिष्टघटाभावप्रतियोगिनस्तस्य शुद्धघटाभावप्रतियोगित्वात्
तथाच प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽसम्भव इतिभावः घटाभावात्मकतयेति अभावाधिकरणकाभावस्याधिकरणानतिरिक्तत्वादि
तिभावः इत्यादावित्यादिना अभावसाध्यकसद्धेतुमात्रपरिग्रहः स्वरूपसम्बन्धइति अभावीयविशेषणतेत्यर्थः पूर्वक्षणवृत्तित्वविशिष्टस्या
भावेति पूर्वक्षणवृत्तित्वविशिष्टं यत्स्वं घटाभावादिस्तदभावात्मकेत्यर्थः प्राचाम्मतेद्रव्ये संयोगसामान्याभावानङ्गीकारादाह कपीति घ

मु॰ हितीयेतु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रति
योगिसमानाधिकरणत्वात् नचवह्निमान्धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकंप्रति
योग्यधिकरणत्वम् यद्यपि पर्वतादेस्तथापि साध्यतावच्छेदकसम्बन्धेनतत्प्रतियोग्यनधिकरणत्वमस्त्येवेति क
थम्प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरितिवाच्यम् घटाभावेयोवह्न्यभावस्तस्य घटाभावात्मकतया घटाभाव
स्य वह्निरपि प्रतियोगीतदधिकरणञ्च पर्वतादिरित्येवङ्क्रमेण प्रतियोग्यधिकरणस्य प्रसिद्धत्वात् यदिघटाभा
वादौ वह्न्यभावादिर्भिन्नइत्युच्यते तथापि धूमाभाववान्वह्न्यभावादित्यादावव्याप्तिः तत्र साध्यतावच्छेदकसम्बन्धः
स्वरूपसंबन्धस्तेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरण-
ऽस्येति॥ ३॥

टाभावीययत्किंचित्प्रतियोगितावच्छेदकघटत्वावच्छिन्नानधिकरणत्वस्य हेत्वधिकरणेसम्भवान्नप्रतियोगिव्यधि
करणाभावाप्रसिद्धिनिबन्धनाव्याप्तिः सम्भवतीतिभावः घटत्वहेतुके यत्किञ्चित्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्ना॥ ३॥ राम॰ १४४
रामरुद्री॰ मूलेभिन्नइत्युच्यतइति अन्यथावह्निमतिपर्वतप्रदेशेवह्निर्नास्तीतिघटवतिवह्निशून्येघटोनास्तीतिप्रत्ययस्यचापत्तेरितिभावः॥

दी० द्वितीयविवक्षेति यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वविवक्षानुसारेणेत्यर्थः अप्रतियोगिपदेनेति इदञ्चयथाश्रुतमू

टि० नधिकरणत्वं हेत्वधिकरणस्य घटादेर्नसम्भवति उत्पत्तिकाले घटे गुणसामान्याभावसत्वादत आत्मपर्यन्तानुधावनम् तृतीयविव क्षानुसारेणसमाधत्ते यादृशेति यादृश्याः प्रतियोगितायाअवच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत्तस्तादृशप्रतियोगितानवच्छेदकता नाश्रयत्वमित्यर्थः विवक्षितत्वात् अप्रतियोगिपदेन विवक्षितत्वात् कपिसंयोगाभाववानात्मत्वादित्यादौ गुणसामान्याभावत्वावच्छिन्न प्रतियोगिताया एव यादृशप्रतियोगितापदेनोपादातुंशक्यतया तदनवच्छेदकत्वस्य कपिसंयोगाभावत्वे सत्वान्नाव्याप्तिरिति भावः अत्र

मु० तृतीयेतु कपिसंयोगाभाववानात्मत्वादित्यादावव्याप्तिः तत्रात्मवृत्तिः कपिसंयोगाभावाभावः कपिसंयोगस्तस्य गुणत्वात्तत्प्रतियोगितावच्छेदकगुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मन इतिमैवम् यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् ननु कालो घटवान्कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामेवाभावानां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतया प्रतियोग्य धिकरणत्वात् अत्र केचित् महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणो महाकालस्य घटाधार त्वेपि महाकालभेदविशिष्टघटानाधारत्वात् महाकाले महाकालभेदाभावात् ॥१॥ ॥२॥ ॥२॥ ॥७॥ ॥६॥

चयद्धर्मविशिष्टानधिकरणत्वं हेत्वधिकरणस्य तद्धर्मभिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य लघोर्निर्दुष्टत्वसम्भ वेपि यथासन्निवेशेन वैयर्थ्यमिति भावः साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वविवक्षणेऽव्याप्तिमाशङ्कते ननु इति महा कालभेदविशिष्टघटाभावइति अभावीयकालिकविशेषणताघटितसामानाधिकरण्यसम्बन्धेन महाकालभेदविशिष्टस्य घटस्याभा वइत्यर्थः ॥७॥ ॥७॥ ॥२॥ ॥७॥ ॥२॥ ॥४॥ ॥२॥ ॥२॥ ॥७॥ ॥७॥ ॥२॥ ॥त्वाभिप्रायेणोक्तम् वस्तुतस्तादृशप्रतियोगि॥ २॥ ॥२॥७॥

का॰मु॰ ग॰ तानवच्छेदकत्वमेव साध्यतावच्छेदके विवक्षणीयम् अन्यथा वन्हिमान्धूमादित्यत्रैवाव्याप्तेः पूर्वमुपदर्शितत्वादिति बोध्यम् अत्र
दि॰ग॰ चेति साध्यतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नवदन्यत्वं हेतुमत्तस्तदन्यसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः
१४५ नच प्रतियोगितानवच्छेदकेऽनन्तधर्मभेदनिवेशे गौरवमिति वाच्यम् गुरुधर्मस्यापि प्रतियोगितावच्छेदकमते गुरुधर्मघटितकम्बुग्रीवा
दिमद्भेदस्याप्यप्रसिद्ध्यासाम्यादिति भावः अभावीयविशेषणतेति दैशिकविशेषणतेत्यर्थः नत्वभावप्रतियोगिकविशेषणतेति तदर्थः तथा
सति कालिकविशेषणतया अप्यभावप्रतियोगिकत्वेन तद्व्यावृत्तेरसम्भवादेवमग्रेऽपि बोध्यम् महाकालभेदाभावादित्यर्थ इति ननु दै

दि॰ महाकाले महाकालभेदाभावादिति अभावीयविशेषणतासंबंधेन महाकालभेदाभावादित्यर्थः सामानाधिकरण्य
घटकीभूतविशेषणविशेष्यसंबंधाप्रवेशे च विशेषणविशेष्योभयसत्त्वं तत्रैव विशिष्टाधिकरणत्वोपगमादिति भावः ननु म

मु॰ वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगि
तासामान्ये यत्सम्बन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतु
व्यापकत्वं बोध्यम् ॥ व्यापकसामानाधिकरण्यं च व्याप्तिः यत्संबंधः साध्यतावच्छेदकसंबंधः यद्धर्मः
साध्यतावच्छेदकः ॥

हाकालमात्रवृत्तिविशेषणतासम्बन्धेन साध्यतायां महाकालान्यत्वविशिष्टघटाभावोऽपि न
प्रतियोगिव्यधिकरणस्तत्र तेन सम्बन्धेन महाकालान्यत्वविशिष्टघटाधिकरणाप्रसिद्धेरत आह वस्तुतस्त्विति ॥ ९ ॥ छ्री

शिकविशेषणतायां महाकाले महाकालभेदासत्त्वेऽपि कालिकसम्बन्धेन तत्र महाकालभेदविशिष्टघटसत्त्वोबाधकाभावः तेन सम्बंधेन तस्य
गदाधारत्वादित्याशङ्कायामाह सामानाधिकरण्येति विशेषणेति विशेषणविशेष्यप्रतियोगिकसंसर्गाभ्यामित्यर्थः महाकालमात्रवृत्ती
ति महाकालानुयोगिकविशेषणतायास्साध्यत्व इत्यर्थः अप्रसिद्धेरिति यद्यपि पूर्वोक्तोभयाभावघटितप्रतियोगिवैयधिकरण्यप्रवेशेग ग्म॰
गनाभाव एव तत्रापि प्रसिद्ध्यति तथापि यत्र नानाधिकरणसम्बन्धेन महाकालत्वविशिष्टस्यैव ॥ ९ ॥ ९ ॥ ॥ ७ ॥ ७ ॥ ७ ॥ ९ ॥ १४५

रा०अन्यथापूर्ववृत्तिताघटितशाब्दादृकारणत्वं गगनादीनस्यादृवृत्तित्वप्रवादस्तु कालिकदिक्कृतविशेषणतातिरिक्तसंसर्गेणावृत्तित्वादेवअ
नष्वत्त्वगतमांश्रयोमत इति मूलमपिसङ्गच्छत इति भावः ननु प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमनर्थकम् प्रतियोगितावच्छेद

टि०अत्रप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्न
प्रतियोगितानवच्छेदकत्वघटितलक्षणकरणेपि कालो घटवान्कालपरिमाणादित्यादावव्याप्तिस्तदवस्थैवसाध्यतावच्छेद
कसम्बन्धावच्छिन्नतादृशप्रतियोगिताया अप्रसिद्धेरतः प्रतियोगिताधर्मिकोभयाभावपर्यन्तानुधावनम् समवायेन ——— व
ह्न्यभावप्रतियोगितायां वह्नित्वावच्छिन्नत्वसत्वात्संयोगेन घटाभावप्रतियोगितायां साध्यतावच्छेदकसंयोगावच्छिन्नत्वस्य

सु०इत्यपञ्च कालो घटवान्कालपरिमाणादित्यादौ संयोगसंबंधेन घटाभाव प्रतियोगिनोपि घट ——— स्यान
धिकरणे हेत्वधिकरणे महाकाले वर्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायाङ्कालिकसम्बन्धाव
च्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्वान्नाव्याप्तिः ननु प्रमेयवह्निमान्धूमादित्यादौ प्रमेयवह्नित्वावच्छि
न्नत्वमप्रसिद्धम् गुरुधर्मस्यानवच्छेदकत्वादिति चेन्न कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादि
मत्वावच्छिन्न प्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादिति सङ्क्षेपः॥ ६९ ॥

त्वात् वह्निमान्धूमादित्यादावव्याप्तिवारणाय यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वयोर्निवेशः संयोगेन घटाभावप्रतियोगि
तायां धूमत्वावच्छिन्नत्वघटितोभयाभावसत्वादतिव्याप्तिवारणाय सामान्ये इति त्वप्रसिद्धमिति तथा चाव्याप्तिरिति भावः।
यदि च कम्बुग्रीवादिमान्नास्तीत्यादौ कम्बुग्रीवादिमत्प्रतियोगिताकाभावस्य विषयो न तु कम्बुग्रीवादिमत्वेन प्रतियोगितावच्छेदकत्वमपीत्युच्यते। न दायत्किंचिद्वह्निघटवत्यपि कम्बुग्रीवादिमान्नास्तीति वाक्यस्य प्रामाण्यापत्तिरिति हृदि निधाय संक्षेप इति ६९

कसंबधेन प्रतियोगिवैयधिकरण्यनिवेशे समवायादिना घटाद्यभावस्यैव प्रसिद्धिसम्भवादित्याशङ्क्य तथोक्तावपि समवायेन वन्ह्यभावमादायाव्याप्तिवार

का॰मु॰ रा॰ योगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यावश्यनिवेशनीयतया समवायेन घटाद्यभावीयतादृशप्रतियोगित्वाप्रसिद्ध्या अव्या
दि॰ग॰ प्तितादवस्थ्यादिति समाधत्ते अत्रेति एकैकाभावनिवेशेऽव्याप्तिप्रदर्शनेनोभयाभावनिवेशं सार्थकयति समवायेनेति सामान्यपदमति
१४६ व्याप्तिवारकतया सार्थकयति संयोगेनेति हृदि निधायेति तथाचैतत्सार्थक्यस्यानुक्तत्वेन तदर्थसूचनाय संक्षेपइत्युक्तमितिभावः नन्ववच्छेद
कत्वमवगाहत एव कम्बुग्रीवादिमान्नास्तीति प्रतीतिः किन्तु तत्र स्वरूपसम्बन्धरूपं किन्त्वनतिरिक्तवृत्तित्वं तदपि न प्रतियोगितावच्छेद
शून्यावृत्तित्वं तथा सति गुणे सत्ता नास्तीति प्रतीत्यापत्तेः घटत्वनिष्ठाभावप्रतियोगितावच्छेदकस्य तत्सापि कम्बुग्रीवादिमत्त्वावच्छि
न्नव्यापकतानवच्छेदकत्वादिति न च कम्बुग्रीवादिमत्त्वावच्छिन्नव्यापकतावच्छेदकत्वं तदवच्छिन्नसमानाधिकरणाभावप्रतियोगि

दि॰ मूले पक्षतानिरूपणे सङ्गतेरप्रदर्शनात् तां प्रदर्शयति पक्षवृत्तित्वमित्यत्रेति तथा च प्रकृतस्य परामर्शस्य घटकतया पक्षधर्मत्वमपि प्रकृतं तदुपपादकत्वरूपोपोद्घातसङ्गत्या पक्षतानिरूपणं व्याप्तिनिरूपितैककार्यकारित्वमेव सङ्गतिरि

मु॰ पक्षवृत्तित्वमित्यत्र पक्षत्वङ्किं तत्राह सिषाधयिषाशून्या सिद्धिर्यत्र नास्ति स पक्षस्तत्र वृत्तित्वज्ञाना
दनुमितिर्भवेत् ७० सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता तद्वान् पक्ष इत्यर्थः॥ ६ ॥ ६ ॥ ६ ॥

तिबोध्यम् मूले पक्षतालक्षणस्यास्पष्टतयाऽनुक्तेः पक्षतालक्षणं स्वातन्त्र्येण प्रदर्श्य तन्मूलार्थमाह सिषाधयिषाविरहेति श॰ द॰

तानवच्छेदकत्वमेव वाच्यम् तथा चाप्रसिद्धितादवस्थ्यम् घटसमानाधिकरणाभावप्रतियोगितावच्छेदकत्ववत्त्वापेक्षया कम्बुग्रीवादिमत्त्व त्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य गुरुत्वेन तदवच्छिन्नाभावप्रसिद्ध्या तद्घटितोक्तावच्छेदकताया असंभव इति वाच्यम् कम्बु ग्रीवादिमत्त्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्यत्तद्भेदकूटस्यैव व्यापकतावच्छेदकत्वेनोपगन्तव्यत्वात्तस्य चाप्रसिद्धत्वादि-
ति चेन्नैवम् घटो नास्तीति प्रतीत्या हि घटत्वादेः स्वरूपसम्बन्धरूपमवच्छेदकत्वं सिद्ध्यतीति वक्तव्यम् तत्र च नञर्थाभावे घटस्य घटत्वा रा॰म॰
वच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वय [illegible] दृशप्रतीतिः॥ ६ ॥ ६॥ ७॥ ६॥ १४६

रा०। घटत्वादेरवच्छेदकत्वे मानन्तथा कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वे निरुक्तावच्छेदकत्वानवगाहनात्कथन्तस्य तादृशावच्छे
दकत्वन्तत्प्रतीतिगोचर इति घटो नास्तीतिवदियमपि स्वरूपसम्बन्धरूपमेवावच्छेदकत्वं कम्बुग्रीवादिमत्त्वेऽवगाहत इति तत्त्वाद्गुरुरपि भवत्यवच्छे
दः प्रतियोगिताया इति ग्रन्थकृत्तात्पर्यान्नेन च गुरुधर्मस्वरूपसंबंधरूपावच्छेदकत्वस्य बाधादुक्तप्रतीतौ स्वावच्छिन्नव्यापकतावच्छेदकावच्छि
न्नप्रतियोगितासंबंधेनैव प्रतियोगिनोऽभावे अन्वयोऽभ्युपेयत इति घटो नास्तीत्यादौ तु लाघवाद्घटत्वाद्यवच्छिन्नप्रतियोगितासंबंधेनैव घटादेरन्वयोऽभ्युपगन्तु

दि०। घनगर्जितेन मेघानुमितिस्थलेऽव्याप्त्यापत्त्या सिषाधयिषामात्रस्य पक्षतात्वन्निषेधयति सिषाधयिषा मात्रन्न पक्षतेति मेघानुमानात्
मेघानुमितेरत एव वक्ष्यमाणदूषणादेव सिषाधयिषाविरहरूपविशेषणस्य प्रयोजनमाह सिद्धौ सत्यामिति अत इति अत्रानुमितिनि
र्वाहकपक्षतासिद्ध्यर्थमिति भावः तत्र सिषाधयिषायां सत्यामसत्यामपीति सत्यामुभयाभावप्रयुक्तस्यासत्यां विशेष्याभावमात्रप्रयुक्त
स्योक्तविशिष्टाभावस्य सत्त्वादिति भावः सिद्धौ सत्यामसत्याञ्चेति सत्यां विशेषणाभावमात्रप्रयुक्तस्यासत्यान्तूभयाभावप्रयुक्तस्य विशि

मु०। सिषाधयिषामात्रन्न पक्षता विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात् अत एव साध्यसन्देहोऽपि न पक्षता वि
नापि सन्देहन्तदनुमानात् सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव अतः सिषाधयिषाविरहविशिष्ट
त्वं सिद्धौ विशेषणं तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता यत्र सिषाधयिषास्ति तत्र
सिद्धौ सत्यामसत्यामपि पक्षता यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात्॥९॥

ष्टाभावस्य सत्त्वादिति भावः सिद्धेः सत्त्वादिति सिद्धेः सत्त्वेन तदभावरूपपक्षताया अभावादिति भावः सिषाधयिषावि
रहवैशिष्ट्यञ्च सिद्धावेककालावच्छेदेनैकात्मवृत्तित्वम् तेन सिषाधयिषाकालीनसिद्धेः कालिकसम्बन्धेन सिषाधयिषाविरहवि
शिष्टसत्त्वेऽपि न क्षतिः॥

मुचितमिति वाच्यम् समानाकारकप्रतीत्या एकत्र प्रतियोग्यंशे प्रकारीभूतधर्मावच्छिन्नप्रतियोगितासंसर्गावगाहि
त्वमपरत्र तादृशधर्मावच्छिन्नव्यापकतावच्छेदकधर्मावच्छिन्नप्रतियोगितासंसर्गावगाहित्वमिति कल्पनस्यानुचितत्वेन लाघवादुभयत्रैव
प्रतियोगिविशेषणीभूतधर्मावच्छिन्नप्रतियोगितासंसर्गावगाहिताकल्पनस्यैवोचितत्वेन गुरुधर्मस्य तादृशावच्छेदकत्वमित्यत्रैव प्रमाणादौ लम्भं प्र
तीत्यनुरोधेनैव अवच्छेदकतासिद्धेरुपगन्तव्यत्वादिति ध्येयम् ननु प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे गुरुधर्मा २॥ १॥ ६॥ ७॥

रा० वच्छिन्नसाध्यकाव्याप्त्याशंकैवनसम्भवति। गुरुधर्मस्यसाध्यतावच्छेदकताया असंभवादिति कथमेतदितिचेन्न स्वरूपसंबंधरूपावच्छेदकतायाएवगुरुधर्मेप्राचीनैरंगीकारात् साध्यतावच्छेदकतापाविषयताविशेषरूपत्वेनगुरुधर्मेस्यापि तत्सम्भवादितिहृदयम् पक्षहनित्वमित्यत्रेती तिमूलेकिमुत्तरं इतिपूरणीयम् तथाचपक्षहनित्वघटकमध्यस्थत्वंयज्जिज्ञासाविषयइतिहेतुस्तत्पक्षत्वमाहेत्यर्थः नन्वेतावताकासङ्गतिः प्रदर्शितेत्याशङ्कायामाह तथाचेति नतुपरामर्शनिरूपणानन्तरम्पक्षतानिरूपणेभवतूपोद्घातसङ्गतिः व्याप्तिनिरूपणाव्यवहितोत्तरस्यपक्षतानिरूपणेकासङ्गतिरित्यतआह व्याप्तिनिरूपितेत्यादि एककार्यकारित्वंएककार्यप्रयोजकत्वंप्रयोजकत्वञ्चकारणकारणतावच्छेदक

दि० परामर्शरूपकारणसत्वेसिद्धिरूपविरोधिसत्वेयद्यनुमित्सास्यात्तदातस्याउत्तेजकत्वम्वाच्यन्नचैतत्सम्भवतीत्याशङ्कते नतुयत्रेति परामर्शानन्तरस्यरामर्शद्वितीयक्षणेततः सिद्ध्युत्पत्तिर्द्वितीयक्षणेक्रमेण अव्यवधानेन एवमन्यत्रापीति यत्रपरामर्शसिषाध।

सु० नतुयत्रपरामर्शानन्तरंसिद्धिः ततःसिषाधयिषातत्रसिषाधयिषाकालेपरामर्शनाशान्नानुमितिः यत्रसिद्धिपरामर्शसिषाधयिषाःक्रमेणभवन्तितत्रसिषाधयिषाकालेसिद्धेर्नाशान्प्रतिबन्धकाभावादेवानुमितिः यत्रसिषाधयिषा सिद्धिपरामर्शास्तत्रपरामर्शकालेसिषाधयिषैवनास्ति एवमन्यत्रापिसिद्धिकालेपरामर्शकालेचनसिषाधयिषायोग्यविभुविशेषगुणानांयौगपद्यनिषेधात्॥ ( ) यिषासिद्धयःक्रमेणभवन्तिएवंसिद्धिसिषाधयिषापरामर्शाः एवंसिषाधयिषापरामर्शसिद्धयस्तत्रेत्यर्थःसिद्धिकालेपरामर्शकालेचेतिसिद्धिपरामर्शोभयक्षणइत्यर्थः ॥६॥ ६॥ ७॥ ॥६॥ ६॥ ७॥ ॥

साधारणम् तेनानुमितौपक्षतायाःकारणत्वेपिव्याप्तेर्विषयविधयाकारणतावच्छेदकत्वेपिचनक्षतिः अतएवसद्धेतुनिरूपणानन्तरंहेत्वाभासनिरूपणेप्येककार्यकारित्वसङ्गतिप्रदर्शनन्दीधितिकृतांसङ्गच्छते सोक्तसद्धेतोः परामर्शेनानुमितिजननात् परोक्तप्रतिहेतोर्दुष्टत्वेनज्ञानस्यप्रतिबन्धकनिरासद्वाराऽनुमितावुपयोगाच्चवस्तुतस्तूपोद्घातोपिव्याप्तिनिरूपितासङ्गतिर्भवत्येवतदभिधानानन्तराभिधानाप्रयोजकजिज्ञासाजनकज्ञानविषयत्वस्यैवतन्निरूपितत्तत्सङ्गतित्वात् व्याप्तिनिरूपणानन्तरमप्येकपरामर्शविषयत्वेनपक्षहनित्वस्मरणेपक्षहनित्वघटकंकिंपक्षत्वमितिजिज्ञासोत्यादसम्भवात् अतएवपक्षतानिरूपणानन्तरम्परामर्शस्यकारणताव्यवस्थापनेदीधितिकृतानुमितिलक्षणेपोद्घातसपक्षतानि॥

रा० रूपितसङ्गतित्वमुपपादितं गदाधरभट्टाचार्यैरिति ध्येयम् स्पष्टतयेति सिषाधयिषाविरहविशिष्टसिद्ध्यभावो यत्र स पक्ष इत्युक्ताप्य
र्थात्तादृशाभावः पक्षतेति लाभसम्भवात् स्पष्टतयेत्युक्तम् अव्याप्त्यापत्त्येति पक्षे पक्षताभावापत्त्येत्यर्थः न च सिषाधयिषाविरहविशिष्ट
सिद्धेः समवायेन पुरुषे सत्त्वेऽपि पक्षे तदभावसत्त्वात् पक्षतापत्तिरिति वाच्यम् विशेष्यतासम्बन्धेन वर्त्तत इतिं तदर्थात् अनइतीति चतुर्थ्य
न्तात्तसिरिति भावः एककालेति एकक्षण इत्यर्थः तेन न स्थूलकालमादायातिप्रसङ्गः विरोधिसत्त्वे प्रतिबंधकसत्त्वे अनुमित्सासात् अनु

दि० कथमिति किमर्थमित्यर्थः इति प्रत्यक्षमिति अनुमितीष्टसाधनताविषयकमिति शेषः प्रत्यक्षोत्पत्तेः पूर्वमनुमितीष्टसाधनता
धीस्वीकारे इच्छासामग्र्याप्रतिबन्धात् प्रत्यक्षमेव न स्यात् यादृशयादृशेति घटानुमितिर्जायतामितीच्छासत्त्वेऽपि पर्वतो वन्हिमा

मु० ननु कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न यत्र वन्हिव्याप्यधूमवान् पर्वतो वन्हिमानि
ति प्रत्यक्षं स्मरणं वा ततः सिषाधयिषा तत्र पक्षतासम्पत्तये तद्विशेषणस्यावश्यकत्वात् इदन्तु बोध्यम् यादृश
यादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभाव
स्तल्लिङ्गकानुमितौ पक्षता ॥६॥ तिति सिद्ध्यसत्त्वे वन्हिमानित्यनुमित्युत्पत्तेः पर्वतो वन्हिमानिति सिद्धिसत्त्वेऽपि तदिच्छा
वलात्तादृशानुमित्यापत्तिरत उक्तम् सिद्धिसत्त्व इति इदन्त्वोत्तेजकेच्छादिव्यक्तेः परिचायकं रूपम् उत्तेजकत्वन्तु तत्तद्व्यक्तित्वेनैवे
तिबोध्यम्॥

मित्सावत्त्वेनेत्यर्थः नहीति अन्यथा परामर्शाभावेऽनुमितेरेवानुत्पत्त्या सिषाधयिषाया उत्तेजकत्वकल्पने बीजाभावात् प्रतिबन्ध
कसत्त्वे कार्योत्पादार्थमेवोत्तेजकस्य कल्पनीयत्वात् सिद्ध्यसत्त्वे प्रतिबन्धकाभावादेव कार्योत्पादसम्भवेनोत्तेजकस्यैवानपेक्षितत्वात् सिषाधयि
षाभावे धर्मिणोऽसत्त्वेन कस्योत्तेजकत्वं कल्पनीयमिति भावः सिद्धिमात्रकाले परामर्शमात्रकाले च सिषाधयिषायाः सम्भवात् सिद्धिकाल इत्या
दिमूलमसङ्गतमतो व्याचष्टे सिद्धीति ननु वन्हिमानिति प्रत्यक्षानन्तरं सिषाधयिषैव न सम्भवति इष्टसाधनताज्ञानस्य हेतुत्वादिष्टसाधनताज्ञान
स्य तादृशप्रत्यक्षात् पूर्वमेवोपगमे प्रत्यक्षमेव न सम्भवति बलवदिच्छासामग्र्याप्रतिबन्धात् प्रत्यक्षानन्तरन्तदुपगमे सिषाधयिषाक्षणे प्रत्यक्षमेव न

रा॰ निरासायशेषम्पूरयति अनुमिनोम्यादिपरिचायकंरूपमिति यद्यपीच्छासत्वे सिद्धिसत्वे अनुमितिरित्यनंतरन्तत्तद्व्यक्तित्वेन विशेषेच्छाव्य
क्तीनांज्ञानसम्पादनमित्यर्थः तत्तद्व्यक्तित्वेनैवेत्येवकारेणानुमितिरित्यत्रभावस्योत्तेजकतावच्छेदककोटिकाप्रवेशोव्यवच्छिद्यते ननुयत्कि
ञ्चिज्ज्ञानंजायतामितीच्छैवनसम्भवति सिद्धेवस्तुनिइच्छानुत्पत्तेर्यत्किञ्चिज्ज्ञानस्यसिद्धत्वात् नचसिद्धेपिसिद्धत्वेनाज्ञानदशायामिच्छा
दर्शनान्नानुपपत्तिरितिवाच्यम् सिद्धत्वज्ञानाभावेप्युत्पन्नज्ञानादियंकाविच्छानुत्पत्त्याज्ञानादियेतिरिक्तस्थलएवसिद्धत्वज्ञानस्प्रतिबन्धकं

दि॰ तेनतत्तदिच्छायाउत्तेजकत्वेनयत्किञ्चिज्ज्ञानमित्यस्यैतदुत्तरकालीनमित्यादिः अन्यथायत्किञ्चिज्ज्ञानस्यसर्वदासिद्ध
त्वेनतद्रूपेणेच्छाविरहात् नानुमितिरिति नानुमित्यापत्तिरित्यर्थः तदिच्छायास्तद्व्यक्तित्वेनोत्तेजकत्वानभ्युपगमादितिभावः
नचयत्किञ्चिज्ज्ञानञ्जायतामित्येतादृशेच्छाकालेसिद्धिसत्वेप्यनुमितिर्भवत्येवेतिवाच्यम् अनुमितिसामग्रीसत्वेआत्मादि

मु॰ तेनसिद्धिपरामर्शसत्वेयत्किञ्चिज्ज्ञानञ्जायतामितीच्छायामपिनानुमितिः वन्हिव्याप्यधूमवान्पर्वतो
वन्हिमानितिप्रत्यक्षसत्वेप्रत्यक्षातिरिक्तज्ञानञ्जायतामितीच्छायान्तुभवत्येव॥ ॥ ॥ ॥ ॥

विषयकयत्किञ्चिन्मानसादिसामग्रीसत्वनियमेन यत्किञ्चिन्मानसाद्युत्पत्त्यैवतादृशेच्छाविषयसिद्धेः तत्रानुमित्युत्पत्ताविं
ष्टापत्त्यसम्भवात् नन्वनुमितित्वप्रकारकेच्छात्वेनानुगतरूपेणैवोत्तेजकत्वम्वाच्यम् तावतैवयत्किंचिज्ज्ञानञ्जायतामि
तीच्छावारणसम्भवात्तत्तु तत्तद्व्यक्तित्वेनोत्तेजकत्वङ्कल्प्यम् गौरवादित्यतआह वन्हिव्याप्येति प्रत्यक्षातिरिक्तंज्ञानमित्य
स्यशाब्दसामग्र्यसत्वेइत्यादिः॥
ज्ञानादौतुसिद्धमात्रंविरोधीतिसिद्धान्तात् अतएवोक्तंसिद्धेरिच्छाविरहादिति तत्रतत्रग्रन्थकृद्भिरिति
तोव्याचष्टे एतदुत्तरकालीनेति अनुमितिसामग्रीसत्वइति अनुमितिसामग्र्यभावेतादृशेच्छावलादनुमिताविष्टापत्तिरेवनसम्भवति तत्स
त्वेपरामर्शादिसत्वेनात्मनोमानससामग्रीसत्वेनस्वोत्पत्त्यापीच्छायाविषयसिद्ध्या अनुमित्युत्पादासम्भवाद्यादृशेच्छायाअनुमितिंविनानवि

रा० यत्सिद्धिस्तादृशेच्छाया एवोत्तेजकत्वोपगमादितिभावः ननु वन्हिव्याप्यधूमवान् पर्वतो वन्हिमानिति प्रत्यक्षानन्तरं वन्हेः प्रत्यक्षात्मकं ज्ञानं जायतामितीच्छाबलेन वन्हेर्नानुमितिः सम्भवति वन्हिविषयकशाब्दबोधेनापि तादृशेच्छाविषयसिद्धिसम्भवादित्याशङ्कानिरासाय पूरयति शाब्दसामग्र्यसत्त्वइत्यादिरिति तथा च तदानीं वन्हेश्शाब्दसम्भवेनानुमित्यैवेच्छाविषयसिद्धिर्भवतीत्यभिप्रायः तदिच्छाव्यक्तेरि

दि० शाब्दसामग्रीसत्त्वे शाब्दबोधेनैवेच्छाविषयसिद्धिसम्भवात् भवत्येवेत्यनुमितिरित्यनेन संबध्यते तथा चानुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे तत्रानुमितिर्नस्यादिति भावः तल्लिङ्गकत्वप्रवेशस्य फलमाह एवमित्यादिना नानुमितिरिति इच्छायास्तत्तद्व्यक्तित्वेनोत्तेजकतया तदिच्छाव्यक्तेरनुत्तेजकत्वादिति भावः इदन्तु बोध्यम् पर्वतेवह्न्यनुमितिर्जायतामित्याद्यनुग

मु० एवं धूमपरामर्शसत्त्वे आलोकेन वन्हिमनुमिनुयामितीच्छायामपि नानुमितिः सिषाधयिषाविरहकालेयादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्यैव तत्तदनुमितौ प्रतिबन्धिका वक्तव्या तेन पर्वतस्तेजस्वी पाषाणमयो वन्हिमानिति ज्ञानसत्त्वेप्यनुमितेर्न विरोधः ॥ ७६ ॥ १ ॥ २ ॥ २ ॥

तेच्छानां पर्वतत्वावच्छिन्नोद्देश्यकत्वप्रकारतानिरूपितवन्हिविधेयकत्वप्रकारताशाल्यनुमितिगोचरेच्छात्वेनानुगतरूपेणैवोत्तेजकत्वम् प्रत्यक्षातिरिक्तज्ञानं जायतामित्याद्यनुगतेच्छानां तु न तत्तद्व्यक्तित्वेन न तु सकलेच्छानां तत्तद्व्यक्तित्वे न गौरवादिति ॥ ७ ॥

तिधूमपरामर्शकालीनाया आलोकेन वन्हिमनुमिनुयामितीच्छाव्यक्तेरित्यर्थः अनुत्तेजकत्वादिति पर्वतत्वावच्छिन्नोद्देश्यकवन्हित्वावच्छिन्नलिङ्गकानुमितिप्रतिबन्धकतायाः अनुत्तेजकत्वादित्यर्थः तादृशप्रतिबन्धकतानिरूपितावच्छेदकतावदभावाप्रतियोगित्वादितियावत् ॥ १ ॥ ७ ॥ ७ ॥ ७ ॥ २ ॥ ॥

राऽनुमितिगोचरेच्छात्वेनेति अनुमितित्वावच्छिन्नविधेयकेत्युक्तौ पर्वतोद्देश्यकवन्हिविधेयकज्ञानं मे जायतामित्यादिभानासङ्गत्यापत्ति
रिति तत्परित्यागः न चैतादृशेच्छाया उत्तेजकत्वेपि सिद्धिसत्त्वे पर्वतोद्देश्यकवन्हिविधेयकप्रत्यक्षादिसामग्रीकालेपि तादृशेच्छावलात्ता
दृशानुमित्यापत्तिरिति वाच्यम् प्रत्यक्षोद्देश्यत्वविधेयत्वयोरप्रामाणिकत्वात् न चैवमनुमितिगोचरत्वनिवेशो व्यर्थः तादृशेच्छाया अनुमिति
मात्रविषयकत्वादिति वाच्यम् पर्वतोद्देश्यकवन्हिविधेयकप्रत्यक्षं जायतामितीच्छावलादनुमित्यापत्तिवारणाय तदावश्यकत्वा
त् न चैवमपि शाब्दबोधेप्युद्देश्यत्वविधेयत्वयोरङ्गीकारात्तादृशेच्छावलात्तादृशशाब्दसामग्रीसत्त्वेपि सिद्धिसत्त्वे अनुमित्यापत्तिरिति वाच्य
म् पर्वतो वन्हिमानिति शाब्दबोधे पर्वतेन वन्हिमत एव तादात्म्येन प्रकारतया पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवन्हित्वावच्छिन्नविधेयताया अस
त्त्वात् तादृशवन्हिविधेयताकत्वप्रकारताशालि अनुमितिविषयकेच्छाविषयकेच्छात्वेनैवोत्तेजकताया: स्वीकरणीयत्वात् अथैवम
पि पर्वतेन वन्हिमतस्तादात्म्येन साध्यतायां पर्वते वन्हिमद्विधेयकशाब्दसामग्रीदशायां सिद्धिसत्त्वेपि पर्वतत्वावच्छिन्नोद्देश्यतानिरूपित
वन्हिमत्वावच्छिन्नविधेयताशालि ज्ञानं जायतामितीच्छावलात्पर्वतोद्देश्यकवन्हिविधेयकानुमित्यापत्तेरिति चेन्न शाब्दबोधेप्युद्देश्यता
विधेयतयोरुपगमे एतादृशेच्छानामपि वन्हिविधेयकानुमितिस्थले तत्तद्व्यक्तित्वेनैवोत्तेजकताया: स्वीकरणीयत्वात् लघूपायसम्भवस्थ
ल एव गौरवस्य स्वकर्तुमनुचितत्वात् वस्तुतस्तु शाब्दबोधे विधेयत्वादिकमप्रामाणिकमेव अनुमितावेव तदङ्गीकारस्यावश्यकः अ
न्यथा पर्वतो वन्हिमानित्यनुमितेस्तात्पर्येण पर्वतमनुमिनोमीत्यादिप्रयोगापत्तेरनुमितेर्विधेयत्वादिमत्त्व एवान्यत्र द्वितीयाया विषयि
तार्थकत्वेप्यनुमित्यर्थकधातुसमभिव्याहारे विधेयत्वस्य द्वितीयार्थतामुद्देश्यत्वस्य प्रथमार्थतामुपगम्य तादृशप्रयोगवारणसम्भ
वात् न च प्रकारित्वमेव तत्र द्वितीयार्थोऽस्तु तावतापि पर्वतमनुमिनोमीति प्रयोगवारणसम्भवादिति वाच्यम् ॥ तथापि पर्वतत्वमनुमि
नोमीत्यादिप्रतीत्यापत्तेः अत एवोक्तं गदाधरभट्टाचार्यैरनुमित्यर्थकधातुयोगे विधेयत्वं वा द्वितीयार्थ इति शाब्दार्थकधातुयोगे
तु विषयित्वस्य द्वितीयार्थत्वेपि न क्षतिः यदि तु पर्वतं शृणोमीति प्रयोगापत्तिः पर्वतविशेष्यकशाब्दस्यापि पर्वतविशेष्यकत्वादिति यम
विभाव्यते तदा द्वितीयान्तपदसमभिव्याहारस्थले तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रकारित्वेव द्वितीयार्थोस्तु अतिरिक्तान्तोपा १४९

रा॰०न्पर्वते वन्हिमत्वमृणोमीतिप्रयोगइतिध्येयम्॥ अथैवमपिधूमंपरामर्शमात्रदशायाम्पर्वतोद्देश्यतानिरूपितवन्हिविधेयता॥ कालोकलिङ्गकानुमितिर्जायतामितीच्छाबलाद्धूमलिङ्गकवन्ह्यनुमित्यापत्तिः तादृशेच्छायाऽर्पितादृशसाध्यविधेयकत्वप्रकारकत्वास्त्वनुमितिविषयकत्वाच्च नचकिञ्चिल्लिङ्गकत्वाप्रकारकत्वमपीच्छाविशेषणन्देयमतोनतादृशेच्छाबलादुक्तानुमित्यापत्तिरितिवाच्यम् तथासतितादृशवन्हिविधेयताकाधूमलिङ्गकानुमितिर्जायतामितीच्छासत्त्वेपिधूमलिंगकवन्ह्यनुमितिर्नस्यात् नचतद्धर्मावच्छिन्नलिङ्गकानुमितौतदन्यधर्मावच्छिन्न लिङ्गकत्वानुप्रकारिकैवेच्छोत्तेजिकावाच्येति धूमलिङ्गकत्वप्रकारतायास्संग्रहेभिन्नभिन्न लिङ्गकत्वप्रकारकेच्छायावारणस्त्वसम्भवतीतिवाच्यम्॥ एवमपितादृशवन्हिविधेयताकाधूमलिङ्गकानुमितिरालोकलिङ्गकानुमितिश्चजायतामितीच्छाबलाद्धूमलिङ्गकानुमितेरशक्योपपादनत्वादितिचेन्न मैवंतद्धर्मावच्छिन्नलिङ्गकानुमितौनिरुक्तवन्हिविधेयकत्वप्रकारतानिरूपितातद्धर्मावच्छिन्नलिङ्गकत्वप्रकारकत्वानिरूपितानुमिति निष्ठ

विशेष्यताशालित्वेनैवोत्तेजकत्वस्योपगन्तव्यत्वात् उक्तसमूहालम्बनेच्छायांत्वनुमितौविशेष्यताद्वयमेका धूमलिङ्गकत्वप्रकारतानिरूपिता अपराचालोकलिङ्गकत्वप्रकारतानिरूपिता समूहालम्बनेप्रकारताभेदेनैवविशेष्यताभेदादन्यथाद्रस्सःकपिसंयोगवांस्तदभाववांश्चेतिसमुच्चयस्सद्रस्सःकपिसंयोगीनवेतिसंशयस्यभेदोनस्यादेकधर्मावच्छिन्नविशेष्यकसमूहालम्बनेपिप्रकारताभेदेनविशेष्यताभेदः संशयेचोभयप्रकारतानिरूपितैकविशेष्यतैत्येव तयोर्वैलक्षण्यात् इत्थञ्च धूममात्रलिङ्गकानुमितित्वमेवैतादृशेच्छाविरहविशिष्टसिद्ध्यभावकार्यतावच्छेदकंवाच्यम् अन्यथाधूमालोकोभयपरामर्शाभ्यांधूमलिङ्गकत्ववदालोकलिङ्गकानुमितिर्जायतामित्येकविशिष्टअपरवैशिष्ट्यावगाहिज्ञानबलात्तादृशानुमाने वन्ह्यनुमितावुक्तसिद्ध्यभावस्यव्यभिचारापत्तेः॥ अथवाकिञ्चिल्लिङ्गकत्वाप्रकारकत्वमेवेच्छाविशेषणमुपादेयम्॥ धूमलिङ्गकत्वप्रकारकेच्छायाःपक्षेवोत्तेजकत्वस्यकल्पनीयतयातदसंग्रहान्नदोषायेति कृतम्पल्लवितेन॥ १॥ १॥ २॥ १॥ ८॥ १॥ १॥ १॥ ०॥ ७॥ ०॥

कासु राग।यादृशसिद्धिसत्वेपर्वतोवन्हिमानित्यनुमितिः तादृशसिद्धिः तादृशानुमितौ प्रतिवन्धिकेत्युक्तौतादृशानुमितौपर्वतोवन्हिमानित्या।
दि॰रा कारकसिद्धेरपिप्रतिवन्धकत्वन्नस्यात् तादृशसिद्धिसत्वेपिसिषाधयिषयानुमित्युत्पादादत्त उक्तंसिषाधयिषेत्यादि पर्वतत्वावच्छिन्ने
१५० दि॰सिषाधयिषाकालेपर्वतोवन्हिमानितिसिद्धिसत्वेपिपर्वतोवन्हिमानित्यनुमित्युत्पत्तेस्तादृशसिद्धेर्नतादृशानुमितिम्प्र।
तिप्रतिवन्धकत्वंस्यादत्त उक्तंसिषाधयिषाविरहकालइतिविशिष्येति पर्वतोवन्हिमानित्यनुमितौ पर्वतत्वावच्छिन्नवि
शेष्यतानिरूपितवन्हित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेनप्रतिवन्धकतावक्तव्येत्यर्थः तत्प्रयोजनमाह तेनेति सिद्धेरे
वेत्येवकारेणसामानाधिकरण्येनसिद्धिव्यवच्छेदःसामानाधिकरण्येनानुमितिम्प्रतीत्यिति॥ सामान्याधिकरण्यमात्रेणानुमि।
तिम्प्रतित्वित्यर्थः अन्यथावच्छेदकावच्छेदेनानुमितेरपिसामानाधिकरण्यावगाहित्वपातदवच्छेदप्रतीतेः सिद्धि

मु॰ परंतुपक्षतावच्छेदकसामानाधिकरण्येनसाध्यसिद्धावपितदवच्छेदेनानुमितेर्दर्शनात् पक्षताव
च्छेदकावच्छेदेनानुमितिम्प्रतिपक्षतावच्छेदकावच्छेदेनसाध्यसिद्धिरेव प्रतिवन्धिका पक्षतावच्छे
दकसामानाधिकरण्येनानुमितिम्प्रतितुसिद्धिमात्रंविरोधि इदन्तुवोध्यम्॥ १॥ २॥ ३॥ ४॥

मात्रमिति पक्षविशेष्यकसाध्यप्रकारकनिश्चयत्वेनविरोधित्वमित्यर्थः उपाध्यायास्तुसिषाधयिषाविरहविशिष्ट
स्वसिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षतातेनसिद्धिकालेसमानविषयकप्रत्यक्षसामग्रीकालेचनानुमित्यापत्ति
रित्याहुः स्तद्दूषयितुम्प्रत्यक्षसामग्र्यभावस्यपक्षताकुक्ष्यप्रवेशेप्रत्यक्षसामग्रीकालेकथन्नानुमितिरित्युक्तदृशिष्यजि
ज्ञासानुत्पादार्थम्प्रथमतः स्वसिद्धान्तमाह॥ इदन्तुवोध्यमित्यादिना॥ १॥ २॥ ))तिसिषाधयिषाविरहइत्यादिकम्परित्वायक एम
मात्रं अन्यथाविशेष्येत्यस्यवैयर्थ्यापत्तेरितिभावः [illegible] सामग्रीसत्वेपिसिषाधयिषांविनैवानुमित्युत्पादात् प्र॰॥ १॥ १५०

रा०।त्प्रत्यक्षसामग्रीत्यस्यसमानविषयकप्रत्यक्षसामग्रीपरतान्दर्शयति तेनेति नन्ववह्न्यादौ चक्षुःसन्निकर्षदशायां वह्निव्याप्यधूमवान्पर्वत इतिज्ञानवत्तो वह्नेः प्रत्यक्षेणानुमितिरित्येव मूलेकुतो नोक्तं किं संशयोत्तरप्रत्यक्षस्थलानुरोधेनेत्याशङ्कानिरस्तुमाह एतादृशेति तद्विषये प्रत्यक्षविषये विषयित्वं सप्तम्यर्थः तस्य चानुमितावन्वयः तथा च प्रत्यक्षविषयसाध्यविषयिकानुमितिसामग्रीप्रदर्शनार्थमित्यर्थः स्वातन्त्र्येणेति प्रत्यक्षसामग्र्यनन्तर्गतत्वेनेत्यर्थः प्रयासापत्तेरिति एकसामग्रीप्रदर्शनेनैवोभयसामग्रीप्रदर्शनोपपत्तौ पृथक्सामग्रीप्रदर्शनस्यानुचितत्वादितिभावः ॥ ननुपक्षताकुक्षिप्रविष्टत्वेन प्रतिबन्धकत्व एवलाघवम् एकप्रतिबन्धकतयैवोपपत्तेरित्याशङ्कानिरासकतुमे।

दि०।संशयोत्तरप्रत्यक्षस्थलोत्पत्तिहेतुभूतस्य विशेषदर्शनस्य सत्त्वादितिभावः एतादृशप्रत्यक्षसामग्रीविशेषपर्यन्तानुधावनञ्च तद्विषयेऽनुमितिसामग्रीसम्पत्तिप्रदर्शनार्थं स्वातन्त्र्येणानुमितिसामग्रीप्रदर्शनेनप्रयासापत्तेः स्वातन्त्र्येणेति ननुपक्षताकु

सु०।यत्रायम्पुरुषोनवेति संशयानन्तरम्पुरुषत्वव्याप्यकरादिमानयमितिज्ञानम् तत्रासत्यामनुमित्सायाम्पु रुषस्य प्रत्यक्षम्भवतिनत्वनुमितिः अतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्रीकामि नीजिज्ञासादिवत्स्वातन्त्र्येणप्रतिबन्धिका॥ ६ ॥ ६ ॥ ७ ॥ ६ ॥ (क्षिप्तविष्टत्वेनेत्यर्थः शाब्दसिद्धौसत्यामश शाब्दज्ञानञ्जायतामितीच्छायामनुमितेरुत्पादात्सिद्धावनुमितिगोचरेच्छात्वेनतादृशेच्छाकाले प्रत्यक्षसामग्रीकालेऽनुमित्य नुत्पादेनसामग्र्यामनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वस्यावश्यकतयाएकरूपेणोत्तेजकत्वासम्भवात्॥ ६॥ ९६॥ ७॥

कप्रतिबन्धनैवनसंभवति भिन्नभिन्नरूपेणेवेच्छायाः सिद्धौसामग्र्याश्चोत्तेजकत्वस्यवाच्यत्वादित्याह शाब्देत्यादिनीलइत्यादि[illegible]त्यादित्यर्थः पर्वतोवह्निमानित्यादिवाक्यात्सिद्धेरप्रतिबन्धकत्वम्बोध्यम् अनुमितिगोचरेच्छात्वेनेति यथोक्तानुमितिगोचरेच्छानिष्ठत[illegible]त्यर्थः उ क्तानुगतेच्छानान्तद्व्यक्तित्वेनैवोत्तेजकतायाः पूर्वमुक्तत्वादितिध्येयम् अनुमित्यनुत्पादेनेति प्रत्यक्षेणैवतादृशेच्छाया[illegible]सिद्धिसंभ वादितिभावः अनुमितित्वप्रकारकेच्छात्वेनेति यद्यप्येवं सतिवह्निप्रत्यक्षसामग्रीकालेप्रत्यक्षातिरिक्तं ज्ञा०॥ ६॥ ॥ श्री ॥ श्री ॥ ६॥

का॰मु॰ रा॰ननं तत्रायन्तामितीच्छायाचवह्नेरनुमितिर्नस्यात् तथापिप्रत्यक्षान्यत्वप्रकारकेच्छात्वेनापिप्रत्यक्षसामग्र्याउत्तेजकत्वस्यकल्पनीयत्वाददोषः

दि॰ ए॰ ॥ चक्षुस्संयोगादिरूपेति यद्यपिचक्षुस्संयोगमात्रन्नसामग्रीतथाप्येकक्षणवृत्तित्वसम्बन्धेनतत्पुरुषीयविशेषणज्ञानादिविशिष्टचक्षुस्स

१५१ योगस्सामग्रीत्वसम्भवोबोध्यः विजातीयेति परमात्ममनसोः संयोगव्यावृत्तवैजात्यावच्छिन्नेत्यर्थः स्वातन्त्र्येणेति पक्षताकुक्षप्रविष्ट

दि॰ एवमुभयत्रसिषाधयिषाविरहस्यनैकसम्बन्धेनविशेषणत्वंसिद्धौसमवायघटितसामानाधिकरण्येनचक्षुःसंयोगादिरूपसामग्र्यास्तुस्वाश्रयचक्षुःसंयुक्तमनःप्रतियोगिकविजातीयसंयोगघटितसामानाधिकरण्येनेत्येकरूपेणतयोःप्रतिबन्धकत्वासंभवादित्याशयइतिदिक् नन्वनुमितिम्प्रतिप्रत्यक्षसामग्र्याःस्वातन्त्र्येणप्रतिबन्धकत्वेभिन्नविषयेपिप्रत्यक्षसामग्रीकालेऽनुमित्यनुपपत्तिःमन्मतेतु अनुमानातिरिक्तप्रकृतसाध्यसाधकमानत्वेनपक्षताकुक्षौतस्याः प्रवेशेनो

मु॰ एवम्परामर्शानन्तरम्विनाप्रत्यक्षेच्छांपक्षादेःप्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्रीभिन्नविषयकप्रत्यक्षेप्रतिबन्धिका ॥ ७० ॥ श्री॰ ॥ ॥ श्री॰ ॥ ॥ ६ ॥ ॥ ६ ॥ ६ ॥

क्तापत्त्यनवकाशादत आह एवमिति अनुमितिसामग्रीप्रतिबन्धकेति तथाचभिन्नविषयकानुमितिसामग्र्यभावघटितप्रत्यक्षसामग्र्यास्तत्राभावान्नपूर्वोक्तस्थलेऽनुमित्यनुपपत्तिरितिभावः यद्वानुमितिसामग्रीप्रतिबन्धिकाऽनुमितिसामग्र्येवप्रतिबन्धिकानत्वनुमित्तेविषयेप्रत्यक्षसामग्र्यनुमितौप्रतिबन्धिकेत्यर्थः तथाचप्रत्यक्षसामग्र्याः समानविषयकानुमितिम्प्रत्येवप्रतिबन्धकत्वयानपूर्वोक्तानुमित्यनुपपत्तिरितिभावः ॥ ७० ॥ श्री॰ ॥ ॥ श्री॰ ॥ ॥ ६ ॥ ६ ॥ ६ ॥ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

त्वेनेत्यर्थः प्रत्यक्षसामग्रीत्वप्रमाणेतियावत् अनुमानातिरिक्तेति सिषाधयिषाविरहविशिष्टसिद्ध्यनुमित्युपधायकातिरिक्तसिद्ध्युपधायकान्यतरत्वेन प्रतिबन्धकत्वादितिपर्यवसितोऽर्थः यथाश्रुतेतत्त्वचक्षुषोऽनुमित्यनुपपत्तेरितिबोध्यम् ननुप्रत्यक्षसामग्रीयथाभिन्नविषयकानुमितिसाम ग्रीम १५१

ग्र्याअभावघटितत्वप्रतिबन्धिका ॥ ६ ॥

रा०। षयकानुमितिसामग्र्यपि प्रत्यक्षसामग्र्यभावघटितेति भिन्नविषयकप्रत्यक्षानुमितेस्सामग्रीसमवधानदशायामनुमित्यनुपपत्ति
रप्राक्समाधिरेवानुमितिम्प्रति प्रत्यक्षसामग्रीत्वेन प्रतिबन्धकतया तदभावघटितभिन्नविषयकानुमितिसामग्र्यभावादित्यत आह यद्वेति
॥ विजयलक्षणेत्यादेः सद्धेतुनिरूपणानन्तरमित्यादिः वादिनो विजयस्वरूपं यदेकं कार्यं तत्कारित्वन्तत्प्रयोजकत्वमित्यर्थः स्वोक्तहेतोः सद्धे
तुत्वप्रतिपादनेनैव परोक्तप्रतिहेतोर्दुष्टत्वप्रतिपादनेनापि कथायां वादिनो विजयादिति भावः विजयेत्युपलक्षणमनुमितिलक्षणतत्त्वनिर्णे

दि०। हेत्वाभासानिति विजयलक्षणैककार्यकारित्वमत्र सङ्गतिर्बोध्या ननु लक्षणात्मकसाधारणधर्मज्ञानं विना विशे

मु०। हेतुप्रसङ्गाद्धेत्वाभासान्विभजते अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः कालात्ययापदिष्टश्च
हेत्वाभासाश्च पञ्चधा॥ ७१॥ आद्यः साधारणस्तु स्यादसाधारणकोऽपरः तथैवानुपसंहारी त्रिधाऽनैका
न्तिको भवेत्॥ ७२॥ तल्लक्षणन्तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वन्तत्त्वम्॥ श्री॥ ६॥ श्री

षेजिज्ञासानुदयाद्विभागो निष्प्रयोजक इत्यतो लक्षणमाह तल्लक्षणन्त्विति हेत्वाभासलक्षणन्त्वित्यर्थः॥ ६॥ ६॥ ६॥

योध्यन्नैकं कार्यमित्यपि बोध्यम्॥ ७०॥ साधारणधर्मज्ञानं विनेति तद्धर्मावान्तरधर्मप्रकारकज्ञानगोचरेच्छाम्प्रति तद्धर्मज्ञानस्य हेतुत्वादिति भा
वः निष्प्रयोजक इति नास्ति प्रयोजको यस्मिन्निति व्युत्पत्त्या प्रयोजकशून्य इत्यर्थः विभागो शिष्यजिज्ञासाया एव प्रयोजकत्वादिति भावः हे
त्वाभासलक्षणन्त्विति हेत्वाभासा दोषा इति व्युत्पत्त्या हेतुदोषलक्षणन्त्वित्यर्थः यद्यपि दुष्टहेतूनामेव विभजनात् दुष्टहेतुलक्षणमेव वक्त
व्यम् तथापि दोषज्ञाने जाते दोषवत्त्वरूपदुष्टत्वलक्षणस्य ज्ञातुं शक्यत्वाद्दोषः एवञ्च मूले हेत्वाभासा इति पदं हेतुवदाभासन्त इति व्यु
त्पत्त्या दुष्टहेतुपरमेवेति मन्तव्यम्॥

काशु ॥ रा०वन्ह्यभावेव्याप्तिरिति तथाचसद्धेतोरपिदुष्टतापत्तेरितिभावः नचेति नन्ववच्छेदकतापर्याप्तिनिवेशेवन्ह्यभाववद्ह्रदविषयत्वेप्यवच्छेदका
दि०रा ॥ तापर्याप्तिविरहाद्प्रामाण्यज्ञानानास्कन्दितत्वानाहार्यनिश्चयत्वान्तर्भावेणैवावच्छेदकतापर्याप्तिःनचैतत्रितयसहिततद्विषयकत्वेनप्रति
१५२ ॥ वन्धकतावच्छेदकतापर्याप्तिस्तत्त्वमिति विवक्षणान्नदोषइतिवाच्यम् विशिष्ट विषयकत्वेनप्रतिवन्धकत्वेवन्हित्वादीनांगुरुत्वादवगाहिभ्र
माणामप्रतिवन्धकत्वानुपपत्त्यानिरूप्यनिरूपकभावापन्नविषयिताशालिनिश्चयत्वेनैवप्रतिवन्धकतायावक्तव्यतयाविशिष्टविषयकत्वा
दिसमुदायत्वस्यन्यूनवृत्तितयापर्याप्त्यनवच्छेदकत्वान्नच प्रमात्मकज्ञानीयनिरूप्यनिरूपकभावापन्नविषयितैवविशिष्टविषयितेतिनिरू

दि०लक्ष्येलक्षणङ्गमयतितथाहीति तेव्यभिचारादयः ननुयद्विषयिकत्वेत्यत्रतृतीयार्थोऽवच्छेदकत्वन्तथाचवन्हिमान् धूमा
दित्यत्रवन्ह्यभावेऽतिव्याप्तिः पर्वतविशेष्यकवन्ह्यभावप्रकारकेनिर्णयत्वेनवन्ह्यनुमितिम्प्रतिप्रतिवन्धकत्वेनवन्ह्यभावे
विषयकत्वस्यप्रतिवन्धकत्वावच्छेदककोटिप्रविष्टत्वात् नचस्वरूपसंवंधरूपावच्छेदकतापर्याप्त्यधिकरणत्वमनतिरिक्त

मु०तथाहिव्यभिचारादिविषयकत्वेनज्ञानस्याऽनुमितिविरोधित्वात्तेदोषाः॥ ६॥ ५॥ ७॥

वृत्तित्वंवाऽवच्छेदकत्वन्तृतीयार्थःवन्ह्यभावविषयकत्वस्यावच्छेदककोटिप्रविष्टत्वेप्यवच्छेदकतापर्याप्त्यनधिकर
णत्वादतिरिक्तवृत्तित्वाच्चनातिव्याप्तिरितिवाच्यम् पर्याप्तिनिवेशेऽसम्भवापत्तेःअप्रामाण्यज्ञानानास्कन्दितत्वस्याधिकस्यप्रति
वन्धकतावच्छेदककोटिप्रविष्टत्वात् ॥ ६॥ ॥ ६॥ ६॥ ॥ ६॥ ॥ ६॥ ॥ ६ ॥ ६॥ ॥ ६ ॥ ७॥ ६॥ ६॥ ७॥

प्यनिरूपकभावापन्नविषयितात्वेनविशिष्टविषयितानाम्प्रतिवन्धकतावच्छेदकतापर्याप्तिरस्त्वेवेतिवाच्यम् प्रत्येकावृत्तेस्समुदायवृत्तिनिय
मेनैकदेशातिव्याप्तिवारणायपर्याप्त्यवच्छेदकतापर्यन्तनिवेशस्यावश्यकतयायादृशविशिष्टविषयितायामवच्छेदकतापर्याप्तेःकथञ्चि
दप्यसम्भवात्तत्रआह अनतिरिक्तवृत्तित्वंवेतिप्रतिवंधकताशून्यवृत्तित्वमेव प्रतिवन्धकतावच्छेदकत्वन्तथाचवन्ह्यभावप्रकारत्वादेरप्रति ॥ एम
वन्धकधर्मितावच्छेदकज्ञानसाधारणत्वान्नवन्ह्यभावादावतिव्याप्तिरितिभावः ॥ ६॥ ॥ ६ ॥ श्री ६॥ ६॥ ७॥ ॥ ७॥ ६॥ ॥ १५२

राणपूर्वोक्तरीत्येति विशिष्टस्यशुद्धानतिरिक्ततयाहृद इत्यप्रतिबन्धकज्ञानस्यापिविशिष्टविषयकतयेत्यर्थः एवंरीत्याकापिलक्षणागमः

टि॰। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेहृदोवन्हिमान्धूमादित्यादौवन्ह्यभावविशिष्टहृदादावव्याप्त्यापत्तेःप्रतिब न्धकत्वाभावव्वतिहृदइत्येताद्दशज्ञानेवन्ह्यभावविशिष्टहृदविषयकत्वस्यसत्वात् विशिष्टहृदेसहृदानतिरेकादतआह ।यद्विषयकत्वञ्चेति एतद्विवक्षणप्रयोजनमाह तेनेति बाधभ्रमस्यबाधभ्रमसाधारणस्यपर्वतविशेष्यकवन्ह्यभावप्र कारकत्वादेरित्यर्थः अनुमितिविरोधित्वेपि अनुमितिविरोधितावच्छेदकत्वेपि नक्षतिः नवन्ह्यभावादावतिव्याप्तिः इतरथावन्ह्यभावविषयकत्वस्यपर्वतविशेष्यकवन्ह्यभावप्रकारकत्वरूपानुमितिप्रतिबन्धकतावच्छेदककोटिप्र

मु॰। यद्विषकत्वञ्च याद्दशविशिष्टविषयकत्वंबोध्यम् तेनबाधभ्रमस्यानुमितिविरोधित्वेपिनक्षतिः तत्रपर्वतोवन्ह्यभाववान् इतिविशिष्टस्याप्रसिद्धत्वान्नहेतुदोषः नचयत्रवन्ह्यभावव्याप्य पाषाणमयत्ववानितिपरामर्शकालेवन्हिव्याप्यधूमस्याभासत्वन्नस्यात् ॥ श्री ॥ ॥ ॥

विष्टत्वात्तत्रातिव्याप्तिःस्यादितिभावः याद्दशविशिष्टेति विवक्षितेतुतत्रनातिव्याप्तिरित्याह तत्रेत्यादिना नचवन्ह्यभा वविशिष्टपर्वतस्याप्रसिद्धत्वेपियाद्दशविशिष्टपदेनवन्ह्यभाववविशिष्टंवन्ह्यभावमुपादायतत्रातिव्याप्तिरितिवाच्य म् याद्दशविशिष्टेतिविवक्षणेऽनतिरिक्तवृत्तित्वस्यैवावच्छेदकत्वस्यलक्षणेनिवेशनीयतयावन्ह्यभावविषयकत्वस्य प्रतिबन्धकत्वाभाववतिवन्ह्यभावइतिज्ञानेहृत्तेस्तत्रातिव्याप्तेरभावात् नचैवम्पूर्वोक्तरीत्यावन्ह्यभावविशिष्टहृ दादावव्याप्तिरितिवाच्यं ॥

नादव्याप्तिपदंकेवलंलक्षणासत्वपरमेव तथाचासम्भव एवेतिपर्यवसितम् ॥ श्री ॥ श्री ॥ ॥ ॥ ॥ ॥ ॥

कानु रा०।यद्रूपावच्छिन्नेति नन्वेवन्तत्त्वेवन्ह्यभाववद्ध्रदत्वाद्यवेवनतु दोषेवन्ह्यभाववद्ध्रदाद्याविति कथन्तस्य दोषलक्षणत्वमत आह तत्त्वमि
दि०ए त्यस्येति ननुयद्रूपपदेनवन्ह्यभाववद्ध्रदत्वमेवग्राह्यन्तत्त्वसामानाधिकरण्यसम्बन्धेनवन्ह्यभावविशिष्टह्रदत्वमेवकर्मधारयोत्तर
१५३ भावप्रत्ययस्यपदार्थतावच्छेदकीयसामानाधिकरण्यवाचकत्वादितिदीधित्युक्तेः तदवच्छिन्नाचविषयितानप्रतिबन्धकभूतज्ञानेह्र
दोवन्ह्यभाववानिति ज्ञानेसामानाधिकरण्यंसंबन्धेनह्रदत्वेवन्ह्यभावस्याप्रकारत्वादित्यत आह वन्ह्यभावावच्छिन्नेतितथाचवन्ह्यभाव

दि०।यादृशविशिष्टविषयकत्वेनेत्यस्ययद्रूपावच्छिन्नविषयकत्वेनेत्यर्थकत्वात्तत्त्वमित्यस्यचतद्रूपत्वमित्यर्थकत्वात् ह्रद
इतिज्ञानेचवन्ह्यभावावच्छिन्नह्रदत्वावच्छिन्नविषयकत्वाभावात् अथात्रानतिरिक्तवृत्तित्वेरूपस्यावच्छेदकत्व।
स्यविवक्षणेऽनुमितिप्रतिबन्धकत्वाभाववति ह्रदोवह्निमान्नवेति संशयेवन्ह्यभाववान्ह्रदोवन्हिमानित्याहार्यनिश्चयेऽ
प्रामाण्यज्ञानास्कन्दिततादृशनिश्चयेचवन्ह्यभावविशिष्टह्रदविषयकत्वस्यसत्त्वादसंभव इतिचेन्नज्ञानसेत्यत्रज्ञानपर

मु०।नत्रवन्ह्यभावव्याप्यवान् पक्ष इतिविशिष्टस्याप्रसिद्धत्वादितिवाच्यम्॥ ६॥ ७॥

स्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरतयातादृशनिश्चयनिष्ठयादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धक
तानतिरिक्तवृत्तितत्त्वमित्यर्थलाभादितिदिक् सम्प्रतिपक्षस्यानित्यदोषत्ववादीशङ्कते नचेति विशिष्टस्याप्रसिद्धत्वादिति
पाषाणमयत्वेवन्ह्यभावव्याप्यत्वाभावादितिभावः॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ॥ ६॥॥

द्ध्रदत्वोभयमेव तच्चयद्रूपपदेनग्राह्यन्तन्तूक्तंविशिष्टंयेनोक्तदोषस्यात् निर्धर्मितावच्छेदवन्ह्यभावविशिष्टह्रदत्ववानित्यप्रतिबन्धकज्ञाने।
प्युक्तंयद्रूपावच्छिन्नविषयतासत्त्वेनेतिभावः ह्रद इतिज्ञानेपिह्रदत्वावच्छिन्नविषयितासत्त्वात् वन्ह्यभावावच्छिन्नविषयत्वाभावादेवोभ एम॰
यावच्छिन्नविषयताविरह इति सूचनायैव वह्न्यभावेत्यनेन वन्ह्यभावावच्छिन्नविषयिताविरहमात्रमत्र॥ ६॥ ॥ ६॥ ६॥ ६॥ ६॥ १५३

रा०र्थिंनतु वन्ह्यभावमात्रं यद्रूपपदग्राह्यमिति तदभिप्रायः तथा सति केवलवन्ह्यभावावच्छिन्नविषयिताया अप्रतिबन्धकवन्ह्यभा
ववानिति निर्धर्मितावच्छेदकज्ञानसाधारण्येन वन्ह्यभावमात्रं यद्रूपपदेनोपादाय लक्षणोगमनादिति बोध्यम् ॥०॥ अथैवंव
न्ह्यभावह्रदत्वोभयावच्छिन्नविषयित्वं वन्ह्यभावह्रदोभयनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वमेव तच्चाप्रतिबन्धकत्वए
कत्र ह्रयमिति रीत्या वन्ह्यभावह्रदत्वोभयप्रकारके वन्ह्यभावावच्छिन्नविशेष्यकह्रदत्वप्रकार केच ज्ञाने वर्तत इति तादृश
विषयितायाः प्रतिबन्धकतातिरिक्तवृत्तित्वासंभव इति चेदत्र केचित् यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छिन्नवि
शेष्यतानिरूपकत्वमनुमिति प्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविशिष्टतद्रूपावच्छिन्नोद्देश इत्यर्थे तात्पर्यात् वन्ह्य
भावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूपकत्वस्यानुमिति प्रतिबन्धकतानतिरिक्तवृत्तित्ववति वन्ह्यभा
वत्वावच्छिन्नविशिष्टो ह्रदत्वावच्छिन्नोद्देश इत्याहुः तदसत् तथा सति घटो न द्रव्यमित्यनुमिति प्रतिबन्धकीभूत घटो द्रव्यमिति
निश्चयविषयस्य द्रव्यत्वविशिष्टघटादावव्याप्तिप्रसङ्गात् यद्रूपावच्छिन्नप्रकारतात्वेन द्रव्यत्वप्रकारताया उपादातुमशक्य

त्वात्तस्या निरवच्छिन्नत्वात् परेतु यद्रूपपदेन वन्ह्यभावधर्मितावच्छेदकतापन्नह्रदत्वादिकमेव ग्राह्यम् धर्मितावच्छेदकता
पन्नह्रदत्वापन्नत्वं स्वविषयिताया धर्मितावच्छेदकतानिरूपितस्वनिरूपकतावच्छेदकताकत्वं ह्रदो वन्ह्यभाववानिति ज्ञानीय
विषयितानिरूपकतावच्छेदकतैव वन्ह्यभावधर्मितावच्छेदकतानिरूपिता एकविषयकज्ञानीयप्रकारताविशेष्यतयोर्विशेष्यता
प्रकारतयोर्भेदवादिमते निरूप्यनिरूपकभाववत् धर्मितावच्छेदकत्वविषयितानिरूपकतावच्छेदकतयोरपि निरूप्यनिरूपकभा
वोभ्युपेयः ह्रदत्वावच्छिन्नविशेष्यकवन्ह्यभावप्रकारकज्ञान एव वन्ह्यभावधर्मितावच्छेदकतापन्नह्रदत्वावच्छिन्नविषयकत्वम्प्रतीत्य
नुरोधादिति वदन्ति केचित्तु वन्ह्यभावह्रदत्वोभयप्रकारकज्ञानस्य समूहालम्बनतया तत्र प्रकारताभेदेन विशेष्यताया भिन्नत्वेन तत्रोभय
प्रकारतानिरूपितविशेष्यतानिरूपकत्वं वन्ह्यभावधर्मितावच्छेदकज्ञानीयविषयितावारणाय प्रकृतानुमित्यनिरूपितप्रतिबन्धकतान
वच्छेदकत्वेन विशेषणीया यद्रूपावच्छिन्न— विषयितायुक्तज्ञाने ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

का॰मु॰ रा॰ ॥ उभयप्रकारतानिरूपितैकविशेष्यतासत्वेपितस्यावन्ह्यभाववान् ह्रद इति ज्ञाननिरूपितप्रकृतानुमित्यनिरूपितप्रतिवन्धकतावा

दि॰रा॰ च्छेदकत्वात्तामादाय नासम्भव इत्याहुः तदप्यसत् वन्ह्यभाववद्ह्रदादि विषयितायाअपिह्रदो नवन्ह्यभाववानित्यादिज्ञाननिरूपि

१५४ तप्रतिवन्धकतायामवच्छेदकत्वे नासम्भवप्रसङ्गात् प्रतिवध्यताभेदेनप्रतिवन्धकताभेदादिति अथजातित्वेनह्रदत्वावगाहिजाति

मान्वन्ह्यभाववानित्यप्रतिवन्धकज्ञानेपि यद्रूपावच्छिन्नविषयितासत्वेनासम्भवापत्यायद्रूपावच्छिन्नविषयकत्वसमानाधिकरणा

भावप्रतियोगितावच्छेदकंयद्यद्रूपावच्छिन्नविषयतात्वंतत्तद्रूपावच्छिन्नविषयिताशून्यज्ञानीयत्वेनविशेषणीयायद्रूपावच्छि

न्नविषयितासत्वेएवञ्चतादृशज्ञानीययद्रूपावच्छिन्नविषयितास्वरूपसम्बन्धरूपावच्छेदकतावतीतद्रूपावच्छिन्नोदेयइ

त्युक्तेपि वसामञ्जस्येव्यर्थमतिरिक्तदृतित्वरूपावच्छेदकत्वानुधावनम् ह्रदत्वावच्छिन्नविषयितादिशून्यज्ञानीयवन्ह्यभाव

विषयकत्वस्यप्रतिवन्धकतानवच्छेदकत्वेनैकदातिव्याप्तेरयोगादितिचेन्न संयोगस्संयोगवानिति वाधभ्रमविषयसंयोगत्व

विशिष्टेऽतिव्याप्तेर्दुर्वारत्वात् तत्रसंयोगत्वाद्यवच्छिन्नविषयितानांसंयोगत्वविशिष्टविषयकत्वव्यापकत्वात् संयोगवत्संयोगाप्र

सिद्ध्यातत्वावच्छिन्नविषयितायायद्रूपावच्छिन्नविषयितात्वेनग्रहीतुमशक्यत्वात् नचसंयोगावच्छिन्नैवविषयितासंयोगत्ववि

शिष्टविषयकत्वव्यापिकातत्रातिव्याप्तिःसंयोगवत्तस्तत्रापिविषयत्वेपिसंयोगनिष्ठविषयितानिरूपकतायांव्यधिकरणीभूयसंयोगा

स्यावच्छेदकत्वादितिवाच्यम् ॥संयोगत्वेनसंयोगप्रकारकोक्तभ्रमेतस्याप्यभावात् अथैवमप्यभावत्वेनह्रदत्वावगाहिन्यामभाववा

न् वन्ह्यभाववानिति बुद्धावपिवन्ह्यभावह्रदत्वोभयावच्छिन्नविषयितासत्वेनतत्रेचयद्यद्रूपावच्छिन्नविषयितात्वमुक्तोभयावच्छि

न्नविषयतासमानाधिकरणाभावप्रतियोगितावच्छेदकन्तत्तद्रूपावच्छिन्नविषयिताशून्यत्वम

प्यसत्तमेव अभावत्वावच्छिन्नविषयितात्वस्यातथात्वात्तादृशबु

द्धेरनुमित्यप्रतिवन्धकत्वाच्चासम्भवोदुर्वारइतिमैवम् यत्स

म्वन्धावच्छिन्नयद्रूपावच्छिन्नविषयितात्वन्तादृशाभावप्रतियो

गितावच्छेदक...[illegible]...॥



राम॰
१५४

रा०।विषयिताशून्यत्वस्य ज्ञानविशेषणत्वेन विवक्षणीयत्वात् उक्तज्ञानस्य च तथाविधसमवायसम्बन्धावच्छिन्नाभावत्वावच्छिन्नावि-
षयितावत्त्वेन वारणसम्भवात् न चैवमपि यत्र तत्तद्व्यक्तित्वेन ह्रदादेः पक्षता तत्राभावत्वेन तद्व्यक्तित्वावगाह्यप्रतिबंधकज्ञानवारणमश-
क्यमेवेति वाच्यम् तद्व्यक्तित्वस्य जात्यतिरिक्तस्य स्वरूपतो भानासंभवेन तद्व्यक्तीतरावृत्तित्वेनैव तस्य पक्षतावच्छेदकतायाः वक्तव्यतयाऽभा-
वत्वेन तत्तद्व्यक्तित्वावगाहिज्ञानस्य यद्रूपावच्छिन्नाविषयकत्वात् यद्वा चानवस्थाभयेन तद्व्यक्तित्वस्य जात्यतिरिक्तमपि स्वरूपतो भासत
इत्येवाङ्गीकरणीयं तत्त्वन्तराभावादिति विभाव्यते तदा स्वनिरूपितविषयितानिरूपितत्वस्वभिन्नत्वोभयसम्बन्धेन यद्रूपावच्छिन्ना-
विषयिताविशेषस्तद्रूपावच्छिन्नविषयितात्वन्तादृशाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविष-
यिताविशेषशून्यज्ञानीयत्वेन लक्ष्यतावच्छेदकविशेषणीया वन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपिताभावत्वावच्छिन्न-
प्रकारताशालित्वादेवाभाववान् वन्ह्यभाववानिति ज्ञानवारणमवसेयं वन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितस्वा-
त्मकाभावत्वावच्छिन्नप्रकारताया वन्ह्यभाववान् ह्रद इति ज्ञानेपि सत्त्वेन तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयितात्वस्या-
भावप्रतियोगितावच्छेदकत्वोपपत्तये स्वभिन्नत्वप्रवेश इति निपुणतरमूहनीयम् यद्यप्येवं सति अनतिरिक्तवृत्तितथात्वानुधावनम्
फलम् संसर्गत्वावच्छिन्नप्रकारतानिरूपितसंसर्गविषयितानिरूपितसंयोगत्वावच्छिन्नविशेष्यताशालित्वादेवोक्तभ्रमवारणसम्भ-
वेनोक्तप्रयोजनासंभवात् तथापि पाषाणमयो न वन्हिमानिति ज्ञानकालीनस्य पर्वतः पाषाणमय इति ज्ञानस्याप्यवच्छेदकधर्मदर्शन-
विधयाऽनुमितिप्रतिबन्धकत्वेन तद्विषये पाषाणमयपर्वतेऽतिव्याप्तिः अनतिरिक्तवृत्तित्वनिवेशे तु पाषाणमयो न वन्हिमानिति ज्ञानस्य स-
कालीनतादृशज्ञानस्यात्रातिव्याप्तिः तादृशनिश्चयनिष्ठेति तथा च ज्ञानस्येत्यत्र षष्ठ्यर्थो निष्ठत्वम् तस्य च यद्विषयकत्वेऽन्व—
यः तथा च वन्ह्यभाववद्ध्रदविषयत्वस्यानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेपि तादृशनिश्चयवृत्तित्वविशिष्टस्य तस्यानतिरिक्तवृत्तित्वान्नास-
म्भव इति भावः यद्यपि विशेष्यीभूतवन्ह्यभाववद्ध्रदविषयत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वविशिष्टेपि तस्मिन् ——— नतिरिक्तवृत्ति-
त्वं दुर्घटम् विशिष्टस्य शुद्धानतिरिक्ततया गुणान्यत्वविशिष्टसत्तायावृत्तित्वाभ्युपगमात् न च तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नवि-
विषयितात्वम् अनुमितिप्रतिबन्धकताशून्यनिरूपिताधेयतानवच्छेदकमिति विवक्षणीयमिति वाच्यम् तादृशविशिष्टविषयिताः ॥

का०मु० शं०त्वस्य वैशिष्ट्यविषयितात्वोभयरूपत्वतयानयोः प्रत्येकम्प्रतिबन्धकताशून्यवृत्तितावच्छेदकतयोभयस्मिंस्तादृशवृत्तिताव
टि०या० च्छेदकत्वस्योपपादयितुमशक्यत्वात् तथापि स्वव्यापक——त्वमेवानतिरिक्तवृत्तित्वं तथा च तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छि
१५५ न्नविषयिताव्यापकमनुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नो दोष इत्यर्थपर्यवसानाद्व्यापकताशरीरे च विशिष्टाधिकरणताप्रवेशान्नोक्त
दोषावकाशः तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितात्वावच्छिन्नाधिकरणतायां वा प्रतिबन्धकताशून्यावृत्तित्वं वि
वक्षणीयमिति ध्येयम् अत्र प्रथममवधेयम् जलवत्त्वा——वच्छेदेन वन्ह्यभाववत्त्वघटितस्य वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रद
न्यवाधादावनन्तर्भूतत्वेन अभाववद्वृत्त्यभावस्यावच्छेदकधर्मदर्शनविधयाऽनुमितिप्रतिबन्धकतातदनतिरिक्तवृत्तिविषयि
ताकत्वाभावेन तत्रातिव्याप्तिः न च पक्षे साध्यग्रहप्रतिबन्धकतावच्छेदकतयास्वप्रतिपक्षभिन्नतया चाभावएव तदन्तर्भावोस्तीति वा
च्यम् तथा सति योयत्र यादृशोपि हेत्वाभासस्तत्र तद्व्याप्योपि तत्रैवान्तर्भवतीत्यत्र तदवच्छेदकस्यापि तदन्तर्भावानुक्त्या न्यूनताप्र
सङ्गात् तस्मादवच्छेदकधर्मदर्शनविधयाप्रतिबन्धकतान हेत्वाभासलक्षणघटिकेत्येवं ग्रन्थकृतां तात्पर्यमित्यङ्गीकरणीय
त्वात् न च ज्ञानवैशिष्ट्यानवच्छिन्नत्वेन प्रतिबन्धकताविशेषणीया अवच्छेदकधर्मदर्शनस्य ज्ञानत्वेनैव प्रतिबन्धकतयानोक्तवि
शिष्टेतिव्याप्तिरितिवाच्यम् ॥ तथा सति जलव्यापकोवन्ह्यभावो जलवान् ह्रद इति ज्ञानद्वयकालेपि ह्रदो वन्हिमानित्यनुमित्यनुत्पादेन प्र
तिपक्षविषयकज्ञानस्यापि ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकतया वक्ष्यमाणतयातत्रातिव्याप्तिप्रसङ्गात् न च व्यापकसामानाधि
करण्यरूपव्याप्तिघटितस्य सत्प्रतिपक्षतान स्वीक्रियते किन्तु वन्हिमद्वृत्तिपक्षस्यैव सत्प्रतिपक्षता अन्यथा जलव्यापकव
न्ह्यभावकालीनजलादावतिप्रसङ्गापत्तेरितिवाच्यम् एवमपि साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपविरोधाव्याप्तेरप
रिहारात्तस्यापि पक्षधर्मताज्ञानकालीनप्रतिबन्धकज्ञानस्वविषयत्वात्तच्चैवं तद्विषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वात्कथं
सामान्यलक्षणाक्रान्तत्वात् पक्षवृत्तित्वविशिष्टस्य तादृशहेतोः स्वविरोधत्वोपगमे पर्वतो वन्हिमान् जलादित्यादौ वह्निव्यापकीभू राम०
ताभावप्रतियोगिजलादेर्विरोधत्वानुपपत्तेः पक्षवृत्तित्वादितिवाच्यम् यद्रूपावच्छिन्नविषयकनिश्चयसामान्येऽनुमित्यप्रतिबन्ध १५५
कत्वपक्षधर्मताग्रहकालीनत्वोभयाभावस्तद्रूपत्व ॥ श्री ६ ॥ ६ ॥ ७ ॥ श्री ६ ॥ ॥ ६ ॥ ६ ॥ ६ ॥ ॥ ६ ॥ ६ ॥ ॥ ६ ॥ ६ ॥

ग० च्छिन्नो दोषइत्येवोक्तलक्षणपर्यवसितार्थइत्युपगमादिति तत्रातिव्याप्तिवारणाय प्रकृतानुमितिप्रतिबन्धकतानवच्छेदककिञ्चि दवच्छिन्नविषयिताशून्यत्वेन तादृशनिश्चयो विशेषणीयः उक्तविशिष्टविषयकनिश्चयश्च तथाविधाधेयतात्वावच्छिन्नविषयिताश्र येवेति तेन नातिव्याप्तिः ह्रदो वह्न्यभाववानिति निश्चयस्यापि तथाविधह्रदत्वप्रकारतानिरूपितनिरवच्छिन्नविशेष्यताशालित्वा दुक्तं किञ्चिदवच्छिन्नेति यद्यप्येवं सति एकदेशातिव्याप्तिरेकदेशविषयकस्यापि ह्रदो वह्न्यभाववानिति निश्चयस्यापि तथात्वा

दि० इष्टापत्तेरिति। तथाच सद्धेतूनामप्रतिपरामर्शेऽपि तद्दुष्टत्वमिति भावः अन्यथा प्रतिबन्धकीभूतभ्रमविषयत्व

मु० इष्टापत्तेः अन्यथा बाधस्याप्यनित्यदोषत्वापत्तेः तस्मात्तत्र वह्न्यभावव्याप्यपाषाणमयत्ववा निति परामर्शकाले वह्निव्याप्यधूमस्यानाभासत्वम् भ्रमादनुमितिप्रतिबन्धमात्रे हेतुस्तु न दुष्टः

स्यापि दोषत्वे अनित्यदोषत्वापत्तेरिति पक्षे साध्याभावभ्रमदशायां सद्धेतावपि दोषत्वापत्तेरित्यर्थः इत्थञ्च यादृशवि शिष्टविषयकत्वेन ज्ञानस्य प्रतिबन्धकत्वं तादृशविशिष्टस्य दोषत्वे च ॥ ६ ७॥ श्री ६ ॥ ९ ॥ ६ ॥ ७ ॥ ॥ २ ॥ २ ॥

तथापि निश्चये यद्रूपावच्छिन्नविषयित्वाघटितविषयिताशून्यत्वमपि निवेश्यसापि निरसनीया एकदेशविषयकतादृशनिश्चयस्याप्रसि द्धेः तादृशविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकत्वमेव तद्घटकमिति ध्येयम् इत्थञ्च जातिमान् वह्न्यभाववानि ति ज्ञानवारणायोक्तगुरुतरविशेषणमपि देयमेवेति तदीयविषयितायाः प्रतिबन्धकतानवच्छेदकत्वादेव तद्वारणसंभवादेवा श्चयमन्यकह्रेखनस्वरसाद्रूपपदेन वह्न्यभाववद्वृत्त्वोभयोपादानेऽपि न क्षतिः उक्तप्रतिबन्धकज्ञानयोरेतद्विशेषणेनैव वारणात्त न्नैवमप्रमेयत्वादिविशिष्टव्यभिचारादिति व्याप्तिवारणाय तादृशविशिष्टान्तरघटितत्वनिवेशोऽपि नोपादेय एतदरतिम ः ॥ ६ ॥

का॰मु॰ रा॰ हा लाघवं केचित्तु व्यभिचारविशिष्टेऽतिव्याप्तिवारणाय यादृशवैशिष्ट्येति अथैवं स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽपि सम्भावादनति
टि॰ रा॰ रिक्तवृत्तित्वनिवेशनमफलमिति चेत्परित्यज्यतां तदपि तावता प्यनाहार्यत्वादिविशेषणानिवेशेन लाघवातिशयस्यैव सम्पत्तिरिति वस्तु
१५६ स्तुतः उक्तविशिष्टेऽतिव्याप्तिवारणाय स्वात्मन्नेवप्रतिबन्धकता———नवच्छेदककिञ्चिदवच्छिन्नविषयताशून्यज्ञानविषयत्व रूपविशेषणमुपादेयम् एकदेशादावतिव्याप्तिवारणायाव्यापकविषयिताशून्यत्वादिविशेषितनिश्चयपद्रूपावच्छिन्नविषयत्वमित्यादिविशेष्यदलमित्यत्रैव तात्पर्यमिति दिक् केचित्तु विशिष्टेऽतिव्याप्तिवारणाय यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशि

दि॰ हेत्वादिकमित्यादिना साध्याभावविशिष्टपक्षपरिग्रहः यादृशविशिष्टपदेन व्यभिचारत्वादिविशिष्टव्यभिचारादिकमादाय लक्षणत्वसम्भवतिव्यभिचारविषयकत्वस्य प्रतिबन्धकताशून्ये व्यभिचार इति ज्ञाने वृत्तित्वेनातिरिक्तवृत्तित्वात् किन्तु व्यभिचारादिविशिष्टहेत्वादिकमादायैवेति व्यभिचारादिविशिष्टहेत्वादिकमेव दोष इति भावः नन्वव्यभिचारादिवि

सु॰ इत्यञ्च साध्याभाववद्वृत्तिहेत्वादिकं दोषः तद्वत्त्वञ्च हेतौ येन केन सम्बन्धेनेति नव्याः॥

शिष्टस्य हेतोर्दोषत्वे तद्वत्त्वस्य हेतावभावाद्धेतौ दुष्टत्वव्यवहारो न स्यात् न च तादात्म्येन तद्वत्त्वं विवक्षणीयमिति वाच्यम् तथा सति वन्ह्यभावविशिष्टह्रदादेस्तादात्म्येन धूमेऽभावेन ह्रदपक्षकधूमस्य दुष्टत्वं न स्यादत आह तद्वत्त्वञ्चेति

ष्टविषयकनिश्चयोऽनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतातादृशविशिष्टविषयिताद्रूपशून्यप्रतीतिविषयत्वेन तादृशविशिष्टो विशेषणीयः विशिष्टद्रूपविषयतां यां यावत्तामनवच्छेदकत्वविशेषणात् वन्ह्यभावविषयकनिश्चयविशिष्टवन्ह्यभाववद्ध्रदविषयक निश्चयत्वस्यानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वेऽपि न वन्ह्यभाववद्ध्रदादावसम्भवप्रसङ्ग इत्याहुः व्यभिचारत्वादिविशिष्टेति वन्हिधूमस्य व्यभिचारी पक्षे साध्यस्य बाध इत्यादिव्यवहारात् साध्याभाववद्वृत्तित्वादौ नामस्य व्यभिचारपदार्थत्वे साध्याभाववद्बाधपदार्थत्वे न प्रसिद्धतया साध्याभाववद्वृत्तित्वस्यैव प्रकृते व्यभिचारपदार्थतावोध्या व्यभिचा ॥१५६

रा०।रादिकमित्यादिना साध्याभावरूपबाधपरिग्रहः तादृशविशिष्टाश्रयतद्धेतुत्वस्यैवेति तथाच वन्ह्यभाववद्वृत्तिद्रव्यमिति ज्ञान
त्वस्य तद्धूमहेतुकानुमितावप्रतिबन्धकत्वात् तादृशद्रव्यविशिष्टत्वेपि धूमस्य धूमो दुष्ट इति व्यवहारापत्तिरिति भावः ननु तद्धेतुके
ति नच तद्धेतुकत्वं तत्परामर्शोत्तरत्वं तथाचोभयपरामर्शोत्तरं यत्र एकहेतौ व्यभिचारज्ञानं तत्रानुमितिरुभयहेतुकत्वेन तत्र व्य।
भिचारवृत्तिवाच्यम् अव्यवहितोत्तरत्वसम्बन्धेन तद्धेतुधर्मिकव्यभिचारज्ञानविशिष्टान्यत्वस्यैव प्रकृते तद्धेतुकरूपत्वादिति प्रकृ।
तानुमितिप्रतिबन्धकतावच्छेदकमित्यस्य विषयविधेयेत्यादिः तथाच यादृशविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति
तादृशविशिष्टान्तराघटितत्वेनेति यादृशविषयविशिष्टविषयकत्वं तथाविधं तादृशविशिष्टो दोष इति पर्यवसितोर्थः अघटितत्व
स्य तद्विषयकप्रतीतिविषयत्वरूपत्वेन स्वस्मिन् स्वविषयकप्रतीतिविषयत्वाभावान्न व्यभिचार इत्यन्तरपदं तच्च न स्वभिन्नार्थकं व्य
भिचारादेः प्रमेयत्वविशिष्टव्यभिचाराभिन्नत्वेनातिव्याप्तिवारणासम्भवात् किन्तु स्वाविषयकप्रतीतिविषयत्वं यद्यपि प्रमेयत्ववृत्ति प्र

मेयत्वादिना साध्यवद्वृत्तित्वाभाववद्वृत्ति प्रमेयत्वरूपव्यभिचारेऽव्याप्तिस्तस्य वृत्तिप्रमेयत्वरूपबाधघटितत्वात् तथापि प्रतिबन्धकताया
मेव विशिष्टान्तरविषयकत्वानवच्छिन्नत्वं देयम् व्याप्तिज्ञानप्रतिबन्धकतायां बाधविषयिता व्यापकत्वविरहेणोक्ताव्याप्तिविरहा
दिति विभावनीयम् केचित्तु स्वसजातीयविशिष्टान्तराघटितत्वानिवेशान्नोक्तदोषः बाधस्य हेत्वाभासविभाजकरूपेण व्यभिचारस
जातीयत्वविरहान्न दोष इत्याहुस्तन्न मनोरमम् विशिष्टान्तराघटितत्वतद्घटितहेत्वाभासविभाजकरूपेणैव साजात्यविवक्षणी
यम् अन्यथा व्यभिचारविशिष्टमेयत्वादेर्हेत्वाभासविभाजकरूपस्यैवाभावेन स्वपदेन तस्योपादातुमशक्यत्वेन विशिष्टान्तराघ
टिते यत्प्रमेयत्वविशिष्टव्यभिचारादितदन्यत्वस्य प्राप्तत्वात्तत्रातिव्याप्त्यापत्तेः तथाच बाधोपि व्यभिचारसजातीय एव विशिष्टान्तराघ
टितत्वात्तद्घटितबाधत्वस्य व्यभिचारेपि सत्त्वादिति ध्येयम् यद्विच स्वपदमनुयोगिपरमेव स्वसजातीयं यद्विशिष्टान्तरं तद्वि
षयकप्रतीतिविषयकप्रतीतिविषयत्वमेव लक्षणम् विशेष्यदलं तु नैवोपादेयम् उदासीनघटादेः स्वसजा॥ ६॥ श्री ६॥ ॥

का॰मु॰ रा॰।नीयप्रसिद्धौ वन्तत्राऽतिव्याप्तिविरहात् साजात्यमपि सम्पूर्णहेत्वाभासविभाजकरूपेणैव विवक्षणीयम् मेयत्वविशिष्टव्यभि
दि॰ए॰ चारादेः शुद्धव्यभिचारत्वस्यापि सत्त्वेन व्यभिचारस्य तत्सजातीयत्वसम्भवात् इत्थं च व्यभिचारविशिष्टमेयत्वस्य स्वसजातीयाप्रसिद्धेः
१५८

दि॰।न च वह्निव्यभिचारविशिष्टद्रव्यत्वादेर्धूमेऽपि सत्त्वादतिव्याप्तिरिति वाच्यम् यादृशविशिष्टविषयकज्ञानत्वेन य
द्धेतुकानुमितिप्रतिबन्धकत्वं तादृशविशिष्टाश्रयतद्धेतुत्वस्यैव दुष्टत्वादिति सत्प्रतिपक्षादेरनित्यदोषत्ववादिनामतम्
माह परे त्विति ननु वन्ह्यभावादिव्याप्तेर्यत्परेनोपादानं तु शोकान्वेपितस्याधूमादन्नितयान धूमस्य दुष्टत्वं स्यादत आह तत्
द्वत्त्वञ्चेति ज्ञानेति एकज्ञानविषयत्वेन तद्वत्त्वमित्यर्थः तद्वत्त्वस्य साध्याभाववत्त्वस्य तत्र बाधकालीनधूमादिसद्धेतौ

मु॰।परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्त्वं हेत्वाभासत्वं सत्प्रतिपक्षे विरोधिव्याप्त्यादि
कमेव तथा तद्वत्त्वञ्च हेतौ ज्ञानरूपसम्बन्धेन न चैवं वन्हिमान्धूमादित्यादौ पक्षे बाधभ्रमस्य साध्या
भावविषयकत्वेनानुमितिविरोधित्वात् ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्त्वात्सद्धेतोरपि बाधितत्वापत्ति
रिति वाच्यम्।।तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात् अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात् तत्र बा
धित इति व्यवहाराभावादित्याहुः॥ ॥ विन्यर्थः अत्र प्रतिपरामर्शकालीने धूमादिसद्धेतौ तत्कल्पनात् ज्ञान
स्य संबन्धत्वकल्पनात् न तु सद्धेतावपि बाधित इति व्यवहारेण सम्बन्धत्वकल्पने ज्ञानस्य भविष्यतीत्यत आह तत्रेति॥
बाधभ्रमकालीने सद्धेताविन्यर्थः प्रत्युतापन्नबाधितः पुरुषस्तु भ्रान्त इत्येव व्यवहारादिति भावः तादृशव्यवहारा
व्यवहारयोः स्वानुभवमात्रसाक्षिकत्वमाहुरित्यस्वरसबीजम्॥१॥ ॥१॥ ॥१॥ ॥१॥ ॥१॥ ॥१॥ ॥१॥ ॥१॥

वनातिव्याप्तिरित्युच्यते तत्सामूलविरोधातिविरोधैनैतन्मते दोषइति ध्येयम् अत्र च प्रमेयत्वविशिष्टव्यभिचारो दोष इति व्यवहाराभावात्॥ श्री॥ राम॰ १५८

रा०। तद्वारणायासौ बोध्यः यद्यपि विशिष्टान्तराघटितत्वनिवेशेऽपि तादृशव्यवहारो दुर्निवारः तथाविधस्य हृदव्यभिचारित्वस्यापि तत्र सत्त्वेन तेन रूपेण तस्य दोषत्वे इष्टापत्तिसम्भवात् तथाविशिष्टान्तराघटितत्वस्य लक्षणे प्रवेशे तेन रूपेणोद्देश्यतावच्छेदकधर्मबोधकत्वनियमोपगमात्॥

दि०। यथाश्रुतविरोधित्वत्यागे बीजमाह तेनेत्यादिना ननु तद्धेतुकतत्साध्यकानुमितिम्प्रति तद्धेतौ तत्साध्यव्यभिचारग्रहाभावो हेतुर्वाच्यस्तत्राह तदभावेति न सङ्गतिः नाव्याप्तिः नन्वत्र लक्षणेऽवच्छेदकत्वन्तु स्वरूपसम्बन्धविशेषः पूर्वोक्तदोषादित्यनतिरिक्तवृत्तित्वमेव निवेशनीयं तथा च धूमवान्वह्नेरित्यादौ प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिस्तद्विषयकत्वस्य प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह इतिसंक्षेप इति प्रकृतानुमितिप्रतिबन्धकतावच्छेदकान्तराघटितत्वेनानुमि

सु०। अनुमितिविरोधित्वञ्चानुमितितत्कारणान्यतरविरोधित्वम्। तेन व्यभिचारिणि नाव्याप्तिः दोष। ज्ञानञ्च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकं तेनैकहेतौ व्यभिचारज्ञाने हेत्वन्तरेणानुमित्युत्पत्तेः तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्य प्रकृतानुमितिविरोधित्वाभावेऽपि न क्षतिरिति सङ्क्षेपः॥

तिविरोधितावच्छेदकं विशेषणीयं प्रमेयत्वविशिष्टव्यभिचारस्य प्रकृतानुमितिप्रतिबन्धक—— तावच्छेदकीभूतो यो व्यभिचारस्तद्घटितत्वस्यैवेति न तत्रातिप्रसङ्गः इति दिक्। नन्वत्रानुमितितत्कारणज्ञानान्यतरप्रतिबन्धकत्वमन्यतरनिष्ठप्रतिबध्यतानिरूपकत्वघटितं यदि तदा पर्वतो वह्निमान्धूमादित्यादौ वह्न्यभावविशिष्टह्रदस्यापि दोषताप्रसङ्गः तस्य पर्वतो वह्निमान् ह्रदो वह्निमानिति समूहालम्बनात्मकप्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वात्॥ ६॥

दोषपरस्त्वमेयत्वविशिष्टव्यभिचारत्वस्य तथात्वान्न तादृशव्यवहारापत्तिरित्यवधेयम्॥६॥ ॥६॥ ॥६॥ ॥६॥ ॥६॥ ६॥ ६॥

का०मु० राणन्तु तादृशान्यतरत्वव्याप्ययत्किञ्चिद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायद्रूपावच्छिन्नविषयितान्यापिका तद्रू
दि०रा० पावच्छिन्नो दोषइत्युक्तत्वान्न दोषः वस्तुतोऽत्रानुमितिपदस्य स्वसाध्यव्याप्यहेतूभयविधेयकसमूहालम्बनानुमितिपरत्वेनोनकोऽपि
१५८ दोषः तादृशानुमितित्वव्यापकप्रतिबध्यतानिवेशेन समूहालम्बनानुमितिमादाय दोषवारणसम्भवात् व्याप्तिश्चान्वयतो व्यतिरेकत
श्चनिवेश्यते न साधारण्यानुपसंहारित्वयोर्नैकतरसङ्ग्रहो दित्यत आह किञ्चेति मूले यादृशसाध्यकेति तद्धर्मावच्छिन्नसाध्यपक्षहे

दि०। यदि च तादृशान्यतरत्वावच्छिन्नप्रतिबध्यतानिरूपकत्वघटितं तदा तादृशान्यतरत्वस्य कस्यचित्प्रतिबध्यता
नवच्छेदकतया सम्भवः तादृशान्यतरत्वव्यापकप्रतिबध्यतानिवेशे च व्यभिचारादौ बाधादौ चाव्याप्तिः व्यभिचारादे
रनुमित्यविरोधितया बाधादेश्च व्याप्तिज्ञानाविरोधितया तत्प्रतिबध्यतायास्तथाविधान्यतरत्वाव्यापकत्वात् किञ्च त
द्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकतद्धर्मावच्छिन्नहेतुकानुमितितत्कारणज्ञानान्यतरविरोधित्वं लक्षणं

मू०। यादृशसाध्यपक्षहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम् पञ्चत्वकथन
न्तु तत्सम्भवस्थलाभिप्रायेण॥

निवेशनीयं अन्यथा पर्वतो वन्हिमान् धूमादित्यादौ पर्वतादेः काञ्चनमयत्वाभावो हेत्वाभासः स्यात् एवञ्च निर्वन्हिः
• पर्वतो वन्हिमान्धूमादित्यादौ न कोऽपि हेत्वाभासः स्यात्तादृशानुमितेरप्रसिद्धेरत आह यादृशसाध्येति तत्सम्भवेति वायुर्गन्धवान्
स्नेहादित्यादौ सर्वहेत्वाभाससम्भव इति भावः॥ ॥ ॥ ॥ ॥ तुकानुमितित्वेन किमुद्दिश्य न्यायप्रयोगो यद्यद्धर्मावच्छिन्ने
दोषव्यवहारः सम्प्रदायसिद्धस्तावदन्यान्यत्वं तत्तत्पदोषसामान्यलक्षणमित्यर्थः तेन निर्वन्हिः पर्वतो वन्हिमानित्यनुमितेरप्रसिद्धावप्येम
वपि न क्षतिः एवं च निर्वन्हिपर्वते वन्हिसाधने बाधो दोषइत्यादिव्यवहारेऽपि निर्वन्हिपर्वतोद्देश्यकत्ववन्हिविधेयत्वप्र ॥ ॥ ॥ १५८

रा॰कारकानुमितिविषयकेच्छ्यान्यायप्रयोगेतादृशान्यतमोवाधइत्येवार्थः यद्यपिप्रमेयंगगनवदित्यादौगगनाभाववत्प्रमेयभिन्ना । प्रसिद्ध्यालक्षणमव्याप्तन्धर्मीणा——मन्यतमत्वेनविशेपिप्रमेयपक्षतावच्छेदकस्थलेऽअप्रसिद्धित्वादवस्यम् वन्ह्यभावभिन्नत्वेसति ह्रदत्वभिन्नोयस्तदन्यत्वस्यकेवलह्रदत्वसाधारण्येनह्रदेदोषइतिव्यवहारापत्तिश्चतथापियद्धर्मावच्छिन्नेदोषव्यवहारस्तदवच्छिन्नविषयितान्यतमविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नोदोषइतिविवक्षायानदोषः एकविधदोषस्थलेपिविशेषणविशेष्यभावतद्व्यापभेदेनान्यतमप्रसिद्धिरवनेया एतल्लक्षणेप्रमेयत्वविशिष्टव्यभिचारादेर्दोषव्यवहारविरहाद्विशिष्टान्तराघटित

दि॰। हेत्वाभासलक्षणमुक्त्वामूलेवक्ष्यमाणेष्वनैकान्तिकादिलक्षणेषुक्वचिद्दोषंहृदिनिधायस्वयमनैकान्तकादीनांलक्षणा न्याहएवमिति साधारणादीत्यादिना॰ असाधारणानुपसंहारिणोः परिग्रहः नन्वेतस्यानुमितितत्करणज्ञानान्यतरविरोधि।

मु॰। एवञ्चसाधारणाद्यन्यत——मत्वमनैकान्तिकत्वम् साधारणःसाध्यवदन्यवृत्तिः तेनचव्याप्तिज्ञानप्रति वन्धःक्रियते॥ श्लो॰ ६ ॥ ६॥

ज्ञानविषयत्वाभावात्कथंहेत्वाभासत्वमित्यतोदूषकताबीजमाह तेनचेति एवमग्रेपिक्रियतइति व्याप्तिघटकाव्यभिचारांशेव्यभिचारज्ञानस्यप्रतिवन्धकत्वादितिभावः॥ ६॥ (९ त्वन्नोपादेयमेव नन्वेतादृशसामान्यलक्षणस्यक्वचिद्दोषद्वयसाधारण्येनक्वचिद्दोषत्रयसाधारण्येनचहेत्वाभासानामपञ्चधाविभागोऽसङ्गतइत्यतआह वायुरित्यादि तथाचतत्तत्स्थलीयदोषसामान्यलक्षणामभिप्रेत्यैवपञ्चधाविभागोच्चारणमितिभावः क्वचिदिति यस्सपक्षेविपक्षेचेत्यत्रसपक्षवृत्तित्वनिवेशनमनर्थकंविरुद्धस्यानैकान्तिकत्वेऽ। ऽपत्तिः धर्मिणएकत्वेपिविशेषणभेदेनविशिष्टस्यप्रतिवन्धकत्वेनेविषयितयासाङ्कर्येविरहेणविभागोपपत्तिरितिभावः व्याप्तिघटकाव्यभिचारांशेइति इदञ्चसाध्यवदन्यावृत्तित्वेसतिसाध्यसामानाधिकरण्यम्व्याप्तिरित्यभिप्रायेण व्यापकसामाना॥ श्लो॰ ६॥ ६॥ श्लो॰ ६॥ ६॥

का॰मु॰ रा॰।धिकरण्यस्य व्याप्तित्वेनु स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वसाधारणो बोध्यः न तद्भावज्ञानस्यैव तत्त्वात्ता न प्रतिबन्धक
दि॰रा॰ त्वादिति ध्येयम् एकहेत्वाभासत्वानुपपत्तिरिति निश्चितसाध्यवद्वृत्तित्वज्ञानस्य नीलपटावृत्तित्वज्ञानस्य घटवत्ताज्ञानइवसा
१५९ ध्यसामानाधिकरण्यज्ञाने प्रतिबन्धकता विरहेण दूषकतावीजाभावेनासाधारण्यस्य हेत्वाभासत्वानुपपत्तिरिति भावः ननु केवलान्व

दि॰।प्रतिबध्यत इति व्याप्तिघटकीभूतसामानाधिकरण्यग्रहः प्रतिबध्यत इत्यर्थः एवं साधारणासाधारणानुपसंहारिणा
म्व्याप्तिज्ञानप्रतिबन्धकतारूपदूषकतावीजैक्यान्नैकहेत्वाभासत्वमुपपद्यते साधारणेनाव्यभिचारग्रहस्यासाधारणेन सा
मानाधिकरण्यग्रहस्यानुपसंहारिणा च व्यतिरेकव्याप्तिग्रहस्य प्रतिबन्धादिति भावः प्राचीनमतमाह अन्येत्विति पक्षे साध्य

मु॰ असाधारणः साध्यासमानाधिकरणो हेतुः तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते अन्ये तु सप
क्षावृत्तिरसाधारणः सपक्षश्च निश्चितसाध्यवान् इत्थञ्च शब्दो नित्यः शब्दत्वादित्यादौ यदा पक्षे साध्य
निश्चयस्तदा नासाधारण्यं तत्र हेतो निश्चयादिति वदन्ति अनुपसंहारी च अत्यन्ताभावाप्रतियोगिसा
ध्यकादिः अनेन व्यतिरेकव्याप्तिग्रहप्रतिबन्धः क्रियते विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी अ
यं साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः॥

१ सन्देहदशायामेवासाधारणस्य हेत्वाभासता ननु निश्चयद
शायान्तदा पक्षस्यैव सपक्षत्वेन निश्चितसाध्यवद्व्यावृत्तत्वाभावादित्यनित्यदोषत्वं तस्येत्याह इत्थञ्चेति असाधारण्य घट
कसपक्षत्वस्य निश्चयघटितत्वे चेत्यर्थः तत्र निश्चितसाध्यवति पक्षे साधारणादित्रयाणामेकहेत्वाभासत्वानुपपत्तिं वदन्ती।
त्यनेनास्वरसः सूचितः व्यतिरेकव्याप्तिग्रहप्रतिबन्ध इति केवलान्वयिसाध्यके चान्वयव्याप्तिज्ञानादेवानुमितिरिति भावः राम
यिसाध्यकहेतोर्दुष्टत्वेन तत्साध्यकानुमित्युपपत्तये व्यापकसामानाधिकरण्यमेव व्याप्तिरिति नैयायिकसिद्धान्तो विरुध्यत इत्याशङ्क्याह केवला १५९
न्वयीति प्रतिबन्धकपदं प्रतिबन्धकतेह॥

रा०।विषयार्थकं तस्य च केवलान्वयिसाध्यशब्दार्थेऽत्यन्ताभावाप्रतियोगिसाध्येऽन्वयः॥ ॥॥भेदो न स्यादिति यद्यपि साध्याभावव्याप्य
वान्पक्षः सत्प्रतिपक्षः विरुद्धस्तु साध्यव्यापकाभावप्रतियोगी प्रकृतो हेतुरिति स्वरूपभेदो वर्त्तत एव तथापि यथासाधारणादीनामपरस्प
रवैलक्षण्येपि दूषकताबीजस्यैक्येनैकहेत्वाभासत्वं तथा सत्प्रतिपक्षविरुद्धयोरपि विरोध्यनुमिति सामग्रीत्वेन प्रतिबन्धकतारूपदूषक।

दि०।नन्वेवं साध्याभावसाधकात्सत्प्रतिपक्षाद्विरुद्धस्य भेदो न स्यादित्यत आह सत्प्रतिपक्षे त्विति प्रतिहेतुः प्रतिकूलो द्वि
तीयो हेतुः इति विशेषः इत्यनयोर्भेदः नतु यद्दूषकताबीजैक्येपि हेतुभेदे सत्प्रतिपक्षो हेत्वैक्ये विरुद्धरूपहेत्वाभासा
न्तरमित्युच्यते तदा यत्रान्वयिना हेत्वन्तरेण प्रतिरोधस्तत्र सत्प्रतिपक्षो यत्र तु व्यतिरेकिणा तत्र हेत्वाभासान्तरं स्यादतो भेद।

मु०सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभावसाधकः अत्र हेतुरेक एवेति विशेषः साध्याभावसाधक एव हेतुः
साध्यसाधकत्वेनोपन्यस्त इत्यशक्ति विशेषोपस्थापकत्वाच्च विशेषः सत्प्रतिपक्षः साध्याभावव्याप्यवान्प
क्षान्तरमप्याह साध्याभावेति वस्तुगत्या साध्याभावसाधके हेतावेव तत्साध्यसाधकत्वभ्रम इति स्थापनावादिन ऽस्सः
त्प्रतिभ्रमरूपाऽशक्तिसूचकत्वं विरुद्धस्य न त्वेवं सत्प्रतिपक्षस्येति भावः साध्याभावव्याप्येति एवं साध्यवदन्यत्वव्याप्य
वान्पक्षः पक्षनिष्ठो साध्याभावसाध्यवदन्यत्वव्याप्याव पि बोध्यौ अन्यतमत्वादिनाऽनुगमान्न विभागव्याघातः॥

तावीजैक्यादेकहेत्वाभासत्वं स्यादिति भावः बोध्याविति नन्वेवञ्चानुपयस्यानुगतरूपाभावात्कथमेकरूपेणैषां विभागः यदि च सा।
ध्याभावबोधकत्वेन विभागस्तदा विरुद्धोप्येतन्मध्य एवान्तर्भूत इत्यत आह अन्यतमत्वेति आदिनैतच्चतुष्टयविषयकधीविषयत्वाव
च्छेदकधर्मवत्त्वपरिग्रहः सत्प्रतिपक्षव्यवहारोपयोगिन मित्यनेनैतादृशस्थले प्राचां सत्प्रतिपक्षव्यवहारमात्रम् न त्वयं हेतुदोषा
त्मकसत्प्रतिपक्ष इति सूचितं प्रथमोपस्थितेनानुपलक्षणं समबलविरोधिपरामर्शद्वयस्तत्त्व एव तथा व्यवहारादित्यवधेयम्॥ ७॥ ॥

काप्र॰ टि॰ टी॰ १६०

रा॰ प्रकृतानुपयोगः हेत्वाभासनिरूपणप्रस्तावे उपयोगाभावः नन्वयमेव सत्प्रतिपक्षाभावाद्धेत्वाभास इति कुतो नोपयोग इत्यत आह उपस्थि

दि॰ सत्प्रतिपक्षव्यवहारौपयिकमन्येषां सत्प्रतिपक्षलक्षणमाह अगृहीतेति नित्यत्वव्याप्यशब्दत्ववत्ताज्ञानशून्यकालीनानित्यत्वव्याप्यकृतकत्वपरामर्शसत्त्वेपि सत्प्रतिपक्षव्यवहाराभावात्कालीनान्तमुपस्थितिविशेषणम् गृहीताप्रामाण्यकनित्यत्वव्याप्यवत्ताज्ञानकालीनानित्यत्वव्याप्यकृतकत्वपरामर्शसत्त्वेपि तद्व्यवहाराभावादगृहीताप्रामाण्यकेति प्रथमोपस्थितिविशेषणं। तादृशकालीनानित्यत्वव्याप्यवत्तापरामर्शसत्त्वेपि तत्राप्रामाण्यग्रहकाले तथाव्यवहाराभावादगृहीताप्रामाण्यकत्वं द्वितीयोपस्थितिविशेषणम् व्यवहारमात्रोपयोगिनो निरुक्तरूपस्य प्रकृतानुपयोगः उपस्थितिघटितत्वेनोक्तरूपस्य स्वरूपसत एवोपयुक्तस्याभासता

सु॰ अगृहीताप्रामाण्यकसाध्यव्याप्यवत्ताप्रकारकोपस्थितिकालीनागृहीताप्रामाण्यकतदभावव्याप्यवत्ताप्रकारकोपस्थितिविषयस्तथेत्यन्ये अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम् अत्र केचित् यथा घटाभावव्याप्यवत्ताज्ञाने विद्यमानेपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते यथा च शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीरेवं कोटिद्वयव्याप्यदर्शनेपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव ॥

याम प्रयोजकत्वादित्यस्वरसं सूचयन्नन्य इति सत्प्रतिपक्षस्य दूषकताबीजं प्रदर्शयति अत्रेत्यादिना सन्दिग्धप्रतिपक्षस्य संशयजनकत्वं दूषकताबीजमन्यत्त्वनुमितिप्रतिबन्धकत्वन्तदभावव्याप्यवत्ताज्ञानस्यानुमितिप्रतिबन्धकत्वे मानाभावादिति तत्त्वको शकारमतं दूषयितुमुपन्यस्यति अत्र केचिदित्यादिना अनुमितिर्भवत्येवेति अनुमितिसामग्रीतदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावात् क्लृप्ततत्तदभावानुमितिसामग्रीभ्यामेव तत्तदभावकोटिकसंशयानुमित्युत्पत्तौ संशयानुमितिसामग्र्युभयव्याप्यवत्तानिश्चयत्वेनातिरिक्तहेतुताकल्पनप्रयुक्तगौरवाभावाच्चेति भावः ॥ श्री १ ॥ १ ॥ श्री १ ॥ ॥ ७ ॥ ७ ॥ २ ॥

तीति। विरोधिपरामर्शद्वयस्य स्वरूपसत एव परामर्शकार्यप्रतिबन्धकत्वात्तज्ज्ञानस्यापि तदाकलितत्वात्तज्ज्ञानमनुमितिप्रतिबन्धकं तद्धि ॥ ६ ॥ ४ ॥ श्लोम १६०

रा०। पावच्छिन्नस्यैव हेत्वाभासतया नैतस्य हेत्वाभासता सम्भवइतिभावः सूचपनीति ननु रत्नकोशकारमतेन तद्वत्ताज्ञाने तदभावव्याप्य
वत्ताज्ञानस्याप्रतिबन्धकत्वेन परस्परानुमितिप्रतिबन्धकस्य सत्प्रतिपक्षस्थलेऽसम्भवेपि निश्चयात्मिकानुमितिस्तु न्यून्यशक्तिकयोस्तु स्वा
वव्याप्यवत्ताज्ञानयोर्मिलितयोस्साध्यसंशयहेतुत्वं कल्पनीयमितिगौरवमित्याशङ्कां निराकर्तुमाह कृप्तेति अयम्भावः तत्तत्परामर्श
स्य तत्तद्विधेयकानुमितित्वमेवकार्यतावच्छेदकन्तु निश्चयत्वमपि तद्घटकम् परन्तु एकैकपरामर्शसत्वे कोट्यन्तरभासकसामग्र्यभा

दि०। ननु यत्रोभयभासकसत्त्व उभयभानन्तत्रापि पित्तादिदोषसत्वेपि पीतत्वशुक्लत्वोभयस्मृतावुभयोर्भानापत्तिरित्यत आह
फलवलेनेति तथाच तत्र पीतत्वसाक्षात्कारस्यैवानुभाविकतया शुक्लत्वग्रहेपि पित्तरूपदोषप्रतिबन्धकत्वं कल्प्यमि

सु०। यत्र चैककोटिव्याप्यदर्शनं तत्राधिकवलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः फलवलेन चा
धिकबलस्समवलभावः कल्प्यत इत्याकु स्तनन्तद्भावव्याप्यवत्ताज्ञानेसति तदुपनीतभानविशेष
शाब्दबोधादेरनुदयाद्लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रेन स प्रतिबन्धकता लाघ
वात्तदुपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकतागौरवात्॥ १ त्वापीतत्वसाक्षात्कारसाम

ग्र्या अधिकवलवत्त्वमेव द्दूरत्वदोषेसत्यपि स्थाणुत्वपुरुषत्वयोः स्मृतौ संशयस्यैवोदयात्तत्सामग्र्योः समवलवत्त्वमेवक
ल्प्यत इतिभावः ज्ञानमात्रे तादृशज्ञानत्वावच्छिन्ने विशेषे दोषविशेषाजन्ये गौरवात् कार्यकारणभावद्वयकल्पने गौर
१ वादितिभावः

वात् निश्चयात्मिकाऽनुमितिर्भवति उभयपरामर्शसत्वे च कारणवलादुभयकोट्योर्विरोधितयाभानेर्थात्संशयोभवतीतिना
धिककार्यकारणभावकल्पनेनन्मतेइति उभयस्मृतावपि संशये कोटिद्वयस्योपनयसन्निकर्षेणैवभानात् पीतत्वशुक्लत्वरूपकोटिद्वयोपस्थि
तौ पित्तदोषादपि संशयएव स्यात्पीतत्वनिश्चय इतिभावः आधिक्यमिति मूलेनीलधूमादिहेतुकस्थलएवव्याप्यत्वासिद्धेरभिधानादितिभावः ३।

का॰मु॰ रा॰। अत्रचाव्यभिचारविशिष्टसाध्यसामानाधिकरण्याभावतद्व्याप्यावपिव्याप्यत्वासिद्धौबोध्यौव्यावर्त्यतमत्वेनानुगमःदूषकतावीजम्व्याप्ति
टि॰रा॰ ज्ञानप्रतिबन्धकतावच्छेदकत्वम् नचैवन्दूषकतावीजस्यैकेनव्यभिचारस्यहेत्वाभासान्तरत्वन्नस्यादितिवाच्यम् दूषकतावीजस्यै।
१६१ दि॰। कथमनुमितिरिति अनुमितेरपितत्प्रतिवध्यतावच्छेदकाक्रान्तत्वादितिभावः कथन्तर्ह्युभयव्याप्यवत्ताविश्चया
त्मात्यस्मिकःसंशयइत्याशंकायांनभवत्येवताववद्यावत्तन्निश्चयेऽप्रामाण्यन्नगृह्यतइत्याह यत्रचेति आश्रयासिद्ध्यादीनां

मु॰। तथाचप्रतिबन्धकसत्वात्कथमनुमितिःनहिलौकिकसन्निकर्षस्थलेप्रत्यक्षमिवसत्प्रतिपक्षस्थलेसंश
याकारानुमितिःप्रामाणिकीयेनानुमितिभिन्नत्वेनापिविशेषणीयम् यत्रचकोटिद्वयव्याप्यवत्ताज्ञानन्त
त्रोभयत्राप्रामाण्यज्ञानात्संशयोनान्यथाऽगृहीताप्रामाण्यकस्यैवविरोधिज्ञानस्यप्रतिबन्धकत्वादितिअ
सिद्धिस्तुआश्रयासिद्ध्याद्यन्यतमत्वम् आश्रयासिद्धिःपक्षेपक्षतावच्छेदकस्याभावःयत्रकाञ्चनमयः
पर्वतोवह्निमानितिसाध्यतेतत्रपर्वतोनकाञ्चनमयइति ज्ञानेविद्यमानेकाञ्चनमयेपर्वतेपरामर्शप्रतिब
न्धःफलम्स्वरूपासिद्धिस्तुपक्षेव्याप्यत्वाभिमतस्याभावः यत्रह्रदोद्रव्यन्धूमादित्यादौपक्षेव्याप्य॰
त्वाभिमतस्यहेतोरभावेज्ञानेपक्षेव्याप्यहेतुमत्ताज्ञानरूपस्यपरामर्शस्यप्रतिबन्धःफलम् साध्याप्रसिद्ध्या
दयस्तुव्याप्यत्वासिद्धिमध्येऽन्तर्भूताःसाध्येसाध्यतावच्छेदकस्याभावःसाध्याप्रसिद्धिःएतत् ज्ञाने॰
जानेकाञ्चनमयवह्निमानित्यादौसाध्यतावच्छेदकविशिष्टसाध्यपरामर्शप्रतिबन्धःफलम्॥ श्री।

दिनास्वरूपासिद्धिव्याप्यत्वासिद्ध्योःपरिग्रहःसाध्याप्रसिद्ध्यादीनामाधिक्यन्निराकरोति साध्याप्रसिद्ध्यादयस्त्विति आदिना एम॰
केऽपिवाधसत्प्रतिपक्षयोरिवव्यभिचारासिद्ध्योर्मुनिनापृथगुपदेशोनहेत्वाभासान्तरतासम्भवाज्ञापकस्सइतिसर्वत्रइतिशेषः॥६॥ ॥७॥ ॥३॥६॥ "साधनाप्रसिद्धिपरिग्रहः॥ १६१

रा०।सत्वादिति नीलधूमस्य धूमानतिरिक्ततया धूमव्याप्तिविरहादिति भावः अनवच्छेदकतयेत्यस्य व्याप्तेरित्यादिः नत्वच्छेदेनेति यो धर्मो यस्यानवच्छेदकस्तदवच्छेदेन न तदभावः मूलावच्छेदेन वृक्षे कपिसंयोगाभाववदिति भावः अवच्छेदकत्वाभावादिति तन्मूलस्य वृक्षवृत्तिकपिसंयोगानतिरिक्तवृत्तित्वेपि स्वरूपसम्बन्धरूपावच्छेदकत्वाभावादेव मूलावच्छेदेन वृक्षे कपिसंयोगाभावोपगमादिति भावः व्याप्य

दि०।केषांचिन्मतमाह। एवं वह्निमानित्यादिना वदन्तीत्यनेनास्वरसस्तद्बीजं तु नीलधूमे व्याप्तिसत्वात्कथं व्याप्यत्वासिद्धिः न च तत्र व्याप्तिसत्वेपि नीलधूमत्वस्यानवच्छेदकतया तदवच्छेदेन व्याप्यत्वासिद्धिरेवेति वाच्यम् अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य नीलधूमत्वेपि सत्वात् स्वरूपसम्बन्धरूपावच्छेदकत्वाभावाद्व्याप्यत्वासिद्धिरित्यपि न तथास।

मु०।एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः यथा काञ्चनमयधूमादित्यादौ अत्र हेतुतावच्छेदकविशिष्टहेतुज्ञानाभावान्नैतद्धेतुकव्याप्तिज्ञानादेरभावः फलम् एवं वह्निमान्नीलधूमादित्यादौ गुरुतया नीलधूमत्वस्य हेतुतानवच्छेदकत्वमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति॥

तिपशुमान् सास्नादिमत्त इत्यादावपि व्याप्यत्वासिद्ध्यापत्तेः सास्नाद्यपेक्षया गोत्वादिजातेर्लघुत्वेन सास्नादेः स्वरूपसम्बन्धरूपावच्छेदकत्वाभावात् अस्तु वा नीलधूमत्वादेः स्वरूपसम्बन्धरूपावच्छेदकत्वाभावात्तदवच्छेदेन व्याप्यभावरूपव्याप्यत्वासिद्धिर्न तु हेत्वाभासत्वमनुमितिं तत्करणीभूतव्याप्तिज्ञानाविरोधित्वात्॥ त्वासिद्ध्यापत्तेरिति स्वरूपसम्बंधरूपावच्छेदकत्वं यस्य नास्ति तदवच्छेदेन व्याप्यत्वाभावोपगमो व्यर्थविशेषणत्वाभावेपि गुरुधर्मेणा हेतुतायां सर्वत्र व्याप्यत्वासिद्धिप्रसंगादिति भावः ननु गुरुधर्मेण हेतुतायां सर्वत्र व्याप्यत्वासिद्धिरिष्टैवेत्यत आह अस्तु वेति अविरोधित्वादिति हेतुतावच्छेदकांशे व्याप्यत्ववच्छेदकतानवगाहिनोपि व्याप्तिप्रकारकपक्षधर्मताज्ञानस्यानुमितिहेतुत्वोपगमात् अत एव व्याप्यांशे निर्धर्मितावच्छेदकादपि वह्निव्याप्यवानिति ज्ञानात् परामर्शादनुमितिरङ्गीक्रियत इति भावः

का॰मु॰ रा॰। मीमांसकमनानुयायी शङ्कते नचेति तथाचोक्तपरामर्शस्थलेपिवन्हिव्याप्योवन्हिव्याप्यइति ज्ञानांतरवतोऽनुमितिर्नास्त्येवेति भावः ६॥
दि॰रा॰ तावतापिउक्तस्थलेऽनुमिति वारणानुरोधेनापिउपसंहरति तस्मादिति गुरुधर्मस्यहेतुतावच्छेदकत्वस्थलेसर्वत्रप्राचीनैर्व्याप्यत्वासिद्धिर्ना
१६२ ङ्गीक्रियते अपितुस्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितत्वस तथात्वस्थलएवेत्यभिप्रायेणाह व्यर्थविशेषणस्थलइत्यपि

दि॰। नचवन्हिमद्वन्यावृत्तिप्रमेयवानिति प्रमेयत्वसामानाधिकरण्येनव्याप्त्यवगाहिज्ञानादनुमित्यापत्तिवारणायहेतुताव।
च्छेदकावच्छेदेनव्याप्तिज्ञानस्यैवकारणतयातद्विरोधितयानिरुक्तव्याप्यत्वासिद्धिर्हेत्वाभासइतिवाच्यम् तावताप्यनतिरिक्त
वृत्तित्वरूपावच्छेदकत्वग्राह्यज्ञानस्य कारणत्वेपितत्रस्वरूपसम्बन्धरूपावच्छेदकत्वाभावग्रहस्य ग्राह्याभावानव।
गाहितयाऽविरोधित्वात्तस्माद्व्यर्थविशेषणस्थलेनव्याप्यत्वासिद्धिर्हेत्वाभासः पुरुषस्त्वधिकेननिगृह्यतइति साध्याभावा

मु॰। वाधस्तुपक्षेसाध्याभावादिः एतस्यत्वनुमितिप्रतिवन्धः फलम् तद्धर्मिकतदभावनिश्चयोलौ
किकसन्निकर्षाजन्यदोषविशेषाजन्य तद्धर्मिकतज्ज्ञानमात्रेविरोधीति॥ श्री ६॥ ६॥ ६॥

दि॰ रित्यादिनासाध्यवदन्यत्वस्यपक्षावृत्तिसाध्यादेश्चपरिग्रहः तद्धर्मिकतदभावनिश्चयः अनाहार्याप्रामाण्यज्ञानाना
स्कन्दिततद्धर्मिकतदभावनिश्चयः वाधबुद्ध्युत्तरक्षणेलौकिकसन्निकर्षजन्यविशिष्टबुद्धेरानुभविकत्वादाह लौकिकेति
सन्निकर्षाजन्येति नन्वेवन्तदिन्द्रियजन्यलौकिकवाधनिश्चयोत्तरन्तदिन्द्रियजन्यलौकिकतद्विशिष्टबुद्ध्यापत्तिरितिचे

केनेति अधिकोक्तेर्निग्रहस्थानत्वेनधूमादिमत्त्वेवसामंजस्येनीलपदप्रयोगस्याधिकत्वादितिभावः साध्यादेश्चेत्यादिनासाध्याभाववत्यस्सा।
ध्यवदन्यपक्षयोः परिग्रहः प्रतिवध्यतावच्छेदककोटौलौकिकसन्निकर्षाजन्यनिवेशस्यफलमाह वाधबुद्ध्युत्तरेति एवम् प्रतिवध्यतावच्छे रा॰म॰
दककोटौलौकिकत्वनिवेशेनतद्विशिष्टबुद्ध्यापत्तिरितिसमाने॥ श्री ६॥ ६॥ श्री६॥ ६॥ ॥श्री६ ॥६॥ श्री६॥ ॥६॥ ६॥ ६॥ ६॥ १६२

रा०। न्द्रियजन्यबाधबुद्ध्युत्तरन्लौकिकसन्निकर्षेणापि तद्विशिष्टबुद्धेरनुपगमान्नानिष्टापत्तिरपि सम्भवतीति भावः॥ ॐ॥ अलौकिकत्वं
लौकिकसन्निकर्षाजन्यत्वं ननु लौकिकाभावप्रमायां सत्यां प्रतियोगिनि लौकिकसन्निकर्षासम्भवादेव न लौकिकतद्वत्ताबुद्ध्यापत्तिरि

टि०। अलौकिकत्वम्प्रतिबध्यतावच्छेदककोटावनिवेश्य तदिन्द्रियजन्यतद्विशिष्टबुद्धौ तदिन्द्रियजन्यलौकिकतदा-
भावनिश्चयत्वेन प्रतिबन्धकत्वोपगमात् तदिन्द्रियजन्योपनीतभानात्मकबाधनिश्चये तु तदिन्द्रियजन्यलौकि-
कतद्विशिष्टबुद्ध्युदयात् प्रतिबन्धकतावच्छेदककोटौ लौकिकत्वस्य निवेशः न च लौकिकतदिन्द्रियजन्याभावप्रमास्थले
तदधिकरणे प्रतियोगिनोऽसत्त्वादेव तद्विशिष्टलौकिकप्रत्यक्षापत्तिरिष्यते तथाविधप्रतिबध्यप्रतिबन्धकभावेने-
ति वाच्यम् यत्र प्रतियोग्यधिकरण एव सन्निकृष्टाधिकरणान्तरवृत्तेरभावस्य लौकिकप्रत्यक्षात्मकारोपो दोषेण ज-
नितस्तदुत्तरन्तदधिकरणे प्रतियोगिनो लौकिकप्रत्यक्षापादनात् तत्राभावलौकिकप्रत्यक्षजनकदोषस्य प्रति-
बन्धकत्वादेव नेयमापत्तिरन्यथाऽभावारोपोत्पत्तिक्षणे प्रतियोगिप्रत्यक्षापत्तिरिति तु न यत्र विनश्यदवस्थदोषे-
णाभावलौकिकप्रत्यक्षात्मकारोपस्तदुत्तरम्प्रतियोगिप्रत्यक्षापादनात् यत्राभावलौकिकप्रमासमकालन्तद्धि-
यस्मिणो वा तदधिकरणे प्रतियोगिप्रकारकानुभूयमानारोपजनकदोषसमवधानं तत्राभावप्रमोत्तरम्प्रतियोगिनो
लौकिकप्रत्यक्षात्मकारोपापादनवारणाय वा इन्द्रियभेदेन तथाविधप्रतिबध्यप्रतिबन्धकभावोपगमात् शङ्खो
न पीतः वंशो नोरग इति निश्चयेऽपि पित्तमण्डूकवसाञ्जनादिदोषवशाच्छङ्खः पीतः वंश उरग इत्यारोपोदयात्तत्र।
व्यभिचारवारणायाह दोषविशेषेति दोषसामान्याजन्यत्वनिवेशे भ्रममात्रस्यैव बाधाप्रतिबध्यत्वापत्तिरतो विशेषे-
ति तथा च पित्तमण्डूकवसाञ्जनादिदोषान्विशिष्योपादाय तदजन्यत्वं प्रतिबध्यतावच्छेदककोटौ निवेशनीयमिति भावः॥

ति किं समानेन्द्रियस्थले प्रतिबध्यप्रतिबन्धकभावान्तरेणेति शङ्कते न चेति प्रतियोगिप्रत्यक्षापादनात् तत्प्रत्यक्षापादनसम्भवात्॥ श्री६॥

का·गु· रणं लौकिकाभावभ्रमस्थले प्रयोजनमुपपाद्य प्रमास्थले तदाह यत्राभावेति समवधानमिति इदन्त्वप्रमातुः पूर्वमेव तादृशदोषसमवधा
दि·रा· नेयाधमप्रमैव न सम्भवति प्रतियोगिभ्रमजनकदोषेण प्रतिबन्धादित्यभिप्रायेणोक्तमिति बोध्यम् दोषविशेषाजन्यत्वनिवेशस्य प्रयो
१६३ दिं न च पित्तद्रव्यात्मकदोषाजन्यत्वनिवेशो व्यर्थः शङ्खः पीत इति तु मे शङ्खांशेऽनुभूयमानस्यैव पित्तद्रव्यपीति
म्न आरोपोपगमेन तदंशेपि लौकिकत्वादलौकिकत्वस्य प्रतिबध्यतावच्छेदके निवेशादेव तत्र व्यभिचारवारणादिति वा
च्यम् पित्तद्रव्यस्यान्तरानवस्थानदशायामपि तत्पीतिम्नः शङ्खादौ प्रत्यक्षोदयेन स्मर्यमाणारोपस्यैव तत्र नवीनैः स्वीका
रात्तदंशे तस्यालौकिकत्वात् तथा सति शङ्खः पीत इति प्रत्यक्षोत्तरं पीतं साक्षात्करोमीति साक्षात्कारित्वग्रहानुपप
त्तिस्तद्ग्राहकलौकिकविषयताया स्तत्राभावादिति तु न लौकिकविषयताया इव दोषजन्यत्वस्यापि साक्षात्कारित्वव्यञ्जक
त्वादन्यथा यत्सुरगइति स्मर्यमाणारोपे साक्षात्कारित्वग्रहानुपपत्तेः शङ्खो न पीत इत्यादितदिन्द्रियजन्यबाधबुद्ध्यु
त्तरम्पित्तादिदोषवशात्तदिन्द्रियजन्यः शङ्खः पीत इत्यारोपो यद्यनुभवसिद्धस्तदा पूर्वोक्तेन्द्रियभेदभिन्नप्रतिबध्यप्र
तिबन्धकभावेपि दोषविशेषाजन्यत्वम्प्रतिबध्यतावच्छेदके निवेशनीयमिति ध्येयम् ननु बाधप्रतिबध्यतावच्छेद
ककोटौ लौकिकान्यत्वस्य निवेशे बाधनिश्चयोत्तरं लौकिकसन्निकर्षजन्यसंशयापत्तिरिति चेन्न भूतलं घटवदित्या
द्याकारकलौकिकप्रत्यक्षोत्पत्तिकाले ___ स्वातन्त्र्येण कथञ्चिदुपस्थितस्य घटाभावादेर्भूतले प्रकारतया भानवारणाय
समानधर्मितावच्छेदकतत्कोटिकलौकिकप्रत्यक्षसामग्र्या विपरीतकोटिभानप्रतिबन्धकत्वमवश्यमङ्गीकरणी
यम् तथा च बाधनिश्चयोत्तरमपि नापत्तिर्लौकिकसन्निकर्षजन्यसंशयस्य तत्कोटिकलौकिकप्रत्यक्षसामग्र्याः
प्रतिबन्धिकायाः सत्त्वेन विपरीतकोटिभानासम्भवात् तर्हि कापि लौकिकसन्निकर्षजन्यसंशयो न स्यादिति चेदोम् ॥ तम·
जनमाह शङ्खो न पीत इत्यादि ॥ भ्रममात्रस्यैवेति दोषम्विना भ्रमानुत्पत्तेरिति भावः ॥ मण्डूकेति भेकवसाञ्जनरू ॥ श्री ६ ॥ श्री ग ६ ७ ॥ १६३

रा०पदोषादूरत्वास्य प्रत्यक्षभ्रमोत्पादादितिभावः आदिनाइन्द्रजालमंत्रादिदोषाणां सङ्ग्रहः तद्यञ्जकेति साक्षात्कारत्वजातिव्यञ्जकेत्यर्थः यद्यनुभवसिद्धइत्यनेनवस्तुतस्तादृशानुभवएवनास्तिकिमर्थंसमानेन्द्रियस्थलीयप्रतिवध्यतावच्छेदकेतन्निवेशनीयमितिसूचितम् संशयापत्तिरितीति संशयनिश्चयसाधारणतद्वत्ताबुद्धित्वस्यैवप्रतिवध्यतावच्छेदकत्वेनसंशयपृथक्प्रतिवन्धकताया अभावादितिभावः॥

दि०।ज्ञानप्रत्यासत्त्यैवपूर्वोपस्थितकोट्योर्भानसम्भवादिति यत्तुसंशयपूर्वंतत्कोट्यंशेलौकिकसन्निकर्षसत्वेकथंसंशयस्यनलौकिकत्वंकथंवातत्रसंशयेविपरीतकोटिभानन्तत्कोटिकलौकिकप्रत्यक्षसामग्र्याः प्रतिवन्धिकायाः सत्वादितितन्न तत्रलौकिकसन्निकर्षसत्वेपिसंशयजनकदूरत्वादिदोषस्यलौकिकप्रत्यक्षसामग्र्याः प्रतिवन्धकस्यसत्वेनलौकिकप्रत्यक्षसामग्र्यभावादुभयोपपत्तेरित्यन्यत्रविस्तरः कस्यचिन्मतन्दूषयति नचेति इतियुक्तमित्यनेनान्वयि

सु०।ननुसंशयसाधारणंपक्षेसाध्यसंसृष्टत्वज्ञानमनुमितिकारणम् तद्विरोधितयाचवाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमितियुक्तम् अप्रसिद्धसाध्यकानुमित्यनापत्तेःसाध्यसंशयादिकं विनाप्यनुमित्युत्पत्तेश्च

नन्वेवम्वाधनिश्चयकालेसंसृष्टत्वज्ञानाभावादेवानुमित्यभावोपपत्तौवाधनिश्चयस्यनानुमितिविरोधित्वमितिहेत्वाभासत्वन्नस्यादतआह तद्विरोधितयेति अनुमितिकारणीभूतस्यसाध्यसंसृष्टत्वज्ञानविरोधितयेत्यर्थः नन्वप्रसिद्धसाधकानुमितिः कुत्रापिनभवत्येवेत्यतआह साध्यसंशयेति॥ श्रो०१॥ ॥१ श्रो०१॥ ॥ १॥ श्रो०१॥ ॥७॥॥

लौकिकसन्निकर्षजन्यसंशयएवनसम्भवतीति एककोटिलौकिकप्रत्यक्षसामग्रीविरोधिकोटिभानप्रतिवन्धकत्वादन्यथाभूतलेघटवदितिनिश्चयकालेपिसंशयापत्तेरितिकथंवाधनिश्चयोत्तरंलौकिकसन्निकर्षजन्यसंशयोपपत्तिरितिभावःसमाधत्ते भूतलमित्यादि तद्धीति एककोटिलौकिकप्रत्यक्षसामग्र्याविपरीतकोटिभानप्रतिवन्धकत्वमित्यर्थः क्वापिवाधनिश्च०॥ श्रो॥१ ॥१॥ १॥

का॰मु॰ रा॰। यानुत्तरमपि उक्तशङ्कायामिष्टापत्तिमाह संशयो न स्यादिति दूरस्थस्थाण्वादिसंशयो न स्यादित्यर्थः ॥ॐ॥ न लौकिकत्वं न लौकिकसन्निक
दि॰रा॰ र्षजन्यत्वं लौकिकसन्निकर्षसत्त्वे कोटिभाने बाधकाभावादिति भावः उभयोपपत्तेरिति संशये लौकिकसन्निकर्षजन्यत्वस्य विपरीत
१६४ कोटिभानस्य चोपपत्तेरित्यर्थः लौकिकसन्निकर्षसत्त्वेपि तस्य दूरत्वदोषेण कोट्यभानकत्वादिति भावः अन्यत्र विस्तर इत्यनेन न संशय
जनकदोषसामान्याभावे तु सन्निकृष्टकोटेर्निश्चय एवेति सूचितम् कस्यचिन्मत इति ननु संशयप्रसक्ताबाधित इति भावः शून्यात्मनिश्च
यवतोपि सिषाधयिषयाऽनुमित्युपपत्तेर्निश्चयसाधारणसाध्यसंसर्गज्ञानत्वेनैवैतन्मते कारणतायाः प्रतिपादकत्वादिति विभावनीयम्

दि॰। ननु संशयशून्यकालेपि सिषाधयिषाकालीनसाध्यनिश्चयात्मकसाध्यसंसृष्टत्वज्ञानमस्त्येवेत्यत आह आदीति आदिना।
सिषाधयिषाकालीनसिद्धिपरिग्रहः नच संशयोत्तरोत्पत्त्यैवानुमितिसिद्धिरिति वाच्यम् सतिविशेषदर्शने संशयायोगात्

मु॰। एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं मानाभावाद्गौरवाच्च ॥ श्री ॥ ॥

पक्षविशेष्यकसाध्याभावज्ञाने प्रमात्वनिश्चयोऽनुमितिप्रतिबन्धकस्तदभावः कारणमतस्तादृशप्रमात्वमेव बाध इति प्रा
चीनमतं दूषयति एवमिति प्रमात्वज्ञानमपि प्रमात्वनिश्चयोपि मानाभावादिति ग्राह्याभावानवगाहिनस्तादृशज्ञानस्य
मूले अप्रसिद्धेति पूर्वमगृहीतसाध्यविधेयकेत्यर्थः तथाच पृथिवीतरत्वव्याप्याभावप्रतियोगिगन्ध विरोधित्वे मानाभावादित्यर्थः ॥
वती पृथिवीति व्यतिरेकिपरामर्शजन्यसाध्यविशेषणिकायाः पृथिव्यामितरभेद इत्यनुमितेरभावापत्तेरित्यर्थः उत्तरदूषणमवतारय
ति नन्वप्रसिद्धेति नंभवत्येवेति आचार्यमते सर्वत्रान्वयव्याप्तिज्ञानस्यैवानुमितिहेतुत्व्यतिरेकसहचारेणापि अन्वयव्याप्तिरेव गृह्यते
इति तैरङ्गीकारादुभयपरामर्शादनुमितेरसिद्धत्वादन्वयव्याप्तेस्साध्यघटितमूर्तिकत्वेन व्याप्तिज्ञानसमय एव साध्यज्ञानावश्यकत्वादिति। श्रम॰
भावः॥ ॥ सिद्धिपरिग्रह इति सिद्धिस्साध्यनिश्चयः सिद्धिसत्त्वेसि ॥ ॥ श्री ॥ श्री ॥ ॥ श्री ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ १६४

राणसाध्यविषयांविनानाऽनुमितिरुत्तरकालीनान्तम् तथाचघनगर्जितेनमेघानुमितिस्थलेसंशयनिश्चययोर्द्वयोरप्यभावेनसाध्यवत्ताज्ञान
स्यानुमितिहेतुरभावः घनगर्जितेनमेघानुमितिस्थलेपिसंशयंकल्पयित्वाक्षणविलम्बेनैवानुमितिरुपेयते अतोनानुपपत्तिरित्याशङ्कते
नचेति संशयोत्पत्त्यैवेतिपाठःसतीति गर्जितश्रवणानन्तरमेव मेघव्याप्यगर्जितवत्तापरामर्शोत्पत्त्यानेनमेघाभावकोटिकसंशयप्रतिबन्धा
दित्यर्थः नचविशेषदर्शनेनप्रतिबन्धाद्भावकोटिभानासम्भवान्मनसानिश्चयएवास्त्विति वाच्यम् तथासतिसिद्धेः प्रतिबन्धकत्वेना
नुमित्यनुपपत्तेः कल्प्यतइतिचेत् परामर्शस्यैवनाशापत्त्याऽनुमित्यनिर्वाहादितिभावः अत्राप्यन्तरपदमप्रामाण्यादिकमेवोक्तस्थलेपूर्वे

दि०ननुपक्षेसाध्याभावज्ञानेपितत्राप्रामाण्यज्ञानकालेऽनुमितेरुदयात्तत्साध्याभावज्ञानंप्रतिबन्धकम् अस्मन्मते
तुतत्रसाध्याभावज्ञानेप्रमात्वनिश्चयाभावादेवात्रानुमित्युत्पत्तिरुत्तआह गौरवादिति तथाचतत्रानुमितिनिर्वाहा
यसंशयनिश्चयसाधारणाप्रामाण्यज्ञानाभावएवप्रतिबन्धकतावच्छेदककोटौनिवेश्यते ननुपक्षविशेष्यकसा
ध्याभावज्ञानप्रमात्वनिश्चयत्वेनप्रतिबन्धकत्वङ्गौरवादित्यर्थः यत्रपक्षेसाध्याभावज्ञानमस्तिनतुतत्राप्रामाण्य
ज्ञानन्तवाऽप्रामाण्यज्ञानन्तत्राप्यनुमितिर्नभवत्येवेतिभावःसाध्याभाववत्पक्षघटितप्रमात्वविषयकत्वेऽनुमितिप्र
तिबन्धकतानतिरिक्तवृत्तित्वसत्त्वात्तस्याभासत्वन्तु वीरमितितुनप्रमेयत्वविशिष्टव्यभिचारादेरिवतादृशविशिष्टा
न्तरघटितत्वेनाभासत्वायोगादिति॥

१संशयाभावादितिध्येयम् यदिचैतत्पाठेप्रामाण्येप्याग्रहःतदासंशयंविनेत्यादि मू
लस्यव्याप्तिस्मरणादिनापरामर्शोत्पत्तिक्षणे पूर्वसंशयस्यनाशादित्यभिप्रायवत्तोपरिकल्प्यघनगर्जितस्थलेपिसंशयोत्पत्त्यनन्तरमेवानुमि
तिरित्यभिप्रायस्त्वकल्पयित्वैवसंशयोयोजनीयः नचसाध्याभावज्ञानस्यज्ञानत्वेननिवेशेसंशयधर्मिकप्रमात्वनिश्चयदशायामपि अनुमिति
प्रतिबन्धापत्तिरितिवाच्यम् इष्टापत्तेः साध्याभावांशेनिश्चितप्रामाण्यकस्यसंशयस्यापिसाध्याभावनिश्चयसमशीलत्वादस्योभयत्रापिनिश्चयनि

का॰मु॰ रा॰॰नैतन्मते गौरवापत्तिरिति भावः ग्राह्याभावानवगाहिन इति। यद्धर्मावच्छिन्नग्राह्यसाध्याभावानवगाहिन इत्यर्थः।तेन साध्याभाववत्ति
दि॰रा॰ साध्याभावप्रकारकमित्यप्रामाण्यनिश्चयस्य साध्याभावावगाहित्वेपि नानुपपत्तिः नसाध्याभावेति नसाध्याभावनिश्चय इत्यर्थः प्रतिवा
१६५ दिना साध्याभावनिश्चयस्यैव प्रतिवन्धकत्वोपगमादित्यवधेयम्॥ ७॥ गौरवादिति पक्षविशेष्यकत्वापेक्षया पक्षविशेष्यकसाध्याभा
व ज्ञानविशेष्यत्वस्य साध्याभावनिश्चयत्वापेक्षया साध्याभाववत्तिसाध्याभावप्रकारकत्वनिश्चयत्वस्य चातिगुरुत्वादित्यर्थः नन्वप्रामा
ण्यज्ञाना — नास्कन्दितपद्रूपावच्छिन्नविषयकनिश्चयत्वमनुमितिप्रतिवन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्नत्वमेव वह्निहेत्वाभासत्व

दि॰॰नन्वगृहीताप्रामाण्यकसाध्याभावनिश्चयस्य प्रतिवन्धकत्वे प्रथमोपस्थितप्रमात्वनिश्चय एव तथा स्यादत आ
ह अन्यथेति सत्प्रतिपक्षादावित्यादिनाऽसिद्ध्यादिपरिग्रहः प्रतिवन्धकत्वापत्तेरित्यस्यानुमित्यादावित्यादिः नतु सा

मु॰॰अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यज्ञाने प्रमात्वविषयकत्वेन प्रतिवन्धकतापत्तेः
किन्तु भ्रमत्वज्ञानानास्कन्दितवाधवुद्धेः प्रतिवन्धकता॥ श्री॥ श्री॥. ॥ ७॥ ७ ॥॥

ध्याभावप्रमात्वज्ञानेऽनुमितिप्रतिवन्धस्तदभावेनेतुनेत्यन्वयव्यतिरेकाभ्यां प्रमात्वज्ञानस्यानुमितिप्रतिवंधकत्वमत
आह किन्त्विति

क्षणम् तच्च साध्यवत्तिप्रकृतपक्षसाध्यत्वप्रकारकत्वरूपाप्रामाण्यसाधारणमेव अधिकन्तु प्रविष्टमित्यादिन्यायादिति नादृशाप्रामाण्यस्य
हेत्वाभासतातन्मतेनेति दुर्वारेत्याशङ्कां निराकरोति साध्याभाववत्यक्षेत्यादि आभासत्वायोगादित्यत्र पूर्ववाक्यस्थतत्सेत्यनुषज्यते॥ ७॥
प्रथमोपस्थितेति उक्तप्रतिवन्धकतावच्छेदकधर्मस्य प्रमात्वाभावघटितत्वेन प्रतियोगिज्ञानविधया प्रमात्मकज्ञानस्य प्रतिवन्धकता एम
वच्छेदकधर्मज्ञानात्पूर्वमपेक्षितत्वेन प्रथमोपस्थितत्वलाघवादेव साध्याभावप्रमात्वस्य हेत्वाभासत्वमुचितमिति भावः ॥ श्री॥ ७॥ १६५

रा० असिद्ध्यादीति यद्यपिव्यभिचारोऽन्येवक्तुमुचितन्तथापिसत्प्रतिपक्षस्येति विरोधस्यापिसाक्षात्तुमितिप्रतिबन्धकत्वम् व्यभिचारादीनान्तु अनुमित्याद्याविन्यादिपदग्राह्यपरामर्शएवेति तथाभिधानमिति ध्येयम् साक्षादित्यनेनप्रतिबन्धकत्वोपयोगिज्ञानव्यावृत्तिः तत्से

दि० क्वचिदुपयुज्यतइति तथाचानुमितितत्कारणज्ञानान्यतरस्मृतिसाक्षात्प्रतिबन्धकीभूतज्ञानविषयत्वाभावान्नसाध्याभावज्ञानप्रमात्वेहेत्वाभासइतिभावः व्यभिचारज्ञानादेरित्यादिनाऽसिद्धिज्ञानपरिग्रहः भेदादिति तथाचबाधस्थलेऽसिद्धिव्यभिचारान्यतरनियमेपिबाधज्ञानस्यव्यभिचारादिविषयकत्वाभावेनतस्यहेत्वाभासान्तरत्वमितिभावः नचहेतुमान्यपक्षःसा

सु० तत्रभ्रमत्वशंकाविघटनेनप्रामाण्यज्ञानङ्कचिदुपयुज्यते नचबाधस्थलेपक्षहेतुसत्वेव्यभिचारः पक्षेहेत्वभावेस्वरूपासिद्धिरेवदोषइतिवाच्यम् बाधज्ञानस्यव्यभिचारज्ञानादेर्भेदात्॥ श्री ६॥ ६॥

ध्याभाववानित्याकारकएवबाधग्रहःकुतोनभवति सामग्रीसत्वात् तथाचव्यभिचारज्ञानात्मिकैवबाधबुद्धिरितिवाच्यम् परामर्शात्मकाव्यभिचारज्ञानरूपेप्रतिबन्धकसत्वेनबाधबुद्धेर्व्यभिचारविषयकत्वासम्भवात् एकत्रहेतौव्यभिचाराव्यभिचारविषयकैकनिश्चयासम्भवाच्च॥ छ॥ ६॥ छ॥

ति बाधस्येत्यर्थः व्यभिचारविषयकत्वासम्भवादिति. ननुपरामर्शोत्तरम्बाधबुद्धेर्व्यभिचारविषयकत्वासम्भवेपिपरामर्शएवबाधग्रहात्मकोऽस्तु तथाचसाध्यव्याप्यहेतुमान्पक्षः साध्याभाववानितिव्यभिचारविषयकबाधबुद्धिसम्भवइत्याशङ्कायामाह एकत्रेति प्रतिबन्धकताभावस्यकार्यकालवृत्तित्वेनकारणत्वादिति भावः इदमुपलक्षणम् एकत्रपक्षेसाध्यव्याप्यसाध्याभावविषयकज्ञानासम्भवाच्चेत्यपिद्रष्टव्यम्॥ श्री ६॥ ॥ ६॥ छ॥ छ॥ लं॰॥ ६॥ ६॥

का॰मु॰ रा॰। बाधलौकिकेति विरोधिज्ञानप्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यत्वनिवेशेनायोगोलकधर्मिकपरामर्शोत्तरमपि त
टि॰रा॰ द्धर्मिकबाधबुद्धेरपि तदुत्तरमपि वह्निधर्मिकधूमाभाववदयोगोलकवृत्तित्वरूपव्यभिचारविषयकलौकिकप्रत्यक्षसम्भविष्यतीत्यर्थः
१६६ स्तथा च बाधबुद्धेर्व्यभिचारविषयकत्वमुपपद्यत एवेति भावः तत्रेति अनुमित्यादावित्यर्थः ननु स्वरूपासिद्ध्यभावेऽपि व्यभिचारोऽस्त्वे
वोत्पत्तिक्षणावच्छेदेन गन्धाभाववति घटे पृथिवीत्वस्य सत्वादित्यत आह प्रतियोगिव्यधिकरणेति व्यभिचारघटकसाध्याभावप्रतियो

दि॰। नन्वयोगोलकपक्षकधूमसाध्यकवह्निहेतुके बाधलौकिकप्रत्यक्षवद्व्यभिचारलौकिकप्रत्यक्षमपि व्याप्तिनिश्च
येऽसत्यपि भविष्यतीत्यत आह किन्त्वेति अकिञ्चित्करत्वादिति व्यभिचारज्ञानं ह्यनुमितेर्न साक्षात्प्रतिबन्धकं किन्तु प

मु॰। किन्त्वयत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिञ्चित्करत्वाद्बाधस्यानुमितिप्रति।
बन्धकत्वम्वाच्यम् एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववज्ज्ञानं तत्र बाधस्यैव
प्रतिबन्धकत्वम्वाच्यम् न च पक्षे घटे गन्धसत्वात्कथम्बाध इति वाच्यम् पक्षतावच्छेदकदेशकालाव।
च्छेदेनानुमितेरनुभवसिद्धत्वादिति॥०॥

१ रामर्शप्रतिबन्धद्वारा तथा च परामर्शोत्तरकालीनव्यभिचारज्ञानम
किञ्चित्करमिति तत्र बाधबुद्धिरेव प्रतिबन्धिकेति भावः व्यभिचाराद्यसङ्कीर्णमपि बाधम्प्रदर्शयति एवमित्यादिना बाधस्यैवे
ति तत्र पक्षे हेतुसत्वेन स्वरूपासिद्धेः प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वरूपस्य व्यभिचारस्य चाभावादिति भावः॥६॥

गिवैयधिकरण्यस्याप्रवेशे कपिसंयोगेन हेतुसत्वादित्यादिसद्धेतोरपि व्यभिचारित्वापत्तिरिति भावः अयोक्तसद्धेतोर्व्यभिचारित्वापत्तिवार।
णाय प्रतियोगिव्यधिकरणसाध्याभाववत्त्यक्षादिरेव बाधत्वेनाङ्गीकरणीयः एवमुक्तहेतोस्सत्प्रतिपक्षितत्ववारणाय प्रतियोगिव्यधिक एम
रणसाध्याभावव्याप्यवत्पक्षस्यैव सत्प्रतिपक्षत्वमप्यङ्गीकरणीयम्॥ ॥९॥ ॥६॥ ॥९॥ ॥६॥ ॥६॥ ॥७॥ ॥६॥ ॥६॥ ॥ १६६

रा०यत्तु साध्यस्य प्रतियोगिवैयधिकरण्यघटितसाध्याभावव्याप्तिमत्त्वाविरोधाभावेनसत्प्रतिपक्षग्रहस्य साध्यग्रहविरोधित्वासत्त्वात्प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितएवसत्प्रतिपक्षोऽङ्गीक्रियतइतिनोक्तसङ्केतोः साध्याभावव्याप्यवत्पक्षत्वमितितन्नतथासतिप्रतियोगिवैयधिकरण्यघटितनद्भावव्याप्यवत्ताज्ञानस्यैवसर्वत्रतदत्ताबुद्धिप्रतिबन्धकत्वमित्याशयात् तथाचपूर्वग्रन्थकारोक्तस्यानुमितिकारणपरामर्शस्यसाध्यसंशयप्रतिबन्धकत्वस्यानुपपत्तेः अनुमितिकारणपरामर्शेप्रतियोगिवैयधिकरण्यघटितव्याप्तेरेवविषयकत्वात् तस्मात्प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितस्यापिसाध्याभावव्याप्यस्यसाध्यविरोधित्वसम्भवेनतस्यैवसत्प्रतिपक्षत्वमुचितम् एवं।

दि०बाधतद्व्याप्यभिन्नायेहेत्वाभासास्तद्व्याप्याअपितन्मध्येएवान्तर्भवन्तीतिपाठःबाधःसाध्याभावविशिष्टपक्षादिस्तद्व्याप्यसत्प्रतिपक्षस्तद्भिन्नाव्यभिचारविरुद्धासिद्धास्तद्व्याप्यानान्तत्रैवान्तर्भावइत्यर्थः अन्यथेतिव्यभिचारादेरिवव्यभिचारादिव्याप्य।

मु०बाधतद्व्याप्यभिन्नायेहेत्वाभासास्तद्व्याप्याअपितन्मध्यएवान्तर्भवन्ति अन्यथाहेत्वाभासाधिक्यप्रसङ्गात् बाधव्याप्यसत्प्रतिपक्षोभिन्नएवसत्तन्त्रेच्छेन मुनिनापृथगुपदेशात् सत्प्रतिपक्षव्याप्यस्तुनप्रतिबन्धकइतिप्रघट्टकार्थः॥७२॥ ऽस्यापिव्याप्तिग्रहप्रतिबन्धकज्ञानविषयत्वेनपञ्चहेत्वाभासानन्तर्गतत्वेनतद्व्यातिरिक्तहेत्वाभासत्वंस्यादित्यर्थः नप्रतिबन्धकइति साध्याभावव्याप्यवत्ताज्ञानस्यसाध्यवत्ताज्ञानविरोधित्वेमानाभावादि ऽतिभावः॥

ध्वोत्पत्तिक्षणावच्छिन्नघटेयत्रगन्धस्साध्यतेनतत्रबाधसंभवतिगन्धाभावस्यघटेप्रतियोगिसमानाधिकरणत्वादितिमेवम् यत्रदेशकालयोः स्वरूपसम्बन्धरूपपक्षतावच्छेदकत्वन्तत्रतदवच्छेदेनसाध्याभाववत्त्वस्यापिबाधत्वाङ्गीकारादितिध्येयम् अत्रनसत्प्रतिपक्षोऽपिप्रतियोगिव्यधिकरणगन्धाभावव्याप्यस्यघटेऽसम्भवात्तएवासङ्कीर्णबाधोदाहरणमिदम् अन्यथासत्प्रतिपक्षसंकीर्णत्वेनबाधस्यहेत्वाभासान्तरतात्रापिनस्यात् अन्यथासत्प्रतिपक्षस्यबाध व्याप्यत्वन्नानुपपन्नम्व्यापकस्याधिकदे॥ ६ श्री ६॥ श्री ६ ॥ ॥ ७॥ ६ ॥ ९॥

रा॰ गन्धवृत्तित्वे क्षतिविरहात् न च गन्धाभावस्य केवलस्य संयोगाभाववत् केवलान्वयितया प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितगन्धाभावव्याप्यवत्त्वस्यात्रापि सम्भवेनैवास्यापि सत्प्रतिपक्षसंकीर्णत्वेनैव निवाच्यम् एतादृशस्य सत्प्रतिपक्षत्वाङ्गीकारे घटो गन्धवान् पृथिवीत्वादित्यादिसद्धेतोरपि दुष्टत्वापत्तिरित्यलम्पल्लवितेन॥ ६॥ ॥ इति पाठः इति क्वचित्पुस्तके न तत्पदरहितस्य पाठस्य दर्शनादेतत्

दि॰ दूषकताबीजस्य भिन्नतयेति साधारण्यस्य व्यभिचारज्ञाने विरुद्धस्य सामानाधिकरण्यग्रहे प्रतिबन्धकत्वादिति भावः असाधारण्यघटकसपक्षत्वं निश्चयगर्भं न तु साध्यवत्त्वमात्रमित्याह सपक्ष इति एवमग्रेपि सपक्षत्वविपक्षत्वयो

मु॰ यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः सपक्षविपक्षवृत्तिः साधारण इत्यर्थः सपक्षो निश्चितसाध्यवान् विपक्षः साध्यवद्भिन्नः विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम् वस्तुतो विपक्षवृत्तित्वमेव वाच्यम् विरुद्धस्य साधारणत्वेपि दूषकताबीजस्य भिन्नतया न तस्य पार्थक्यात् यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मतः ७३॥ सपक्षविपक्षव्यावृत्त इत्यर्थः सपक्षः साध्यवत्तया निश्चितः विपक्षः साध्यशून्यतया निश्चितः शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वसन्देहस्तदा सपक्षत्वं घटादीनामेव तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् यदा तु शब्देऽनित्यत्वनिश्चयस्तदा नासाधारणम् इदन्तु प्राचाम्मतम् नवीनमतन्तु पूर्वमुक्तम् ७३॥ तथैवानुपसंहारी॥ श्री ६॥ ६॥ ॥ श्री ६॥ ६॥ ॥ ७॥ ६॥ छी॥ ६॥

निश्चयत्वनिवेशस्य फलमाह शब्द इत्यादिना पूर्वमुक्तमिति असाधारणः साध्यासमानाधिकरणो हेतुरित्यादिनोक्तमित्यर्थः ७२ मिहितं॥ ७२॥ अन्येपि विपक्षत्वनिर्वचने निश्चितसाध्याभाववत्त्वमात्रं न विपक्षत्वं तेन साध्याभाववत्त्वेन निश्चितत्वांशनिवेश इति भावः॥ श्री ६॥ श्री ६६॥ रामः १६७

रा०गृह्यत इति ननु सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपेति शेषः साध्यनिश्चयेऽत्यादिसम्भवादित्यनन्तं सद्धेतुत्वे हेतुः पक्षत्वेनेति तथा च मूले पक्षपदं पक्षतापरं भावप्रधाननिर्देशत्वादन्यथा आकाशात्यन्ताभावो नित्यो ध्वंसप्रागभावभिन्नाभाववत्त्वादित्यादेरनुपसंहारित्वाभावे नानुपपत्तेरिति ध्येयम् ननु संशयस्य निश्चयाप्रतिबन्धकत्वेन सर्वत्र साध्यसंदेहसत्त्वेऽपि क्वचित् साध्यनिश्चयसंभ

दि०। केवलान्वयिपक्षक इति अत्र पक्षता साध्यसंशयरूपा गृह्यते तेन सर्वमभिधेयं प्रमेयत्वादित्यादौ यदा सिद्धिः सिषाधयिषा च तदा साध्ये निश्चयसम्भवेन सामानाधिकरण्यघटितव्याप्तिग्रहसम्भवात्तस्य सद्धेतोरलक्ष्यत्वम् यदा सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तदा केवलान्वयित्वेऽपि तत्र नातिव्याप्तिः अनुपसंहारिणो हेत्वाभासत्वमुपपादयति सर्वमभिधेयमित्यादिना सामानाधिकरण्यग्रहस्थलान्तराभावादिति संशयोत्पत्तिक्षणे निश्चयवारणाय निश्चयप्र

मु०। केवलान्वयिपक्षकः सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात् सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः इदन्तु न सम्यक् पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् अस्तु वा सहचारग्रहः तावताप्यज्ञानरूपा सिद्धिरेव न हेत्वाभासत्वं तस्य ॥६॥

१ति संशयस्य सामग्र्याः प्रतिबन्धकत्वस्यावश्यं वाच्यतया प्रकृते सर्वत्र साध्यसंदेहसत्त्वेन तत्पूर्वं तत्सामग्र्याः सत्त्वेन साध्यनिश्चयस्य कुत्राप्यसंभवेन व्यापकसाध्यसामानाधिकरण्यविशिष्टप्रमेयत्वादिरूपव्याप्तिग्रहानुत्पादात्तत्रानुमितिरित्यनुपसंहारिणो हेत्वाभासत्वमिति भावः क्षतेरभावादिति तदानीमपि केवलान्वयिपक्षताकत्वस्यानुपसंहारित्वस्य क्षतेरभावादित्यर्थः ॥ ६॥ ७॥ ६॥

वेन सामानाधिकरण्यनिश्चयो न दुर्घट इत्यत आह संशयोत्पत्तीति तदानीमपि घटोऽभिधेय इत्यादिनिश्चयदशायामपीत्यर्थः क्षतेरभावादितीति तादृशनिश्चयकालेऽपि सर्वमभिधेयं न वेति संशयसंभवात्सर्वत्रावच्छेदेन निश्चयाभावादिति भावः ननु किमेतावतेत्यत आह॥

का॰मु॰ राण॰तथाचेति। स मानप्रकारकत्वेनैवेति तद्धर्मितावच्छेदकसंशयसामग्र्या एवतद्धर्मितावच्छेदकनिश्चयप्रतिबन्धकत्वेन घटत्वाव

दि॰रा॰

१९८ दि॰। तथाचतत्रानुपसंहारित्वस्यसत्त्वात्तस्यव्याप्तिज्ञानानुत्पादप्रयोजकत्वा भावाद्धेत्वाभासत्वानुपपत्तिरितिभावः नचसंशयसामग्र्याः सत्त्वात्कथंपक्षैकदेशेसाध्यनिश्चयइतिवाच्यम् सर्वत्वधर्मितावच्छेदकसंशयसामग्रीसत्त्वेपि घटत्वादिधर्मितावच्छेदकक साध्यनिश्चयोत्पादेबाधकाभावात् समानप्रकारकत्वेनैवविरोधादसमानविषयकत्वेनप्रतिबन्धकत्वेप्याह अस्तुवेति तस्यसहचारग्रहस्यतत्सरूपेसत एव विरोधित्वेनतत्त्वानस्यानुमित्यनुत्पादप्रयोजकत्वा

मु॰। तथापिकेवलान्वयिसाध्यकत्वन्तत्वमित्युक्तम् यःसाध्यवतिनैवास्तिसविरुद्ध उदाहृतः॥ ७४॥ एवकारेणसाध्यवत्त्वावच्छेदेनहेत्वभावोबोधितस्तथाचसाध्यव्यापकीभूताभावप्रतियोगित्वन्तदर्थः॥७४॥

भावादितिभावः नचतत्रसहचारग्रहप्रयोजकसंशय एवहेत्वाभासस्तस्यापिसरूपसत एवविरोधित्वात् नचसंशयविषयस्यसाध्याभावविशिष्टपक्षादेरेवतत्राभासत्वमितिवाच्यम् सर्वमभिधेयमित्यादावभिधेयत्वाभावविशिष्टपक्षाप्रसिद्धेरित्यन्यत्रविस्तरः तदर्थइति तेनासाधारणेनातिव्याप्तिरितिभावः॥ ७४॥ श्री६ ७४ ॥६॥ ७४॥ ७४॥

वच्छिन्नेचाभिधेयत्वव्याप्यघटपदवाच्यत्ववत्तानिश्चयसत्त्वेनतदवच्छिन्नेसंशयसामग्र्याभावादितिभावः समानविषयकत्वेपितद्विशेष्यकसंशय सामग्र्याः तद्विशेष्यकनिश्चयप्रतिबन्धकत्वेत्यर्थः॥ श्री६॥ श्री॥ ॥ ७॥ ७॥ ॥ ६ ॥ ७॥ ६॥ ॥ ७॥ ७॥ ६॥ राम॰ १९८

रा०। ननु सर्वमभिधेयमित्यादौ साध्याभावविशिष्टपक्षाप्रसिद्धावपि संशयविषयकसाध्यादेरेवाभासत्वमस्तु इत्यत आह अन्यत्रेति पर्वतो वन्हिमानित्यादौ हेत्वाभासवारणाय यद्रूपावच्छिन्नविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्नस्यैव हेत्वाभासत्वेनाङ्गीकरणीयतया साध्यादेरतथात्वादिति भावः॥ ७४ ॥ ननु धूमइति प्रतीतेरपि विशिष्टधूमत्वादिविषयकत्वे शुद्धस्य विशिष्टानतिरिक्तत्वादत आह स्वेतितदर्थत्वात् अन्तरपदार्थत्वात् पर्याप्तेः प्रत्येकवृत्तित्वेतु पर्याप्तिसम्बन्धेनतादृशावच्छेदक

दि०। धूमप्रागभावत्वेति नस्वव्याप्यतावच्छेदकीभूतधूमत्वघटितत्वेनतत्सङ्ग्रहोनस्यादिति भावः स्वस्य स्वाविषयकप्रतीतिविषयत्वरूपस्याघटितत्वाभावाद्धर्मान्तरेति नच नीलधूमत्वस्यापि तादृशधर्मान्तरघटितत्वमस्त्येव धूमत्वस्य नीलधूमत्वभिन्नत्वाभावादिति वाच्यम् स्वाविषयकप्रतीतिविषयत्वस्य स्वपर्याप्तावच्छेदकतानिरूपकप्रकारता

मु०। असिद्धिं विभजते आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ व्याप्यत्वासिद्धिरपरा स्यादसिद्धिर
तस्त्रिधा ७५ पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ७६॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् पक्षासिद्धिरिति आश्रयासिद्धिरित्यर्थः॥ श्री०१॥ छे॥

निरूपितावच्छेदकतापर्याप्त्यनधिकरणत्वपर्यवसितस्य तदर्थत्वात् शुद्धधूमत्वपर्याप्तावच्छेदकताकप्रकारत्वनीलत्वादिविशिष्टधूमत्वपर्याप्तावच्छेदकताकप्रकारत्वयोर्भेदात् नन्वेवं वन्हिमदन्यावृत्तित्वस्य वन्हिव्याप्यतावच्छेदकतानुपपत्तिस्तस्यैव वन्हित्वरूपतादृशधर्मान्तरघटितत्वात्॥ १॥ ᳚ त्वावच्छिन्नत्वमेव पर्याप्त्यनधिकरणत्वस्यानेवक्तव्यम् प्रत्येकमुभयभिन्नत्वस्यैव केवलधूमत्वे विशेषणविशेष्योभयपर्याप्तावच्छेदकत्वावच्छिन्नभेदसत्त्वादिति ध्येयम् वन्हिमदन्यावृत्तित्वस्येति पर्वतो वन्हिमान् वन्हिमदन्यावृत्तेरिति सन्न्यायप्रयोगस्य सर्वसम्मतत्वेनेष्टापत्त्यसम्भवादिति भावः॥ छे॥ ननु धर्मान्तरागतघटितत्वं विशेष्यविधया धर्मान्तरघटितत्वं यत्तदन्यत्वमेव धूमत्वस्य विशेष्यविधया नीलधूमत्वघ०॥ श्री॥ श्री०१॥ छे॥ १॥ ६॥ ॥ छ॥ छ॥ १॥ ॥ २॥ छे॥

का०गु० दि०रा० १६९

रा०ःटकत्वेपिवन्हिमदन्यावृत्तित्वेवन्हिमत्वस्यतथाऽघटकत्वमितिनतत्स्वव्याप्यतानवच्छेदकतापत्तिरित्यतआह धूमान्यत्वादेरि
तिसाध्यसंबन्धितावच्छेदकत्वेन साध्यव्यापकतावच्छेदकत्वेनस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतादृशधर्मत्वमे

दि० धूमान्यत्वादेर्व्याप्यतावच्छेदकत्वापत्तिभियाधर्मान्तरस्यविशेष्यविधयाऽघटकत्वविवक्षणस्याशक्यत्वा
दितिचेन्न स्वसमानाधिकरणपदेन स्वव्यापकत्वस्यविवक्षितत्वात् वन्हित्वस्यवन्हिमदन्यावृत्तित्वाव्यापकत्वा
द्धूमत्वस्यधूमान्यत्वव्यापकत्वाच्चोक्तदोषासम्भवात् स्वव्यापकत्वञ्च धर्मान्तरस्यस्वघटकसाध्यसम्बन्धितावा.

सु० अपरेति स्वरूपासिद्धिरित्यर्थः नीलधूमादिकमिति नीलधूमत्वादिकं गुरुत्वयानहेतुतावच्छे
दकं स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितत्वैवव्याप्यतावच्छेदकत्वात् धूमप्राग
भावत्वसङ्ग्रहायस्वसमानाधिकरणेति विरुद्धयोः परामर्शेहेत्वोःसत्प्रतिपक्षता॥ ७७॥ विरुद्धयोरि
तिकपिसंयोगतदभावव्याप्यवत्तापरामर्शेपिनसत्प्रतिपक्षत्वमतउक्तम् विरुद्धयोरितितथाच॥ ९॥

च्छेदकत्वेनअन्यथाधूमालोकान्यतरत्वस्यवन्हिव्याप्यतावच्छेदकत्वापत्तेः धूमत्वालोकत्वयोःप्रत्येकमन्यत
र त्वाव्यापकत्वादिति विरुद्धयोःपरामर्शेहेत्वोरित्यत्रविरुद्धयोर्हेत्वोःपरामर्शइतिभ्रमवारणायाह॥ ७॥ ७॥

वव्यापकत्वमितिभावः इतिभ्रमेति यथार्थत्वेपर्वतोवन्हिमान्धूमादित्यादौवन्ह्यभावव्याप्यपाषाणमयत्वस्यपरामर्शदशायांसत्प्र रा०स०
तिपक्षानुपपत्तेः प्राचीनैः तत्रापिसत्प्रतिपक्षाङ्गीकारादितिभावः॥ ७॥ ॥ ७॥ ॥ ७॥ ॥ ७॥ ॥ ७॥ ७॥ ७॥ ९॥ १६९

रा०।साध्यसाध्याभावयोर्विरोधस्थलेऽनुभयपरामर्शसत्वेपि न सत्प्रतिपक्षव्यवहार इतिमन्तव्यम् ७५।७६॥७७ गन्धशून्यत्वाभावादिति॥ निरवच्छिन्नवृत्तिकगन्धाभावविरहादित्यर्थः तेनोत्पत्तिकालावच्छेदेन घटे गन्धाभावसत्वेपि न क्षतिः पक्षपदस्य पक्षतावच्छेदकविशिष्टार्थत्वेनोत्पत्तिकालीनत्वविशिष्टघटनिरूपितगन्धाभावनिष्ठाधेयता निरवच्छिन्नेन भवतीत्यादृशगन्धाभाववद्विशिष्टपक्षो बाध इति भावः

दि०।स्वसाध्येति स्वसत्प्रतिपक्षत्वेनाभिमतो हेतुस्तत्साध्यविरुद्धो यः साध्याभाव इत्यर्थः ७५॥७६॥७७॥ननूत्पत्तिकालीनघट इत्यादि मूलोक्तमयुक्तम् तत्र पक्षे घटे गन्धशून्यत्वाभावादत आह पक्षतावच्छेदकेति कालस्येव देशस्य

मु०।स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः। ॥७५॥७६॥७७॥साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते॥ ७८॥पक्षः पक्षतावच्छेदकविशिष्ट इत्यर्थः तेन घटे गन्धसत्वेपि न क्षतिः एवम्मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम्॥ ७८॥इति सिद्धान्तमुक्तावल्यामनुमानम्॥

१ पिपक्षतावच्छेदकत्वे बाधसम्भवात्तत्प्रदर्शनेन मूलस्य न्यूनतां परिहर्तुमाह एवमिति बोध्यमिति तत्र पक्षे वृक्षे संयोगसत्त्वेपि पक्षतावच्छेदकमूलावच्छेदेन संयोगाभावादिति भावः॥ ७८ ॥इति श्रीमुक्तावलीप्रकाशेऽनुमानखण्डं समाप्तम्॥ ७॥ श्रीः॥

अथवा गन्धशून्यत्वाभावाद्गन्धाभावाभावादित्यर्थः गन्धसत्वादिति यावत् तथा च प्रतियोगिव्यधिकरणसाध्याभाववत्पक्षस्यैव बाधत्वेन कथमत्र बाध इति भावः पक्षपदस्य पक्षतावच्छेदकविशिष्टार्थकत्वे च देशकालयोः पक्षतावच्छेदकत्वस्थले पक्षतावच्छेदकावच्छेदेन साध्याभाववत्त्वस्यापि पृथक् बाधतयान बाधानुपपत्तिरिति भावः॥ ७८॥ ०॥ २॥ ० इति दिनकरीतरङ्गिण्यामनुमानतरङ्गः॥ ०॥

रा०। अवसरसङ्गतिमिति प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अनन्तरवक्तव्यत्वमवसरः प्रकृते चानुमानोपमानयोर्द्वयोरपिप्रत्यक्षोपजीवकत्वेप्यनुमानस्यबहुवादिसम्मतत्वेननिरसनीयाल्पवादिविप्रतिपत्तिकत्वेनसुगमतया अनुमानएवप्रायशोऽस्तुत्सितपित्सोः प्रथमतोजिज्ञासाजायतइत्यनुमाननिरूपणेनप्रतिबन्धकीभूतजिज्ञासानिवृत्त्या अवश्यवक्तव्यत्वमुपमानस्येत्यवसरसङ्गत्याऽनुमाननिरूपणानन्तरमुपमाननिरूपणमितिभावः साहृश्यप्रत्यक्षमिति सादृश्यज्ञानस्यप्रत्यक्षान्यस्यैवोपमितिकरणत्वउपमानस्यप्रत्यक्षोपजीवकत्वमेवनसम्भवति सादृश्यविषयकलौकिकप्रत्यक्षानन्तरमेवोपमितिरनुभूयतेचेत्यभिप्रायेणज्ञानपदम्प्रत्यक्षपरतयाव्याख्यातमितिबोध्यम्।

दि०। अवसरसङ्गतिमभिप्रेत्याहउपमितिमिति तत्रगवये सादृश्यदर्शनं सादृश्यप्रत्यक्षम् तदुपमितिकरणमिति नवीनमतेनैतत् अतिदेशवाक्यार्थशाब्दबोधः करणमतिदेशवाक्यार्थस्मरणंव्यापारः सादृश्यविशिष्टपिण्डदर्शनसहः।

मु०। उपमितिम्व्युत्पादयति ग्रामीणस्यप्रथमतःपश्यतोगवयादिकम् सादृश्यधीर्गवादीनांयास्यात्साकरणम्मतम् ७९ वाक्यार्थस्यातिदेशस्यस्मृतिर्व्यापारउच्यते गवयादिपदानान्तुशक्तिधीरुपमाफलम्॥ ८०॥ यत्रारण्यकेनकेनचिद्ग्रामीणायोक्तम् गोसदृशोगवयपदवाच्यइति पश्चाद्ग्रामीणेनक्वचिदरण्यादौगवयोदृष्टः तत्रगोसादृश्यदर्शनंयज्ज्ञातंतदुपमितिकरणम्॥ श्रीः॥ ॥श्रीः॥ श्रीः॥

कारीतिसाम्प्रदायिकमतन्तुसहकारितयाऽवश्यकसादृश्यविशिष्टपिण्डदर्शनस्यैवकरणत्वंयुक्तमित्युपेक्षितम्॥॥

एतदितिगवयधर्मिकगोसादृश्यप्रत्यक्षस्यकरणत्वाभिधानमित्यर्थः साम्प्रदायिकमतमुपदर्शयति अतिदेशवाक्यार्थशाब्दबोधइतिवाक्यार्थस्मरणमितिव्यापारद्वारतज्जन्यस्यापि तद्व्यापारत्वोपगमादितिभावः नन्वेवमुद्बोधकान्तरवशाद्यत्रातिदेशवाक्यार्थस्मरणन्तत्रसादृश्यपिण्डदर्शनंविनाप्युपमितिप्रसङ्गइत्यतआह सादृश्यविशिष्टेति साम्प्रदायिकमतोपेक्षायांबीजमाह सहकारितयेति युक्तमिति तदतिरिक्तस्यकरणान्तरस्यकल्पनेगौरवमितिभावः॥ श्रीः॥ ॥ ॥श्रीः॥ श्रीः॥ ॥श्रीः॥श्री

रा०। ननु सादृश्यविशिष्टपिण्डदर्शनस्योपमानत्वेऽतिदेशवाक्यार्थस्मरणस्य न व्यापारत्वानुपपत्तिः तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्या
पारत्वात् स्मरणस्य च स्वसमानप्रकारकानुभवजन्यत्वनियमादिति मूलोक्तमतिदेशवाक्यार्थस्मरणस्य व्यापारत्वमसंगतमित्याशङ्कां नि
राकुरुते सादृश्यविशिष्टेति तथा चातिदेशवाक्यार्थस्मरणस्य पूर्वतनशाब्दबोधजन्यत्वेपि तत्रोद्बोधकविधया सदृशपिण्डदर्शनमपि कार
णमेवेति नानुपपत्तिरिति भावः एतेनेति अतिदेशवाक्यार्थस्मरणव्यापारकस्य सदृशपिण्डदर्शनस्यैवोपमितिकरणत्वोपवर्णनेनेत्य
र्थः बोध इति शाब्दबोध इत्यर्थः अभावादिति अनुभवात्मकातिदेशवाक्यार्थस्यैव सत्वादिति भावः नन्वेतादृशस्थले किं कारणं को व्या

टि०। स्मरणं यज्जायत इति सादृश्यविशिष्टपिण्डदर्शनस्योद्बोधकविधया तादृशवाक्यार्थस्मारकत्वादिति भावः तदेव
व्यापार इति एतेन सादृश्यविशिष्टपिण्डदर्शनोत्तरं यत्रातिदेशवाक्यार्थशाब्दबोधस्तत्रातिदेशवाक्यार्थस्मरणापे
क्षाभावान्नातिदेशवाक्यार्थस्मृतिव्यापारकं सादृश्यविशिष्टपिण्डदर्शनं करणं किन्तु सादृश्यज्ञानमात्रं करणं विशे

सू०। तदनन्तरं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः॥

षणज्ञानविधया तज्जन्यमतिदेशवाक्यार्थज्ञानं सादृश्यविशिष्टपिण्डदर्शनं चोभयं व्यापार इति कस्यचिन्मतमप्रा
स्तुतम् यत्र सादृश्यविशिष्टपिण्डदर्शनोत्तरमतिदेशवाक्यार्थशाब्दबोधस्तत्रोपमित्यनभ्युपगमात्॥ २॥ ७॥ १॥

पारः शाब्दबोधस्य सदृशपिण्डदर्शनाजन्यत्वेन न व्यापारत्वसम्भवादित्याशङ्कायामेकदेशिमतानुसारेण व्यापारौ प्रदर्शयति किन्त्विस
दि सादृश्यज्ञानमात्रमिति मात्रपदेन गवयत्वावच्छिन्नविशेष्यकत्वांशस्य प्रतिक्षेपः॥ प्रस्तुतमिति उभयोरपि विशेषणज्ञानविध
या सादृश्यज्ञानजन्यत्वात् सदृशपिण्डदर्शनमतिदेशवाक्यार्थज्ञानं च विनोपमितेरनुदयेन तयोरुपमितिकरणत्वाच्च विनिगमना
विरहादिति भावः एतेनेत्यनेनोक्तमर्थं प्रकटयति यत्रेत्यादि॥ श्री ९॥ ॥ ९॥ ७॥ ॥ ७॥ ७॥ ॥ ७॥ ३॥०॥ १॥ १॥ १॥

का॰मु॰ रा॰।अनभ्युपगमादिति नन्वेवन्तादृशस्थलेऽप्युपमितेरनुभवसिद्धतयाऽनुभवापलापप्रसङ्ग इत्यत आह किन्त्विति तदुत्तरमेवेति तथाच क्षण
टि॰ए॰ हूयविलम्बेनोपमितिरुपपादनसम्भवान्नानुभवापलापापत्तिरितिभावः गवयो गवयपद‾वाच्य इतीति पिण्डे चक्षुस्संयोगानन्तरं यो
१७१ ग्य इति तत्र गवयत्वजातेरपि प्रत्यक्षेण ग्रहणात्तदवच्छिन्नधर्मिकमेव गोसादृश्यज्ञानं गोपदवाच्यत्वप्रकारिकोपमितिरपि नानुपपन्ने
तिमूलाभिप्रायः यत्तु गोसदृशो गवयपदवाच्य इत्यारण्यकवाक्याज्ज्ञायमानश्शाब्दबोध एवोपमितिः न तु प्रमित्यन्तरं न चैवं गोसादृश्य

टि॰।किन्तु तदुत्तरस्य पुनः सादृश्यविशिष्टपिण्डदर्शनन्त‾तोऽतिदेशवाक्यार्थस्मरणन्तदुत्तरमेवोपमितिरिति भावः
गवयो गवयपदवाच्य इति ज्ञानं यज्ज्ञायत इति एतेनोपमितिर्न प्रमित्यन्तरङ्किन्तु शाब्दबोधात्मिकैव गोसदृशो गव
य इत्यत्र सदृशपदेनोपस्थितसादृश्यावच्छेदेन गवयपदवाच्यत्वग्रहस्य गोसदृशो गवयपदवाच्य इत्याकारकस्यैवो॥

मु॰।तदनन्तरङ्गवयो गवयपदवाच्य इति ज्ञानं यज्ज्ञायते तदुपमितिः नत्वयङ्गवयपदवाच्य इत्युपमितिः
गवयान्तरे शक्तिग्रहाभावप्रसङ्गात्॥७९।८०॥ इत्युपमानखण्डम्॥ पमितिस्वरूपत्वादित्यपास्तम् गवय
त्वावच्छेदेन गवयपदवाच्यत्वविषयिताया उपमितेर्गवयपदजन्यगवयत्वविशिष्टोपस्थितिं विना शाब्दबोधरूपत्वासम्भ
वादिति न च गोसादृश्यस्य गवयत्वस्य च प्रत्यक्षेणोपस्थितौ कथङ्गवयत्वावच्छेदेनैव गवयपदवाच्यत्वोपमितिर्न तु साद॰
श्यावच्छेदेनेति वाच्यं उपस्थितत्वेऽपि गवयत्वजात्यपेक्षया गोसादृश्यस्य गौरवज्ञानेन तदवच्छेदेन गवयपदवा
स्यैव गवयपदवाच्यतावच्छेदकत्वमुपमितिविषयो न तु गवयस्यैवेति वाच्यम्। इष्टत्वादित्याह च्यत्वोपमितेरनुदयात्॥ छ॥॥
तन्मतन्दूषयति एतेनेति उपमितेर्गवयो गवयपदवाच्य इत्याकारकत्वेनेत्यर्थः गवयत्वविशिष्टोपस्थितिं विनेति उक्तवाक्यार्थघटकगवयप एम॰
दश्रवणेति तदानीं गवयत्वजातेरेव प्रत्यक्षतया [illegible] जन्यगवयत्वावच्छिन्नोपस्थितेरसं॥ छ॥ १७१

रा०।भवेनतत्त्वच्छिन्नधर्मिकगोपदवाच्यत्वप्रकारकशाब्दबोधासम्भवेनतत्सादृश्योपमितेः प्रमित्यन्तरत्वावश्यकत्वादितिभावः ननुगवयत्वाव च्छेदेनैवगवयपदवाच्यत्वप्रकारिकोपमितिः ननुगोसादृश्यावच्छेदेनेत्यत्रैवप्रमाणत्वपक्षपातोऽतउपमितेः प्रमित्यन्तरत्वावश्यकीत्या। दित्याशङ्कते नचेतित्यत्रानइतिशेषः स्वमतेनतुगवयत्वजातिप्रत्यक्षात्पूर्वमेवशाब्दबोधात्मकोपमितिरूपगमादितिध्येयम्॥अनुदयादितिननु प्रत्यक्षेणागवयत्वोपस्थित्यनन्तरञ्चगौरवज्ञानेनप्रतिबन्धात् गोसादृश्यावच्छेदेनगयपदवाच्यत्वज्ञानासम्भवेपिनत्प्रत्यक्षात्पूर्वमेवार। ण्यकपुरुषवाक्यात्तादृशशाब्दबोधोत्पत्तौबाधकाभावइत्यतआह गवयपदादिति॥ अनुभूयतेचगवयपदात्तादृशएवशाब्दबोधइति। भावः नन्वस्तुगवयपदाद्गवयत्वप्रकारकशाब्दबोधोपपत्तयेगवयपदवाच्यइत्युपमित्यागवयत्वस्यगवयपदवाच्यत्वावच्छेदकत्वसिद्धिः

दि०।गवयपदाद्गवयत्वप्रकारकशाब्दबोधानुपपत्तेश्च तत्प्रकारकबोधेतत्त्वच्छेदेनशक्तिग्रहस्यहेतुत्वात् नचद व्यत्वविशिष्टेसादृश्यज्ञानात् गवयत्वावच्छेदेनगवयपदवाच्योपमितेरनुदयात् यद्धर्मेविशिष्टेसादृश्यज्ञानंतद्ध र्मावच्छेदेनोपमितिजनकंवाच्यम्॥तथाचयदागवयत्वादिजात्यनुपस्थितिस्तदासादृश्यज्ञानस्यसंस्थानादिगुरु धर्मेविशिष्टेग्रहात्तत्त्वच्छेदेनगवयादिपदवाच्यत्वोपमित्यापत्तिरितिवाच्यम् इष्टापत्तेः तस्याभ्रमत्वेनतादृशगु रुधर्मावच्छेदेनगवयादिपदवाच्यत्वासाधकत्वादिति इदमुपलक्षणम्॥ ६॥ श्री ६॥ श्री ६॥ ६॥ ६॥ ॥

तथाप्यतिदेशवाक्याद्गोसादृश्यसामानाधिकरण्येनैवगवयपदवाच्यत्वावगाहिशाब्दबोधइत्यत्रमानाभावः गोसादृश्यावच्छेदेनापिगवय पदवाच्यत्वावगाहिशाब्दबोधोत्पत्तौबाधकाभावात् नचगवयत्वावच्छिन्नेगवयपदवाच्यत्वावगाहिज्ञानसामग्र्येवतत्रबाधिकेतिवाच्यम् ता दृशज्ञानंप्रतिगवयत्वावच्छिन्नधर्मिकगोसादृश्यज्ञानस्यकारणत्वेनप्रत्यक्षेणगवयत्वानुपस्थितिदशायांतादृशज्ञानघटितोपमितिसाम ग्र्या असम्भवात्तथाचोक्तशाब्दबोधबलादेवगोसादृश्यस्यापिगवयपदवाच्यतावच्छेदकत्वसिद्धिर्निष्प्रत्यूहैवेत्याशङ्क्य तेनचेति ग्रहादि ति शाब्दबोधात्मकग्रहादित्यर्थः तादृशशाब्दबोधोत्पत्तावपिगोसादृश्यस्यगुरुत्वे॥ श्री ६॥ ॥ श्री ७॥ ॥ श्री ६॥ ७॥ ७॥ ६॥

ए० ननु गवयपदवाच्यतावच्छेदकत्वस्य बाधितत्वात् बाधितार्थविषयकत्वेन तस्या भ्रमत्वात्॥ ननु या विषयसिद्धि— रितिसमाधत्ते इ
ष्टापत्तेरित्यादि सादृश्यविशिष्टपिण्डदर्शनमिव वैधर्म्यविशिष्टपिण्डदर्शनमपि क्वचिदुपमितौ करणम् अत्र जलादिवैधर्म्यवति पृथिवीप
दवाच्येत्यतिदेशवाक्यार्थस्मरणम्व्यापारः पृथिवी पृथिवीपदवाच्येत्युपमितिरित्याह॥ इदमुपलक्षणमिति ननु नोपमानस्य प्रमा
णान्तरत्वं गवयो गवयपदवाच्य इत्युक्तानाभिषिक्तस्य चाक्षुषस्यैवोपगमसम्भवात्॥ न च चक्षुर्व्यापारोपरमेप्यतिदेशवाक्यार्थ।
स्मरणतोपमितिदर्शनात् न तत्र चाक्षुषत्वसम्भव इति वाच्यम् एवमप्यलौकिकमानसप्रत्यक्षत्वसम्भवेनोपमितेर्विजातीयप्रमितित्वे

दि०। वैधर्म्यविशिष्टपिण्डदर्शनङ्करणं जलादिविधर्मगुणवती पृथिवीत्यतिदेशवाक्यार्थस्मृतिर्व्यापारः पृथिवीत्वा
वच्छेदेन पृथिवीपदवाच्यत्वोपमितिः फलमित्यपि बोध्यम् ननूपमानस्य प्रमाणान्तरत्वे मानाभावः न च प्रत्यक्षा
दिप्रमितिविजातीयप्रमितिकरणत्वात् तस्य प्रमाणान्तरत्वम् उपमितेः प्रत्यक्षादिप्रमितितो विजातीयत्वा
भावादिति चेन्न चक्षुरादिव्यापारविगमेपि उपमितेरुत्पादेन चाक्षुषत्वाद्यसम्भवान्नवा मानसत्वम् मानसोत्तर
मनुव्यवसीयमानाया उपमिनोमीति प्रतीतेर्विषयत्वात् उपमित्यनन्तरं साक्षात्करोमीति प्रतीतेरनुदयेन तत्र प्रत्य
क्षत्वसत्वे प्रमाणाभावाच्च अन्यथाऽनुमितेरपि मानसत्वापत्तेः नाप्यनुमितिः व्याप्त्यादिज्ञानं विनाप्युदयात्।
न शाब्दम् पदज्ञानाजन्यत्वात् न स्मृतिः अननुभूतार्थस्य स्मरणायोगादिति संक्षेपः।७९। ८०। इत्युपमान

मानाभावादित्याशङ्क्योपमिनोमीत्यनुव्यवसायसाक्षिकीं विलक्षणप्रमितिं व्यवस्थाप्य तत्करणत्वेनो ऽखण्डं समाप्तम्॥ इ
पमानस्य प्रमाणान्तरत्वम्व्यवस्थापयति नन्वित्यादि साक्षात्करोमीति प्रतीतेरनुदयेनेति ननु लौकिकविषयत्वेन साक्षात्कारत्वव्यञ्जिका
मनसस्तु बहिर्विषये लौकिकसन्निकर्षाभावेन लौकिकविषयत्वाभावात् उपमितेर्मानसप्रत्यक्षेपि तदुत्तरन्तु साक्षात्करोमीति प्रतीत्य
तिसम्भवः व्यञ्जकाभावादन्यथा स्वर्गवि[...]मानसेऽनन्तमपि साक्षात् ॥ छ॥ श्री॥ ॥ छ॥ ॥ छ॥ छ॥ ॥

रा॰ान्करोमीति प्रतीतेरुपपत्तेः इत्यञ्चोपमिनोमीति प्रतीतेरपिसादृश्यज्ञानोत्तरमानसमेव विषयोस्तु ननु विजातीयप्रमितिरित्यस्व रसादाह अन्यथेति अनुमितेरपीति व्याप्तिज्ञानोत्तरमानसस्यैवानुमिनोमीति प्रतीतिविषयकत्वसम्भवादितिभावः तथाचानुमिनोमीत्यनुव्यवसायविषयीभूतानुमितिर्यथाप्रमित्यन्तरन्तथोपमिनोमीतिविलक्षणानुव्यवसायभूतोपमितिरपीतिभावः ननु गवयो गवयपदवाच्यः गोसदृशत्वाद्यन्नैवं तन्नैवमिति व्यतिरेक्यनुमितिरूपैवोपमितिरस्तूपमिनोमीतिप्रतीतेरपि शक्तिविधेयकानुमितिरिव विषयोस्त्वित्याशङ्कान्निराचष्टे नापीति सङ्-क्षेपइति नानुमिनोमि न शृणोमि न स्मरामि किन्तूपमिनोमीतिप्रतीतेरपिप्रतीत्यन्तरमेवोपमितिरितिभावः॥७९॥ ८०॥ १॥ इतिश्रीमद्रामरुद्रसूरिविरचितायान्दिनकरीतरङ्गिण्यामुपमानतरङ्गः॥ १॥ ॥ १॥ १॥

उपजीव्योपजीवकभावसङ्गतिमभिप्रेत्याह मूलेपदज्ञानन्त्विति एवकारार्थकस्यमूलस्थतुशब्दस्यव्यवच्छेद्यंस्पष्टयतिमुक्तावल्याम् ननुज्ञा
यमानमिति मौनिश्लोकादावित्यादिनाहिलादिबोधकविजातीयहस्तचेष्टादेःसङ्ग्रहः अन्यथापदार्थज्ञानमात्रस्यव्यापारत्वे तत्रापिपद
जन्यपदार्थोपस्थितावपिघटकत्वंसम्पन्नमर्थः अन्यथा वृत्तेरस्यानुपादानेनतुवृत्तिर्येदिशक्तिस्तदागङ्गापदात्तीरादेर्वोधोनस्यात्तत्रश
क्त्यापदजन्यतीरोपस्थितेरभावादत आह वृत्तिश्चेति अन्यतरसम्बन्धः एकतरात्मकः सम्बन्धः अत्रैवपदजन्यपदार्थोपस्थितावेवसचेति
यद्यपीश्वरेच्छायाएकत्वाद्घटशब्दाद्घटोबोद्धव्यइतीश्वरेच्छापटेप्यस्तीत्यतिप्रसङ्गःएवङ्गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छाया

शाब्दबोधप्रकारन्दर्शयतिपदज्ञानन्त्विति ननुज्ञायमानम्पदङ्करणम् पदाभावेपिमौनिश्लोकादौशाब्दबोधात् पदा
र्थधीरिति पदजन्यपदार्थस्मरणम्व्यापारः अन्यथापदज्ञानवतःप्रत्यक्षादिनापदार्थोपस्थितावपिशाब्दबोधापत्तेःत
त्रापिहस्मापदजन्यत्वम्बोध्यम् अन्यथाघटादिपदात्समवायसम्बन्धेनाकाशस्मरणेजातेआकाशस्यापिशाब्दबोधापत्तेः

पदज्ञानन्तुकरणन्द्वारन्तत्रपदार्थधीः शाब्दबोधःफलन्तत्रशक्तिधीःसहकारिणी॥१॥ ८१ ॥ ६॥ ७॥

वृत्तिश्चशक्तिलक्षणान्यतरसम्बंधः अत्रैवशक्तिज्ञानस्योपयोगः पूर्वंशक्तिग्रहाभावेपदज्ञानेपितत्सम्बंधेनस्मरणानुपप
त्तेःपदज्ञानस्यहिएकसम्बन्धिज्ञानविधयास्मारकत्वम् शक्तिश्चपदेनसहपदार्थस्यसम्बन्धःसचास्माच्छब्दादयमर्थो
बोद्धव्यइतीश्वरेच्छारूपः आधुनिकेनाम्निशक्तिरस्त्येव एकादशेहनिपितानामकुर्यादितीश्वरेच्छायाःसत्वात्॥

तीरेपिसत्वाच्छक्त्यैवतीरबोधोपपत्तेर्लक्षणोच्छेदापत्तिस्तथापिगङ्गापदवाच्यत्वव्यवहारस्यतीरेऽभावाद्गङ्गादिपदजन्यबोधविषयतात्वाव
च्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छेवगङ्गादिपदानांशक्तिस्तीरादिनिष्ठविशेष्यतायागङ्गादिपदजन्यबोधविषयत्वप्रका
रतानिरूपितत्वेपिनतस्यास्तादृशविषयतात्वेनतादृशप्रकारतानिरूपितत्वमपितुशुद्धविषयतात्वेनेति नातिप्रसङ्गोनवालक्षणोच्छेदइति
आधुनिकेनाम्नि आधुनिकैःपित्रादिभिरेकादशेऽहनि सङ्केतितेनाम्नि इतीश्वरेच्छायाइति एकादशाहकालीनपितृचारणविषयनामत्वेनसामान्य

का॰मु॰ आधुनिकसङ्केतितेत्विति आधुनिकमात्रसङ्केतितेनदीवृद्ध्यादिपदेतु सम्प्रदायमते ऽस्वरसं हृदिनिधायनवीनमतन्दर्शयति नव्यास्त्विति नशक्ति-
टि॰ रिति। तथासत्याधुनिकसङ्केतितात्नद्यादिपदाच्छाब्दबोधोनस्यादितिभावः मतद्वयेप्यपभ्रंशात्मकगगर्यादिपदे शक्तिभ्रमादेवबोधइत्य
१७४ वधेयम् व्याकरणादिति भूसत्तायाम् वर्तमानेलडित्यादिव्याकरणादित्यर्थः लाघवादिति कृतित्वजातेः शक्यतावच्छेदकत्वेलाघवादि
त्यर्थः नचकर्तुरनभिधानादिति अनभिहितइत्यधिकारीयेण कर्तृकरणयोस्तृतीयेत्यनेनाभिहितकर्तरितृतीयाविधानादितिभावः तत्र

आधुनिकसङ्केतितेतुनशक्तिरितिसम्प्रदायः नव्यास्तुईश्वरेच्छानशक्तिः किन्त्विच्छैवतेनाधुनिकसङ्केतितेपि
शक्तिरस्तीत्याहुः शक्तिग्रहस्तुव्याकरणादितः तथाहि शक्तिग्रहम्व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्चवा
क्यस्यशेषाद्विवृतेर्वदन्तिसान्निध्यतः सिद्धपदस्यवृद्धाः धातुप्रकृतिप्रत्ययादीनांशक्तिग्रहोव्याकरणाद्भवति।
क्वचित्सतिबाधकेत्यज्यते वैयाकरणैराख्यातस्यकर्तरि शक्तिरुच्यते चैत्रः पचतीत्यादौकर्त्रासहचैत्रस्याभेदा
न्वयस्तत्रगौरवात्त्यज्यते किन्तुकृतौशक्तिर्लाघवात् कृतिश्चैत्रादौप्रकारीभूयभासते नचकर्तुरनभिधानाच्चै
त्रपदोत्तरन्तृतीयास्यादितिवाच्यम्॥ कर्तृसङ्ख्यानभिधानस्यतत्रतन्त्रत्वात्॥ सङ्ख्याभिधानयोग्यश्च।
कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः॥ ६॥ श्रो॰ ६॥ ॥ श्रो॰ ६॥ ॥ ८१॥

॥ तृतीयायाम् तन्त्रत्वात् प्रयोजकत्वात्॥
ननुकर्तृसङ्ख्याभिधानेएवकिम्प्रयोजकइत्याशङ्कायांतत्प्रयोजकन्दर्शयति संख्याभिधानेति चैत्रः पचति तएडलइत्यादौकर्म
त्वादिलाक्षणिकप्रथमान्तपदोपस्थाप्यएडुलादि व्युदासायकर्मत्वाद्यनवरुद्ध इति ननुचैत्रइवमैत्रोगच्छतीत्यत्राख्यातेनैकव
चनत्वरूपेणोक्तायाः सङ्ख्यायाश्चैत्रेऽन्वयः स्यात्कर्मत्वाद्यनवरुद्धत्वात् प्रथमान्तपदोपस्थाप्यत्वाच्चकिंञ्चपक्वमन्नंभुज्यतइ रम॰
त्यादावन्नादौसङ्ख्यान्वयानुपपत्तिः पाककर्मत्वस्यान्नेऽन्वयेऽनकर्मत्वाद्यनवरुद्धत्वाभावादतआह॥ श्रो॰ ६॥ ७॥ ८॥ ६॥ ६॥ १७५

चैत्रान्यावृत्तिपाकानुकूलकृतिमान् चैत्र इति शाब्दबोधः। चैत्रप्रतियोगिकभेदाश्रयवृत्त्यभावप्रतियोगिकपाकानुकूलकृति
मानिति शाब्दबोधः॥ खंडशक्तिपक्षे चैत्रनिष्ठकर्मतानिरूपकदर्शनाश्रयश्चैत्र इति शाब्दबोधः॥ टिप्पन॥ पं॰॥ ५॥

कर्मत्वादीत्यस्येति तथा च कर्मत्वप्रत्ययमितरपदमनवरुद्धत्वञ्च विशेषणतया विवक्षितत्वम् वस्तुतस्तत्रस्यापि न विवक्षा विशेषण त्वमात्रस्य विवक्षितत्वात् अविशेषणत्वम्प्रकारताशून्यत्वम् तस्य च शाब्दबोधात्पूर्वञ्चैत्रादावपि सत्त्वात् चैत्र इव मैत्रो गच्छतीत्यादौ चैत्रेऽपि संख्यान्वयापत्तिः न च चैत्रीयसादृश्यमित्येवान्तरवाक्यार्थबोधस्य पूर्वं सत्त्वात्कथमविशेषणत्वं चैत्रस्येति वाच्यम् यत्र खलेकपोतन्यायेन बोधस्तत्र चैत्रीयसादृश्यमित्यवान्तरवाक्यार्थबोधस्य पूर्वमभावात्ततो विशेषणत्वतात्पर्यविषयत्वपर्यन्तानुधावनम् न च चैत्र एव पचति चैत्रश्चैत्रम्पश्यतीत्यादावेवकारार्थेऽन्यस्मिन् कर्मादौ च चैत्रस्य विशेषणत्वात् कथं तत्र संख्यान्वय इति वाच्यम् विशेषणत्वमात्रेण तात्पर्यविषयत्वस्य विवक्षितत्वात् चैत्रस्योक्तस्थले विशेषणत्वमुख्यविशेष्यत्वाभ्यां तात्पर्यवि

कर्मत्वादीत्यस्येतरविशेषणत्वेन तात्पर्याविषयत्वमर्थः तेन चैत्र इव मैत्रो गच्छतीत्यादौ न चैत्रे संख्यान्वयः।
यत्र न कर्मादौ विशेषणत्वेन तात्पर्यं तद्वारणाय प्रथमान्तेति यद्वा धात्वर्थातिरिक्ताविशेषणत्वम् प्रथमदलार्थः॥

षयत्वात्तत्र संख्यान्वयोपपत्तेः यदि च चैत्र इव मैत्र इत्यादौ चैत्रादेर्यदा न विशेषणत्वतात्पर्यविषयत्वन्तदा चैत्रेऽपि संख्यान्वयापत्तिः न च शाब्दबोधे तात्पर्यज्ञानस्य हेतुत्वान्नैवमिति वाच्यम् नानार्थातिरिक्तस्थले शाब्दबोधे तात्पर्यज्ञानस्य हेतुत्वे मानाभावादित्युच्यते तदा विशेषणत्वं विशेषणत्वमात्रप्रयोजकप्रथमान्तत्वं तत्पदानुपस्थाप्यत्वं बोध्यम् न विशेषणत्वेन तात्पर्यं न विशेषणत्वमात्रे तात्पर्यम् तथा च तण्डुलम्पचतीत्यादौ यदि विशेषणत्वमुख्यविशेष्यत्वाभ्यां तण्डुलबोधे तात्पर्यम् तत्र तण्डुले संख्यान्वयवारणाय प्रथमान्तेत्यादीति भावः इदमुपलक्षणम् चैत्रेण सुप्यत इत्यादौ धात्वर्थस्वापादौ संख्यान्वयवारणाय प्रथमान्तपदोपस्थाप्यत्वस्यावश्यकत्वात् द्वितीयदलस्य प्रकारान्तरेण प्रयोजनं वक्तुमन्यथा प्रथमदलार्थमाह यद्वेति ॥ ७॥ ६॥ श्री १॥ ॥ ३॥ ॥ ७॥ ६॥

तण्डुलम्पचतीत्यत्र तण्डुलनिष्ठकर्मतानिरूपकपाकानुकूलकृतिमान् कृतिजन्यपाकनिरूपितकर्मतावान् वा तण्डुल इत्यन्वयबोधो भूयादितीच्छया तण्डुलं पचतीति वाक्यमुच्चरितं तत्र चैत्रादेः द्विविधबोधस्याप्यङ्गीकर्तव्यतया तत्र तण्डुलस्य कर्मतांशे विशेषणविशेष्यत्वाभ्यां तात्पर्ये द्विविषयत्वेन विशेषणत्वमात्रतात्पर्याविषयत्वमसत्त्वमेव॥ टि॰॥ पं॰ ३॥

तदेत्यर्थः टि॰पं॰ ३॥

धात्वर्थातिरिक्तविशेषणमात्रप्रयोजकतत्पदानुपस्थाप्यत्वं प्रथमदलार्थः प्रकृते च कारसमभिव्याहृतचैत्रपदस्य न धात्वर्थातिरिक्तविशेषणत्वमात्रप्रयोजकमिति॥ टि॰ पं॰ १॥

केवलंसंख्यान्वयबोधं प्रति प्रथमान्तपदोपस्थाप्यत्वेन हेतुरपि भावनान्वयबोधं प्रत्यसंख्यान्वयबोधस्थले भावनान्वयबोधस्यानियमादितिभावः। टि॰३॥

मुख्यविशेष्यकत्वाभावविशिष्टंयद्धात्वर्थातिरिक्तविशेषणत्वन्तदभाववत्वेसति प्रथमान्तपदोपस्थाप्यत्वम् आख्यातोपात्तसंख्यान्वययोग्यत्वंचे त्रएवपचतीत्यत्र धात्वर्थातिरिक्तविशेषणत्वाभावाभावेपि एवकारार्थेनसाकंविशेषणत्वात् तथापि मुख्यविशेष्यत्वाभावविशिष्टधात्वर्थातिरिक्तविशेषणत्वाभावोस्त्येवचैत्रस्यमुख्यविशेष्यत्वात् विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वात्त्वादितिभावः॥ टि॰॥ प २॥ ॥

का॰मु॰ टि॰ १७५ चैत्रादेर्वारणमिति तस्यसाहस्ये विशेषणत्वादितिभावः द्वितीयान्तपदोपस्थाप्यत्वादिति प्रथमान्तपदोपस्थाप्यत्वाभावादित्यर्थः अत्रकल्पेचैत्र शं॰खं॰
एवपचतीत्यादौ चैत्रेसङ्ख्यान्वयोपपादनंसुधीभिर्विभावनीयम् इदन्त्ववधेयम् संख्यान्वयबोधम्प्रतितिनसौत्रन्त्रमेण प्रथमान्तपदोपस्थाप्य
त्वहेतुः आख्यातेनभावनानवगाहिसङ्ख्यान्वयबोधस्यकुत्राप्यजननात्संङ्ख्यान्वयबोधत्वव्यापकभावनान्वयबोधत्वावच्छिन्नहेतुभूतता
दृशप्रथमान्तपदोपस्थाप्यत्वरूपकारणविरहेणैव प्रथमान्तपदानुपस्थाप्येसंख्यान्वयापत्त्यसम्भवात् नचनिरुक्तप्रथमान्तपदोपस्था
प्यत्वस्यजन्यतावच्छेदकम्भावनान्वयबोधत्वंसङ्ख्यान्वयबोधत्वम्वेत्यत्रविनिगमनाविरहः सङ्ख्याम विषयीकृत्यापिभावनान्वयबो
धस्यानुभवसिद्धतया भावनान्वयबोधत्वस्यजन्यतावच्छेदकत्वस्यावश्यकत्वेसंख्यान्वयबोधत्वस्यतथात्वेमानाभावात् लकारसामान्यस्य

तेनचैत्रइवमैत्रोगच्छतीत्यत्रचैत्रादेर्वारणम् स्तोकम्पचतीत्यादौस्तोकादेर्वारणायद्वितीयपदलम् न
स्यद्वितीयान्तपदोपस्थाप्यत्वाद्वारणमिति एवम्व्यापारेपिनशक्तिर्गौरवात् रथोगच्छतीत्यादौतुव्यापारेआ
श्रयत्वेवालक्षणाजानातीत्यादौत्वाश्रयत्वेनश्यतीत्यादौतुप्रतियोगित्वेनिरूढलक्षणा॥ ६॥ ॥

व्यापारोऽर्थइतिमीमांसकमतन्दूषयति गौरवादिति जन्यत्वादिघटितस्यव्यापारत्वस्ययत्नत्वजात्यपेक्षयागुरुत्वादितिभावः नन्वाख्यात
स्यनयत्नार्थकत्वंरथोगच्छतीत्यादौतदभावेप्याख्यातपदप्रयोगादतआह रथइतिरथोगच्छतीत्यत्रगमनानुकूलव्यापारस्यनबोधः
किन्तुगमनाश्रयत्वस्यैवेतिनवीनमतमाश्रित्याह आश्रयत्वेवेति लक्षणानिरूढलक्षणाक्वचित्तथैवपाठःचक्षुर्जानातीत्यादौव्यापारेजनक
त्वेवालक्षणास्वीकारात् जानातीत्यादावाख्यातस्याश्रयत्वेलक्षणानियमोनसम्भवतीत्यतआहआदाविति आदिनाइच्छतियतनेइत्यादेः सम॰
सङ्गः इदमत्रबोध्यम् तण्डुलम्पचति चैत्र[illegible]यान्वयः॥ ७॥ ६॥ ६॥ ॥ ७॥ ८॥ १७५

कर्मत्वस्य पाके पाकस्यास्यातार्थकृतौ तस्याश्चैत्रइतितण्डुलकर्मकपाकानुकूलकृतिमांश्चैत्रइतिबोधः चैत्रेणपच्यतेतण्डुलइत्यत्रकृतिस्तृतीयार्थस्तस्याआधेयतयाचैत्रादिरन्वयस्तस्याश्चधात्वर्थपाकेतस्यात्मनेपदार्थेफलेतस्यचाश्रयतासंबंधेनतण्डुलइतिचैत्रवृत्तिकृतिजन्यपाकजन्यफलाश्रयस्तण्डुलइत्यन्वयबोधः कृतानुकर्त्तृकर्मचार्थः चैत्रःपक्वान्तण्डुलःपक्वइत्यादावभेदान्वयानुरोधस्तुआमार्थयोर्भेदान्वयबोधस्यानुत्पन्नत्वमित्यन्यत्रविस्तरः तथोक्तमिति उपमाननिरूपणावसरइतिशेषः शक्तिग्रहइतिभवतीतिशेषः कोशेनसुत्यादिनेति गुणेशुक्लादयःपुंसिगुणिलिंगास्तुतद्वतीति कोशस्योभयत्रशक्तिग्राहकत्वादितिभावः लाघवादिति नीलादिमत्वापेक्षयानीलत्वादिज्ञानेलघुतयाशक्यतावच्छेदकत्वादितिभावः नीलादिविशिष्टेतुलक्षणेतिगुणवचनान्मतुपोलुगिष्टइतिस्मर।

उपमानाद्यथाशक्तिग्रहस्तथोक्तम् एवङ्कोशादपिशक्तिग्रहः सतिबाधकेक्वचित्त्यज्यते यथानीलादिपदानान्नीलरूपादौनीलविशिष्टेचशक्तिः कोशेनसुत्यादिना तथापिलाघवान्नीलादावेवशक्तिः नीलादिरूपविशिष्टेतुलक्षणाइति एवमाप्तवाक्यादपियथाकोकिलः पिकशब्दवाच्यइत्यादिशब्दात् पिकादिशब्दानाङ्कोकिलेशक्तिग्रहः एवम्व्यवहारादपि यथाप्रयोजकवृद्धेनघटमानयेत्युक्तम्॥ छ॥ छ॥

णाह्लुप्तेनमतुपैव विशिष्टार्थबोधसम्भवेऽलक्षणयेत्यपिवदन्ति तत्तुघटानयनम् नतुव्यवहारेणानयनादिनानुमितेघटानयनादिधर्मिककार्यताज्ञानेपदानाङ्कारणत्वंलाघवात्पदत्वावच्छेदेनेवगृहीतम् एवञ्चसाक्षात्परम्परयावाकार्यत्वान्वितविषयकशाब्दत्वावच्छिन्नम्प्रतिपदत्वेनकारणतेतिकार्यकारणभावः पर्यवसितः इयमेवकार्यान्वितेपदानामानुभाविकीशक्तिः एवञ्चकार्यान्वितविषयकशाब्दत्वव्यापकीभूतकार्यताविषयकशाब्दत्वावच्छिन्नजनककार्यतावाचकलिङादिपदाभावात् कथंकोशादितःशक्तिग्रहइति॥ छ॥ १॥ २॥ ॥ छ॥ छ॥ ७॥ छ॥ ॥ ॥ १॥ ॥ १॥ १॥ ॥ ॥ ॥ छ॥ ॥ ॥ ॥ ७॥

घटमानयेतिवाक्यंघटानयनादिधर्मिककार्यताज्ञानजनकंघटानयनादिव्यवहारजनकत्वात्॥ टि॰ पं॰ ५॥

काप्र·
टि·का·
१७६

प्रभाकराक्षेपन्तन्मतदूषणेनदूषयितुन्तन्मतसिद्धमर्थम्प्रदर्शयति इत्थञ्चेत्यादिना एतेनस्मारकशक्तिप्रसङ्गे· आनुभाविकशक्ति। श्रवं·
प्रदर्शनमनुचितमित्याशङ्कानिरस्ता ननुभूतलेनीलोघटइत्यादितः कार्यताविषयकबोधापत्तिः तत्रतादृशपदानांसामर्थ्यावधार
णादिति नैयथोक्तत्वादित्यतआह कार्यताबोधम्प्रतिचेति सामर्थ्यान्तरभावादिति कार्यताबोधम्प्रतिलिङ्गादिपदानांस्वजन्यकार्य
त्वोपस्थितिद्वाराहेतुत्वम् घटादिपदानाञ्च कार्यत्वानुभवम्प्रति हेतुत्वेपिघटादिपदेषुकार्यत्वस्मारकशक्त्यभावेनस्मारकश।

तच्छ्रुत्वाप्रयोज्यवृद्धेनघटआनीतस्तदवधार्यपार्श्वस्थोबालो घटानयनरूपञ्च कार्यञ्च घटमानयेतिश
ब्दप्रयोज्यमित्यवधारयति ततश्च घटन्नयगामानयेत्यादिवाक्यादावापोद्वापाभ्याञ्च घटादिपदानाङ्कार्या
न्वितघटादौशक्तिङ्गृह्णाति इत्थञ्चभूतलेनीलोघटइत्यादिशब्दान्नशाब्दबोधः घटादिपदानाङ्का
र्यान्वितघटादिबोधेसामर्थ्यावधारणात् कार्यताबोधम्प्रतिचलिङ्गादीनांसामर्थ्यान्तरभावान्नशाब्दबो
धइतिकेचित्तन्न प्रथमतःकार्यान्वितघटादौशक्त्यवधारणेपि लाघवेनपश्चात्तस्यपरित्यागौचित्यात्
अतएवचैत्रपुत्रस्तेजातः कन्यातेगर्भिणीत्यादौ मुखप्रसादमुखमालिन्याभ्यांसुखदुःखे अनुमायत
त्कारणत्वेनपरिशेषाच्छाब्दबोधन्निर्णीयतद्धेतुतयातंशब्दमवधारयति तथाच॥ छ॥ ॥छ॥ छ॥

त्वाकार्यत्वोपस्थापकलिङ्गादिपदाभावान्नभूतलेघटइत्यादितःशाब्दबोधइतिभावः लाघवेनेति कार्यत्वान्वितघ
टशाब्दत्वापेक्षयाघटशाब्दत्वस्यकार्यतावच्छेदकत्वेलाघवेनेत्यर्थः अतएवकार्यत्वाविषयकबोधम्प्रतिपदानांहेतुत्वादेवत।
त्कारणत्वेनसुखदुःखयोःकारणत्वेनतद्धेतुतयातादृशशाब्दबोधेहेतुतया॥ ३॥ ३॥ ३॥ ॥ ३॥ छ॥ ॥छ॥ ॥ ३॥ ॥छ॥ छ॥छ॥ राम
१७६

देवदत्तसमवेतसुखंवाक्यबोधजन्यंतदितरसामग्रीशून्यत्वेसतिसुखत्वात्सुखादिजनकीभूत
बोधोमदुच्चरितानुपूर्वीवाक्यजन्यःसदुच्चरितवाक्यान्वयव्यतिरेकानुविधायित्वात्॥ टि·प·१

व्यभिचारादिति घटादिपदैः कार्यताविषयक एव बोधो जन्यते इति नियमे व्यभिचारादित्यर्थः कार्यत्वाविषयकबोधस्य चैत्रपुत्रस्ते जात इत्यादिपदैर्जननादितिभावः अध्याहार्यमिति तथा च तत्रापि लोडादिजन्यकार्यत्वोपस्थितेः सत्त्वेन कार्यताविषयकबोधस्यैवोत्पादेन न तादृशनियमे व्यभिचार इति भावः तदभावाच्चेति तम्पश्येत्यादिकार्यताबोधकपदाध्याहारासम्भवाच्चेत्यर्थः॥ भट्टमतमाक्षिपन्स्वमतमुपसंहरति इत्थञ्चेति॥ लाघवादिति अन्वितघटे शक्तिकल्पनापेक्षया घटमात्रे तत्कल्पने लाघवादित्यर्थः यवपदस्येति देहलीदीपकन्यायेनान्वयः तत्र हि तादृशद्विविधव्यवहारेण कङ्गौ दीर्घशूके वा यवपदस्य शक्तिरिति सन्देहे सति॥

व्यभिचारान्न कार्यान्विते शक्तिः न च तत्र तम्पश्येत्यादिशब्दान्तरमध्याहार्यम् मानाभावात् चैत्रपुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च इत्थञ्च लाघवादन्विते घटेऽपि शक्तिं त्यक्त्वा घटे पदस्य घटपदमात्रे शक्तिमवधारयति एवं वाक्यशेषादपि शक्तिग्रहः यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः कङ्गौ तु म्लेच्छानाम्॥ तत्र हि वसन्ते सर्वसस्यानां जायते पत्रशातनं मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिन इति यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति इति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते कङ्गौ तु शक्तिभ्रमात्प्रयोगः नानाशक्तिकल्पने गौरवात् हर्यादिपदे तु विनिगमकाभावान्नानाशक्तिकल्पनम् एवं विवरणादपि शक्तिग्रहः विवरणं तु तत्समानार्थकपदान्तरेण तदर्थकथनं यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणात् घटपदस्य कलशे शक्तिग्रहः एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणात्॥ ६॥ श्री ६॥ ६॥

यवपदस्येति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयत इत्यन्वयः नन्वस्तु यवपदस्य वाक्यशेषेणादीर्घशूके शक्तिः कङ्गावपि शक्तिसत्त्वे बाधकाभाव इत्यत आह नानाशक्तीति कथं तर्हि हर्यादिपदे नानाशक्तिकल्पनेत्यत आह हर्यादिपदे त्विति विनिगमकाभावादिति तत्र कोशस्योभयत्र तुल्यत्वात् प्रकृते च वाक्यशेषस्यैव विनिगमकत्वादिति भावः॥ ॥ ६॥ ॥ ६॥ ७॥

नागृहीतविशेषणबुद्धिर्विशेष्यमुपसंक्रामते इतिन्यायस्वरूपम्॥ दि॰पं॰ ६॥

का॰मु॰ आख्यातस्य यत्नार्थकत्वमिति नच विवरणस्यैकार्थशक्तिग्राहकत्वम् तद्वाचकपदाभावादिति वाच्यम् आख्यातं यत्नत्वविशिष्टे श॰ख॰
दि॰ शक्तम्॥ यत्नत्वविशिष्टशक्तं करोतिप्रतिपादितार्थप्रतिपादकत्वादित्यनुमानविधयातस्यशक्तिग्राहकत्वात् प्रसिद्धपदस्येति प्रसिद्धा
१७७ र्थकपदस्येत्यर्थः तिङर्थं धर्मिणि तामाथीन्वयाप्युपलनयानेदं शक्तिग्रहस्योदाहरणमिति तु नयोपः शूद्रस्यपचतिद्विजोन्न।
सोतिनिन्दितइत्यादौ तिङर्थधर्मिणि तथान्वयदर्शनेन तादृशनियमस्यासिद्धेः प्रसङ्गात्परमतनिराकरणपूर्वकं स्वमतेजात्या
दिविशिष्टे शक्तिम्व्यवस्थापयितुम्मीमांसकमतमाह जाताववेति जातिविशिष्टे शक्तिस्वीकारे जातावपिशक्तिग्रहस्यावश्यकतानागृ
हीतविशेषणन्यायात् तथा च जातावेव शक्तिर्लाघवात् तदुक्तं विशेष्यन्नाभिधागच्छेत्क्षीणशक्तिर्विशेषणेइतिभावः यस्याङ्कस्या

आख्यातस्ययत्नार्थकत्वङ्कल्प्यते एवम्प्रसिद्धपदस्यसान्निध्यादपिशक्तिग्रहः यथाइहसहकारतरौ
मधुरम्पिकोरौतीत्यादौ पिकशब्दस्यकोकिलेशक्तिग्रहइति तत्रजातावेवशक्तिग्रहः नतुव्यक्तौव्यभि।
चारादानन्त्याच्च व्यक्तिम्विनाजातिभानस्यासम्भवाद्व्यक्तेरपिभानमितिकेचित् तन्नशक्तिम्विनाव्यक्ति
भानानुपपत्तेः नचव्यक्तौ॥ ॥ ॥ ॥श्री॥ ॥ ॥ ॥ श्री ॥ ॥ ॥ श्री ॥ ॥ ॥

व्विद्यक्तौ शक्तिः सर्वासुवेति विकल्प्य आद्ये दोषमाह व्यभिचारादिति अगृहीतशक्तिव्यक्तावपि शाब्दबोधोदयेन तत्रशक्तिज्ञाना
भावाद्व्यभिचार एवेति भावः द्वितीये तमाह आनन्त्यादिति व्यक्तिभेदेन शक्तिभेदाच्छक्त्यानन्त्यस्यादित्यर्थः असम्भवादिति जा
तिभासकसामग्र्या एव व्यक्तिभासकत्वादिति भावः इदमेव कथमिति चेद्व्यक्तिविशेष्यकजातिप्रकारकशाब्दबोधे जातिविषयक
शक्तिज्ञानत्वेन हेतुत्वात् नच तादृशबोधे व्यक्तिशक्तिज्ञानत्वेन हेतुत्वमुपगम्य व्यक्तावेव शक्तिः किन्त्वाङ्गीक्रियतइति वाच्यम् ॥ राम
तथासति उक्तानन्त्यादिदोषप्रसङ्गादिति ॥ श्री॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ १७७

किंविनेति पदजन्यपदार्थोपस्थितेः शाब्दबोधम्प्रति हेतुतयाव्यक्तिशक्तिं विनातदभानान्निर्वाहादितिभावः॥ ७ ॥ लक्षणेति तावतैव तत्त्या पदजन्यपदार्थोपस्थितेर्निर्वाहादितिभावः अनुपपत्तिप्रतिसन्धानं विनापीति गामानयेत्यादौ गोत्वजातेरानयनान्वयानुपपत्त्या गोपदस्य गविलक्षणास्वीकारेपि गौरस्तीत्यादौ गोत्वजातेरस्तित्वाद्यन्वयानुपपत्तेर्लक्षणाबीजस्याभावेन लक्षणायाः स्वीकर्तुमशक्यत्वादितिभावः स्वमते पूर्वोक्तदोषमाशङ्क्य वारयति नचेत्यादिना एकस्या इति ईश्वरेच्छारूपायास्तस्या एकत्वादित्यर्थः नचाननुगमइति गोव्यक्तीना——मननुगततया विषयतासम्बन्धेन शक्तिज्ञानकरणानां यामवच्छेदकत्वासम्भवइत्यर्थः गोत्वादेरेवेति तथा च गो शाब्दबोधे गोत्वविशिष्टविषयकशक्तिज्ञानत्वेन हेतुत्वान्नोक्तदोषइतिभावः नतु सर्वत्र पदजन्य———पदार्थोपस्थितेर्हेतुत्वेमानाभावः

लक्षणा अनुपपत्तिप्रतिसन्धानं वि——नापि व्यक्तिबोधात् नच व्यक्तिशक्तावानन्त्यं सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात् नचाननुगमः गोत्वादेरेवानुगमकत्वात् किञ्च गौः शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिर्यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात् समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधम्प्रति च हेतुत्वात्॥

१ कथमन्यथा शाब्दबोधे संसर्गज्ञानम् नचैवं पदानुपस्थितपदार्थस्यापि भानापत्तिरिति वाच्यम् गोविशेष्यक गोत्वप्रकारकशाब्दबोधम्प्रति गोत्वशक्तिज्ञानत्वेन हेतुत्वस्योक्तत्वादेतादृशातिप्रसङ्गविरहादित्यत आह किञ्चेति तदा व्यक्तौ शक्तिरिति गौः शक्येति विशिष्टज्ञानस्य प्रमात्मकमेव तत्त्वम्मतेऽन्यथास्यात्त्वभावात् प्रमायाश्च वस्तुसाधकत्वादितिभावः समानप्रकारकत्वेनेति ईदृशशक्तिज्ञानस्य गोत्वप्रकारकत्वाभावेन गामानयेत्यादौ गोत्वप्रकारकस्मरणशाब्दबोधयोरनुपपत्तिरित्यर्थः नच गोपदं गोत्वे शक्तमित्येतादृशशक्तिग्रहस्यैव शाब्दबोधे हेतुत्वात् तस्य च शक्यांशे गोत्वप्रकारकत्वात् न तत्प्रकारकशाब्दबोधानुपपत्तिरिति वाच्यम् शक्तिग्रहे यदंशे गोत्वादिप्रकारकत्वे शाब्दबोधस्यापि तदंशे गोत्वादिप्रकारकत्वमित्येतादृशसमानप्रकारक॥ ९॥

का॰मु॰ त्वस्य परमते सिद्धान्तितत्वात् अत एवापूर्ववादेऽपूर्वस्यापूर्वमनुपस्थितत्वात् कथं तत्र शक्तिग्रह इत्याशङ्क्य कार्यत्वेन घटादिषु शक्ति शा॰सं॰
दि॰ ग्रहात् योग्यतया शाब्दबोधेऽपूर्वभानमित्युक्तं नैरिति ननु कार्यत्वाद्युपाधिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वसत्तद
१७८ नुमतत्वेपि जातिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वं नतरत्तु मतमत आह ॥ ङ्कू ॥ ङ्क ॥ किञ्चेति शक्यतावच्छेदकं वा
च्यमिति गोत्वधर्मिकशक्यत्वज्ञानस्य पदधर्मिकगोत्वादिशक्तिज्ञानस्य वा शाब्दबोधे हेतुत्वे गोत्वत्वावच्छिन्नगोत्वविषयताया निवे
शस्यावश्यकः निर्धर्मितावच्छेदकशक्तिज्ञानस्य गोत्वाद्यंशे निष्प्रकारकशक्तिज्ञानस्य वा विपरीतज्ञानाविरोधिनः शाब्दबोधाहेतु
त्वात् तथाच गोत्वत्वे शक्यतावच्छेदकत्वावगाहितादृशप्रमाया विषयसाधकत्वाद् गोत्वत्वे शक्यतावच्छेदकत्वसिद्धिरिति भावः त

किञ्च गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यम् गोत्वत्वन्तु गवेतरासमवेतत्वे सति सकलगो
समवेतत्वम् तथाच गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात् तदेव गौरवम् तस्मात्तत्तज्जात्याकृतिवि
शिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमानाशक्तिः ॥ ङ्क ॥ ङ्कू ॥ ङ्क ॥ ङ्क ॥ ङ्क ॥ ङ्क ॥ श्रीङ्कू ॥ ङ्क ॥ ङ्क ॥

वैव गौरवमिति नच गोत्वत्वावच्छिन्नविषयकशक्तिज्ञानस्य कारणत्वेपि संभ्रमो नतु तस्य विषयसाधकत्वमिति वाच्यम् तथा सति प्रती
तेः कारणतावच्छेदकत्वाद्यंशेपि भ्रमत्वस्यावश्यकत्वाद्यंशेपि भ्रमत्वस्य वक्तुं शक्यतया कारणतावच्छेदकत्वादीनामङ्कुरत्वापि सिद्धिर्न स्यात् मास्तु वा गोत्वत्वादीना
मवच्छेदकत्वं तथापि गवेतरासमवेतत्वादिघटितगोत्वत्वादेर्धर्मितावच्छेदकताद्यात्मकविषयतापाः शाब्दबोधकारणतावच्छे
दककोटिप्रवेशप्रयुक्तगौरवं दुर्वारमेवेति स्वमतमुपसंहरति तस्मादिति व्यक्ताविति जात्याकृतिविशिष्टव्यक्तावेव अवयवसंस्था
नविशेषरूपाया आकृतेः शक्यत्वेपि न जातिवत्तदवच्छेदकत्वम् ॥ सामानाधिकरण्यसम्बन्धस्य शक्यतावच्छेदकतावच्छेदक प्रम॰
त्वकल्पने गौरवात् ॥ अत्र च परस्परपरित्यागेन परस्परस्य बोधाभावात्त्रिष्वेकैव शक्तिरेतद्बोधनायैव सूत्रेऽजा ॥ श्रीङ्कू ॥ ङ्क ॥ ङ्क ॥ ॥ १७८

त्याकृतिव्यक्तयः पदार्थ इत्येकवचनमिति सम्प्रदायः नव्यास्तु संस्थानानुपस्थितावपि गोत्वादिना गवादन्वयबोधाज्जातिविशिष्टव्यक्तावे
व शक्तिः ॥ संस्थाने च पृथगेव शक्तिः व्युत्पत्तिवैचित्र्याच्च अवयवसंस्थानव्यक्त्योरेकपदार्थयोरपि परस्परमन्वयबोधः सौत्रं पदार्थ
इत्येकवचनन्तु जातिव्यक्त्योरेकशक्तिलाभायेत्याहुः न च शब्दस्य वक्तृबुद्धिविषयतावच्छेदकीभूतघटत्वाद्यवच्छिन्ने शक्तिः अ
थ घटत्वादीनां शक्यतावच्छेदकत्वे शक्यतावच्छेदकभेदाच्छक्तिभेदापत्तिः न च शक्यतावच्छेदकभेदेपि शक्यतावच्छेदकता
वच्छेदकस्य बुद्धिविषयतावच्छेदकत्वस्यैक्यान्न शक्तिभेद इति वाच्यम् तस्य शक्यतावच्छेदकतावच्छेदकत्वे शाब्दबोधे तज्ज्ञानापत्ते
रिति चेन्न बुद्धिविषयतावच्छेदकत्वस्योपलक्षणतया शक्यतावच्छेदकतावच्छेदकत्वात् उपलक्षणस्य च शाब्दबोधे भानानङ्गीका

र्विश्राम्यति शक्तम्पदम् तच्चतुर्विधम् क्वचिद्यौगिकं क्वचिद्रूढम् क्वचिद्योगरूढम् क्वचिद्यौगिकरूढम् त
था हि यत्रावयवार्थ एव बुध्यते तद्यौगिकम् यथा पाचकादिपदम् यत्रावयवशक्तिनैरपेक्ष्येण समुदायश॰
क्तिमात्रेण बुध्यते तद्रूढम् यथा गोमण्डलादिपदम् यत्र तु अवयव शक्तिविषये समुदायशक्तिरप्यस्ति
तद्योगरूढम् यथा पङ्कजादिपदम् तथा हि पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृत्वरूपमर्थं बोधयति ॥

रात् घटत्वादेश्च शक्यतावच्छेदकत्वं विशेषणत्वेनैव अतस्तस्य शाब्दबोधे भानम् विशेषणत्वञ्च तत्तत्पदजन्यबोधविषयत्वेन श
क्तिविषयत्वम् उपलक्षणत्वञ्च तत्तत्पदजन्यबोधविषयत्वेन शक्यविषयत्वमिति एवमिदम्पदादिष्वपि तत्रापीदमेतदोः प्रत्य
क्षबुद्धिविषये ऽदसः परोक्षबुद्धिविषये शक्तिः अत एव तेषां विभिन्नार्थकत्वम् एवं तदोपि इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो॰
रूपम् अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादित्यपि वदन्ति किम्पदस्य जिज्ञासाविषयत्वविशिष्टे शक्तिः सर्वपदस्य व्या
पकत्वे सर्वे घटा रूपवन्त इत्यादौ घटत्वव्यापकं रूपवत्त्वमिति बोधात् त्वम्पदस्य तत्कालीनसम्बोध्ये चैत्रत्वादि शक्यतावच्छेदकम् ॥
एवमहम्पदस्य तत्कालीनस्वतन्त्रोच्चारयि

का॰सु॰ तृचैतन्नादिस्यानन्त्योक्त्या चवाच्यस्तयामहद्वचनात्सरोजेत्यादीनमन्यदाऽन्कवेर्वोधयन्त्यास्तांविस्तरः इतिशक्तिग्रंथः शक्तमन्यदस्विभ
दि॰ जनेशक्तमन्यदमिति क्वचिदिति किञ्चिदित्यर्थः एवमग्रेपि मण्डलादीत्यत्रवहुपुस्तकेषुमण्डपादीति पाठः सप्रामादिकः प्रतिव
१७९ न्धकत्वादिति न चरूढिज्ञानस्य यौगिकार्थवुद्धौ प्रतिवन्धकत्वे पक्षेपियोगार्थस्य पङ्कजनिकर्तृत्वस्य वोधोनस्यादितिवाच्य
म् पद्मत्वावच्छिन्नविशेष्यताऽनिरूपितपङ्कजपदयोगजन्यपङ्कजनिकर्तृत्वावच्छिन्न विषयताशालिवोधम्प्रति रूढिज्ञानस्य
प्रतिवन्धकत्वेन पद्मधर्मिकयोगार्थवुद्धेः प्रतिवध्यतावच्छेदकानाक्रान्तत्वादिति विरोध्यविषयकज्ञानस्यप्रतिवन्धकत्वञ्ज
नकज्ञानविघटकत्वेनैवेति नियमभङ्गमस्वरसम्प्राञ्च्वइत्यनेनसूचयन्मणिकारमतमाह वस्तुतस्त्विति सान्निध्यादिति रूढार्थस्य

समुदायशक्त्या चपद्मत्वेनरूपेणपद्मम्वोधयति नचकेवलयाऽवयवशक्त्याकुमुदे प्रयोगःस्या
दितिवाच्यम् रूढिज्ञानस्यकेवलयौगिकार्थज्ञाने प्रतिवन्धकत्वादितिप्राञ्च्वः वस्तुतस्तुसमुदाय
शक्त्युपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयोभवतिसान्निध्यात् ॥ ६ ॥ श्री ६ ॥ ९॥ ९॥ ९॥

सन्निहितोपस्थितिकत्वादित्यर्थः व्यक्तिवचनानांसन्निहितविशेषपरत्वनियमादितिभावः व्यक्तिवचनानांकिञ्चिद्युक्तितात्पर्य
काणांसन्निहितपरत्वमुपस्थितविशेषपरत्वमित्यर्थः तथाचपद्मेतात्पर्यसत्त्वेनरूढ्यर्थयोगार्थयोः परस्परान्वयवोधजनक
सामग्र्यन्तरसत्त्वेनचरूढ्यर्थएवयोगार्थोन्वयोनकुमुदादावि तिनरूढिज्ञानस्ययौगिकार्थवुद्धौ प्रतिवन्धकत्वम् एवंरूढ्यर्थयो
गार्थयोः परस्परान्वयवोधसामग्रीस्थलएवनकुमुदादेः पङ्कजपदाद्बोधोयत्रतुतयोः परस्परमन्वयवोधसामग्रीविरहस्तत्र एम॰
कुमुदादेर्वोधोभवत्येवपरन्तुकुमुदत्वेन [illegible] यास्तुद्धपङ्कजनिकर्तृत्वेनतुशक्तैवेत्याह १७९

यत्रतु रूढ्यर्थेत्यादिना प्रतिसन्धीयत इत्यनन्तरं कुमुदत्वेन बोधे च तात्पर्यमिति पूरणीयम् लक्षणयेति पङ्कजनिकर्तृकुमुदत्वेन बोधो लक्षणयेत्यर्थः रूढ्यर्थयोगार्थयोः परस्परसामग्रीविरहोपलक्षणमेतत् तेन रूढ्यर्थबाधप्रतिसन्धानासत्त्वेपि यत्र सामग्र्यन्तरविरहस्तत्रापि लक्षणया कुमुदबोधो भवत्येव अवयवशक्तिमात्रेणेति मात्रपदेन लक्षणानादरः सूचितः निर्वाहः पङ्कजनिकर्तृत्वेन कुमु

यत्रतु रूढ्यर्थस्य बाधः प्रतिसन्धीयते तत्र लक्षणया कुमुदादेर्बोधः यत्रतु कुमदत्वेन रूपेण बोधेन तात्पर्यज्ञानमपद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्वाह इत्याहुः यत्रतु स्थलपद्मादावेव यवार्थबाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः यदितु स्थलपद्मं विजातीयमेव तदा लक्षणयैवेति यत्रतु यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम् यथोद्भिदादिपदम् तत्र हि उद्भेदनकर्तातरुगुल्मादिरपि बुध्यते यागविशेषोपीति॥ ८१॥ लक्षणेति

॥ लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः ॥ ६॥

गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोध इति सा च शक्यसम्बन्धरूपा तथाहि प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात् तीरस्य स्मरणम् ततः शाब्दबोधः परन्तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशयेत्यादौ लक्षणा न स्यात् ॥ यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात् तेन तत्प्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा ॥ श्री ८२॥ ७॥

द्शाब्दबोधनिर्वाह इत्यर्थः पद्मत्वेन बोधः पद्मत्वेनैव बोधः लक्षणयैवेति रूढ्यर्थतावच्छेदकपद्मत्वजातेस्तत्राभावेन रूढ्या तद्बोधनासम्भवादिति भावः॥ ८१॥ लक्षणा द्विविधा जहत्स्वार्थाऽजहत्स्वार्था च तत्राद्यां प्रदर्शयति गङ्गायामिति वक्ष्यमाणस्वरसादाह तात्पर्यानुपपत्तिर्वेति सा च लक्षणा च द्वितीयां प्रदर्शयति॥

गा॰मु॰ टि॰ १८० एवङ्काकेभ्य इति दध्युपघातकेकाकविडालादिसाधारणदध्युपघातकत्वविशिष्टेएकसार्थवाहित्वेएकसार्थवाहित्वविशिष्टेछत्रिपदलक्ष॥ रा॰ खं॰
णाभिधानञ्चवाक्यलक्षणावादिमताभिप्रायेण न्यायमतेतुछत्रपदस्यैवैकसार्थवाहित्वेलक्षणाप्रत्ययार्थश्चसम्बन्धीतथाचैकसार्थवतो॥
गच्छन्तीन्वयः एकसार्थवाहित्वञ्चैकसार्थएवनत्वेकसार्थगन्तृत्वम् नैराकांक्ष्येण यान्तीत्यस्यानन्वयापत्तेः नचाजहत्स्वार्थतोक्तिविरु
द्धेति वाच्यम् वाक्यलक्षणावादिमतेनैवतदभिधानादिति क्वचिद्गङ्गापदस्यतीरेतात्पर्यग्रहस्थलेक्वचित् घोषपदस्यमत्स्यादौता॥
त्पर्यग्रहस्थले तेनैवरूपेणेति नचगङ्गायामित्यादौगङ्गातीरत्वेनबोधेजहत्स्वार्थत्वहानिरिति वाच्यम् तीरत्वेनलक्षणायामेवजह॥

एवंकाकेभ्यो दधिरक्ष्यतामित्यादौकाकपदस्य दध्युपघातकेलक्षणासर्वतोदधिरक्षायास्तात्पर्यविषयत्वात्
एवञ्छत्रिणोयान्तीत्यादौछत्रिपदस्यैकसार्थवाहित्वेलक्षणा इयमेवाजहत्स्वार्थल—क्षणेत्युच्यते एक
सार्थवाहित्वेनरूपेणछत्रितदन्ययोर्बोधात् यदिचान्वयानुपपत्तिर्लक्षणाबीजंस्यात्तदाक्वचिद्गङ्गापदस्य
तीरेक्वचिद्घोषपदस्यमत्स्यादौलक्षणेति नियमोनस्यात् इदन्तुबोध्यम् शक्यार्थसम्बन्धोयदितीरत्वेनरूपेणगृ
हीतस्तदातीरत्वेनतीरबोधः यदितुगङ्गातीरत्वेनरूपेणगृहीतस्तदातेनैवरूपेणस्मरणम् अतएवलक्ष्यता
वच्छेदकेनलक्षणातत्प्रकारकबोधस्यतत्रलक्षणां विनाप्युपपत्तेः परन्त्वेवङ्क्रमेणशक्यतावच्छेदकेपिशक्तिर्न
॥स्यात्॥

त्स्वार्थत्वस्यसर्वसम्मतत्वात् गङ्गातीरत्वेनभानेत्वजहत्स्वार्थैवलक्षणेति एवम्पूर्वोक्तस्थलेयष्टीः प्रवेशयमञ्चाः
क्रोशन्तीत्यादावपियष्टिधरत्वमञ्चस्थत्वादिनाबोधेऽजहत्स्वार्थैवलक्षणेतिध्येयम् अतएवेतितद्धर्मविशिष्टेलक्षणाग्रहस्यतेन
रूपेणोपस्थितिशाब्दबोधौप्रतिहेतुत्वादेव एवञ्चपदानुपस्थाप्यस्यापिलक्ष्यतावच्छेदकस्यशाब्देभानंसुकरम् अतिप्रसङ्गस्यत रम
द्धर्मविशिष्टेत्यादिनैववा रणादितिभावः इदमुपलक्षणम् गङ्गापदशक्यप्रवाहसम्बन्धस्यतीरत्वेवाधादित्यपिद्रष्टव्यम्॥ श्रीः॥ १८०

लक्षितलक्षणाया आधिक्यमाशङ्क्य जहत्स्वार्थायामन्तर्भावमाह यत्र त्विति परम्परासम्बन्धरूपेति स्ववाच्यरेफद्वयघटितपदवा। च्यत्वादिरूपा न च द्विरेफो यत्रेति व्युत्पत्त्या द्विरेफपदेन स्वशक्यरेफद्वयसम्बन्धिभ्रमरपदं लक्ष्यते भ्रमरपदेन च शक्त्या भ्रमर उपस्था। प्यत इत्येतावतैव सामञ्जस्येऽलं द्विरेफपदस्य भ्रमरे परम्परासम्बन्धरूपलक्षणया एवञ्च लक्षितेन लक्षणाज्ञापनमिति लक्षितलक्ष णाशब्दार्थोऽप्यस्त्विति वाच्यम् तथा सति द्विरेफमानयेत्यादितः कर्मत्वादेर्भ्रमरपदार्थान्वयानुपपत्तेः प्रत्ययानां प्रकृत्यर्थान्वितस्वा र्थबोधकत्वादिति ननु तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वाल्लाक्षणिकशाब्दबोधः कथं स्यादित्यत आह किन्त्विति पदान्तरम्

तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणोच्यते यथा द्विरेफादिपदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते तत्र लक्षितलक्षणा किन्तु लाक्षणिकं पदं तत्रानुभावकम् लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम् शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणात् वाक्ये तु शक्तेरभावात् शक्यसंबन्धरूपा लक्षणापि नास्ति ॥ ६ ॥ ७ ॥ ७ ॥ ६ ॥

समभिव्याहृतं शक्तम्पदम् शक्तिलक्षणेति अन्यतरसम्बन्धेन यदितरपदार्थस्तदन्वितो यः स्वार्थ इत्यर्थः कुमतिः पशुरित्यादि स्वे लाक्षणिकस्थले शाब्दबोधस्यानुभवसिद्धतया लाक्षणिकार्थस्याप्यानुभावकत्वमिति नव्याः ननु शक्यसम्बन्धो न लक्षणा तथा सति वाक्यस्य शक्त्यप्रसिद्ध्या तत्र लक्षणा न स्यादिति मीमांसकाक्षेपमिष्टापत्त्या निराकुरुते वाक्ये त्विति ननु गम्भीरायां नद्यां घोष इत्यादौ नदीपदस्य नदीतीरलक्षणास्वीकारे गम्भीरपदार्थस्यैकदेशान्वयापत्त्या पदलक्षणया असम्भवेन वाक्यलक्षणा वक्तव्येत्यत आह ॥ ६ ॥ ७ ॥ ६ ॥

काप्रु० यत्र गम्भीर इति क्वचिदिति चैत्रस्य गुरुकुलमित्यादाविव्यर्थः स्वीकृतत्वादिति पदभेदेन व्युत्पत्तिभेदात्मकतेन तथा व्युत्पत्त्यकल्पनादिति श० खं०
टि० तिभावः नदीपदस्येति नच विनिगमनाविरहेण गंभीरपदस्य लक्षणा नदीपदं तात्पर्यग्राहकमित्यस्यापि वक्तुं शक्यत्वात्कथं नदी
१८१ पदमात्रे लक्षणाभिधानमिति वाच्यम् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेरुत्तरपदस्यैव लक्षणायायुक्तत्वात् अत्र
मीमांसकमतानुयायिनः वाक्यलक्षणयैवोपपत्तौ गंभीरपदस्य तात्पर्यग्राहकत्वकल्पनमयुक्तम् नच वाक्ये शक्त्यभावात् शक्य
सम्बन्धरूपाल  क्षणापि न सम्भवतीति वाच्यम् स्वबोध्यसम्बन्धस्यैव लक्षणापदार्थत्वात् गङ्गायां घोष इत्यादौ गंगापदबोध्य
स्य प्रवाहस्य सम्बन्धस्तीर इति तत्र लक्षणा गम्भीरायां नद्यामिति वाक्यस्य बोध्या गम्भीराभिन्ना नदी तत्सम्बन्धस्तीर इति वाक्येऽपि ल

यत्र गम्भीरायां नद्यां घोष इत्युक्तम् तत्र नदीपदस्य नदीतीरे लक्षणा गंभीरपदार्थस्य नद्या सहाभेदान्वयः
क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात् यदि त्वेकदेशान्वयो न स्वीक्रियते तदा नदीपदस्य गम्भीर नदी
तीरे लक्षणा गम्भीरपदं तात्पर्यग्राहकत्वम् ॥ १ ॥ २ ॥ छ ॥ श्री १ ॥

१ लक्षणा एवं समासात्मके चित्रगुरिति वाक्येऽपि चि
त्रगुपदस्यावयवशक्त्या चित्रभिन्ना गौः स्वबोध्या स्वजन्यबोधविषयस्यैव बोध्यत्वात् न तत्सम्बन्धस्तस्य स्वामिनि सत्वादित्याहुस्तन्न स्व
बोध्यत्वं हि न स्वजन्यबोधविषयत्वम् गङ्गायां घोष इत्यादौ गङ्गायामित्यस्यापि लाक्षणिकत्वापत्तेस्तत्वेन बोधकत्वम् वाच्यम् नच
तावतापि निर्वाहः अपभ्रंशस्यापि लाक्षणिकत्वापत्तेः तत्तत्त्वावच्छिन्ना या शक्तता तदवच्छिन्नावबोधकता सैव निवेश्या तथा च कथं वा
क्यस्य लक्षकत्वम् वस्तुतस्तु स्वबोध्यत्वं यदि स्वजन्यशाब्दबोधविषयत्वं तदा गङ्गायां घोष इत्यादौ गङ्गापदे लक्षणानुपपत्तिः गङ्गा
पदेन तत्र प्रवाहशाब्दबोधाजननेन प्रवाहस्य गङ्गापदबोध्यत्वाभावात् किन्तु शक्त्या स्वजन्यज्ञानविषयत्वं तद्वाच्यम् नच शक्तो शाम०
त्यधिकम् समवायेन घटपदस्मारिताकाशस्यापि स्वबोध्यत्वापत्त्या तत्सम्बन्धज्ञानाद्धटपदेन पदादेः शाब्दबोधप्रसङ्गात् ॥ एव १८१
न्वयस्य सम्बन्ध ॥ १ ॥ छ ॥

न्यापेक्षयाशक्यास्वबोध्यसम्बन्धस्यगुरुत्वान्नतस्यलक्षणात्वमिति किञ्चगम्भीरायान्नद्यामितिसप्तम्यन्तस्यगम्भीरनदीतीरलक्ष
कत्वेघोषेतादृशनीराधेयत्वाबोधानुपपत्तिः आधेयत्वाबोधकपदाभावात् नामार्थयोर्भेदसम्बन्धेनान्वयस्याव्युत्पन्नतयाधेयता
सम्बन्धेनापिनीरस्यघोषादावन्वयासम्भवात् गम्भीरायान्नदीतिसप्तमीशून्यस्यतीरलक्षकत्वेसप्तम्यर्थाधेयत्वादेस्तादृशनीरा
देरनन्वयापत्तिः प्रत्ययानांप्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः गम्भीरायान्नदीतिभागस्यसप्तमीप्रकृतित्वाभावात् नच
गम्भीरायान्नद्यामितिसप्तम्यन्तस्यगम्भीरनदीतीरवृ.त्तित्वेलक्षणास्त्वितिशङ्क्यम् तादृशतीरवृत्तित्वस्यघोषादावन्वयानुप
पत्तेः नामार्थयोर्भेदसम्बन्धेनान्वयस्याव्युत्पन्नत्वात्सप्तम्यन्तभागस्यतादृशतीरवृत्तौलक्षणानुपगमात्तस्याभेदेनघोषादा

बहुव्रीहावप्येवं तत्रहिचित्रगुपदादौयद्येकदेशान्वयः स्वीक्रियतेतदागोपदस्यगोमत्तिलक्ष
णागविचित्राभेदान्वयः यदित्वेकदेशान्वयोनस्वीक्रियतेतदागोपदस्यचित्रगोमत्तिलक्षणाचित्रपद
न्तात्पर्यग्राहकम् एवमारूढवानरोवृक्षइत्यत्रवानरपदस्यवानरारोहणकर्मणिलक्षणा आरू
ढपदन्तात्पर्यग्राहकम्॥ एवमन्यत्रापिबोध्यम् तत्पुरुषेतुपूर्वपदेलक्षणा तथाहिराजपुरुष
इत्यादौराजपदार्थेनपुरुषपदार्थस्यसाक्षान्नान्वयः॥

वन्वयइत्यपिनाभेदेनान्वयबोधेसमानविभक्तिकत्वस्यतन्त्रत्वादित्यास्तांविस्तरः॥६॥ ॥६॥ एवम् अवयवलक्षणैवनतु
तद्वाक्येलक्षणेत्यर्थः गोपदस्येति प्रत्ययार्थान्वयानुरोधेनोत्तरपदलक्षणायायुक्तत्वादितिभावः गोमत्ति गोस्वामिनिनस्वी
क्रियतइति गोधर्मिकान्वयबोधे गोधर्मिकवृत्तिज्ञानस्यहेतुताया आवश्यकत्वात् अन्यथाचित्रव्रजोस्तीत्यादावपिव्रज
पदार्थस्यगोःस्थानरूपस्यैकदेशेगविचित्रान्वयप्रसङ्गात् यद्यपिघटशून्यमित्यादावेकदेशान्वयोदृश्यते तथापितादृश।
॥ तत्रथ्यान्वयोनस्वीक्रियतइतिहृदयम्॥

का॰सु॰ निपातातिरिक्तेति निपातमव्ययस्याप्युपलक्षकम् तेनचन्द्र इवेत्यादाविवार्थसादृश्ये चन्द्रस्यप्रतियोगितयान्वयोपपत्तिः अन्य शा॰खं॰
टि॰ था अव्ययनिपातातिरिक्तनामार्थयोरपिभेदेनान्वयबोधस्वीकारे तथान्वयबोधइति भेदेनान्वयबोधः स्यादित्यर्थः साक्षादेवप्र
१८२ त्ययार्थमद्वारीकृत्यैव भूतलेघटइत्यादावाधेयतासंसर्गेणापि घटभूतलयोरन्वयात्साक्षादित्यस्यापिव्युत्पत्तौ निवेशादिति भावः न
ञः नञर्थान्योन्याभावस्यस्मरणङ्क्लृप्तमिति तथाचात्रापिप्रत्ययार्थद्वारैवराजपुरुषयोरन्वयान्नोक्तव्युत्पत्तिविरोधइति भावः प
रेतुराजपुरुषइत्यादितत्पुरुषेनलक्षणाव्युत्पत्तिवैचित्र्येणस्वत्वादिसंसर्गेणैवराज्ञः पुरुषादावन्वयबोधस्वीकारात् अन्यथाद

निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात् अन्यथा राजापुरुषइत्यत्रापितथान्वयबो
धः स्यात् घटोनपटइत्यादौघटपटाभ्यांसाक्षादेवनञोऽन्वया न्निपातातिरिक्तेतिनीलोघटइत्यादौनामा
र्थयोरभेदसम्बन्धेनान्वयाद्भेदेनेति नचराजपुरुषइत्यादौलुप्तविभक्तेःस्मरणङ्क्लृप्तमितिवाच्यम् स्म
र्यमाणविभक्तेरपितत्रोबोधोदयात् तस्माद्राजपदाद्राजसम्बन्धिनिलक्षणात्तत्पुरुषेणसहाभेदान्व
यः द्वन्द्वेतु धवखदिरौछिन्धीत्यादौधवः खदिरश्चविभक्त्यर्थद्वित्वप्रकारेणबुध्यते तत्रनलक्षणात
चसाहित्येलक्षणेतिवाच्यम् साहित्यशून्ययोरपिद्वन्द्वदर्शनात् ॥ १ ॥ श्री ॥ १ ॥ १ ॥ श्री ॥ १ ॥ श्री ॥

शैनेराजमातङ्गास्तस्यैवामीतुरङ्गमाइत्यादौतच्छब्देनराज्ञःपरामर्शोनस्यात् तस्यैकदेशत्वादित्याहुः द्वन्द्वेतुइतरेतरद्वन्द्वेतुधवखदिरा
वित्यत्रधवत्वङ्खदिरत्वञ्चप्रत्येकत्वोद्देश्यतावच्छेदकम् सुपाउद्देश्यतावच्छेदकव्याप्यसङ्ख्याबोधकत्वस्याकाङ्क्षावित्यादिवा
कोप्रामाण्यापत्तिभियाऽक्तप्रत्वेन धवद्वयस्य खदिरद्वयस्यवाबोधापत्तेः परन्तुखदिरपदस्यधवखदिरसाहित्याश्रयेलक्षणोपरो
ध्यते एवञ्चोद्देश्यतावच्छेदकीभूततादृशसाहित्यव्याप्यत्वेन धवद्वयवृत्तिद्वित्वस्यनवाखदिरद्वयवृत्तिद्वित्वस्यापितुधवख एम॰
दिरोभयवृत्तिद्वित्वस्यैवतेनधवद्वयादेर्बोधइतिमीमांसकमतं साधु ते तत्साहित्येऽरुचि साहित्याश्रयेइत्यर्थः से॰ ॥ श्री ॥ ॥ १८२

सहवृत्तित्वरूपं साहित्यम् तस्य तु नैकक्रियान्वयित्वमिति विकल्प्याद्यं दूषयति साहित्यशून्ययोरपीति॥ ६॥ द्वितीयं शङ्कते नचै
केति अननुभवाच्चेति वस्तुगत्यैकक्रियान्वयित्वस्य धवखदिरयोस्सत्वेप्येकक्रियान्वयित्वस्य शाब्दबोधाभावादित्यर्थः इदमुपलक्षणम् चै
त्रमैत्रौ गच्छत इत्यादौ चैत्रादिपदस्य पदसाहित्यविशिष्टे लक्षणा तदा साहित्यस्याव्यासज्यवृत्तितया तदवच्छेदेनाव्यासज्यवृत्तेर्गम
नकर्तृत्वस्यान्वयासम्भव इत्यपि बोध्यम् ननु यदि द्वन्द्वे न लक्षणा तदा कर्मधारयाद्द्वन्द्वस्य को विशेष इत्यत आह किन्त्विति चार्थे द्व
न्द्व इत्यनुशासनं तत्र चार्थाश्चत्वारः समुच्चयान्वयेतरेतरयोगसमाहारभेदात् तत्र समुच्चयान्वाचययोस्सामर्थ्याभावान्न समासः
इतरेतरसमाहारयोस्सामर्थ्यसत्वात्तत्र समासः तत्र चार्थस्य भेदव्याप्यत्वात् भेदे द्वन्द्व इत्याशयः इत्यादावित्यादिपदेन प्रमाणप्र

नचैकक्रियान्वयित्वरूपसाहित्यमस्तीति वाच्यम् क्रियाभेदेपि धवखदिरौ छिन्धि पश्येत्यादौ तद्दर्श
नात् साहित्यस्याननुभवाच्च अत एव राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र लक्षणाभावात् द्व
न्द्व आश्रीयते तस्मात्साहित्यं नार्थः। किन्तु वास्तवभेदो यत्र तत्र द्वन्द्वः नच नीलघटयोरभेद इत्यादौ कथ
मिति वाच्यम् तत्र नीलपदस्य नीलत्वे घटपदस्य घटत्वे लक्षणा अभेद इत्यस्य चाश्रयाभेद इत्यर्थात्॥ ६॥

मेयेत्यादिसूत्रपरिग्रहः कथमिति यदि समासघटकपदार्थयोर्यत्र भेदस्तत्रैव द्वन्द्वस्तदा नीलघटयोर्भेदाभावात्कथं द्वन्द्वः एवम्प्र
माणप्रमेयेत्यादिसूत्रे आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति सूत्रोपात्तद्वादशवि
धप्रमेयान्तर्गतमनोबुद्धीन्द्रियाणाम्प्रमाणत्वेन प्रमाणप्रमेययोर्भेदाभावात्कथं द्वन्द्व इत्यर्थः लक्षणेति तथा च तयोर्भेदसत्वा
द्द्वन्द्व इति भावः नन्वभेद इत्यसङ्गतं नीलत्वघटत्वयोरभेदाभावादत आह अभेद इत्यस्येति केचित्तु पदार्थत्वम्पदजन्यप्रती
तिविषयत्वम् तथा च कश्चित्पदार्थभेदात्कश्चित्पदार्थतावच्छेदकभेदाद्द्वन्द्वः प्रकृते च नीलत्वघटत्वयोः पदार्थतावच्छेद
कयोर्भेदाद्द्वन्द्वः अस्तु वा पदार्थतावच्छेदकभेद एव द्वन्द्वः नचैवं घटा इत्यादौ द्वन्द्वस्याप्रसक्तत्वेन नतद्॥ ६॥ श्लो ६॥ ६॥

का॰मु॰ पवादकः सरूपैकशेषोनस्यादितिवाच्यम् इष्टापत्तेः तत्र घटपदोपस्थापितेषुबहुत्वा —न्वयादेवबहुघटबोधसम्भवात् सकृदुच्च श॰खं॰
टि॰ रितइत्यादिव्युत्पत्तौमानाभावात्सरूपैकशेषविधेर्हरीइत्यादौसार्थकत्वात् अस्तुवासकृदित्यादिव्युत्पत्तिः परन्तुसकृदित्यर्थपदा
१८३ र्थैकदेशेहत्तौविशेषणम् वस्तुतोबोधविशेषणमेवतदितिनदोषइत्याहुः॥ ७॥ समाहारइति अहिनकुलमित्यादौ अहिनकुला
योः समाहारइतिप्रतीतेरनुभवसिद्धत्वमित्यर्थः वस्तुतस्तत्राहिनकुलमात्रप्रतीतेर्नोत्तरपदेसमाहारलक्षणानवाशक्तिरित्यभिप्रे
त्योक्तम् यदीति पूर्वपदमिति प्रत्ययानामिति व्युत्पत्तेर्विनिगमकत्वादितिभावः कथमिति कथंसमाहारबोधइत्यर्थः तत्रहेतुमाहवाद
नासम्भवादिति अभिघातारव्यसंयोगावच्छिन्नक्रियायाएववादनपदार्थतयाधात्वर्थतावच्छेदकीभूततादृशाभिघातारव्यसंयोगस्य

समाहारद्वन्द्वेतुयदिसमाहारोप्यनुभूयतइत्युच्यते तदाअहिनकुलमित्यादौपरपदे अहिनकुलसमाहा
रेलक्षणापूर्वपदन्तुतात्पर्यग्राहकम् नचभेरीमृदङ्गम्वादयेत्यत्रकथंसमाहारस्यान्वयः तस्यापेक्षावु
द्धिविशेषरूपस्यवादनासम्भवादितिवाच्यम् परम्परासम्बन्धेनतदन्वयात् एवम्पञ्चमूलीत्यादावपि॥
परेतुत्वहिनकुलमित्यादावहिर्नकुलश्चबुध्यते प्रत्येकमेकत्वान्वयः समाहारसञ्ज्ञाचयत्रैकत्वन्नपुंस
कत्वञ्चद्वन्द्वश्चप्राणितूर्येत्यादिसूत्रेणोक्तम् तत्रैव॥ श्रो॰ १॥ श्रो॰ १॥ १॥ ७॥ ७॥ ७॥ ७॥ ७॥ ७॥

समाहारेऽसम्भवेनवादनकर्मत्वासम्भवादित्यर्थः परम्परासम्बन्धेनस्वाश्रयवृत्तित्वरूपेणतदन्वयात् वादनकर्मत्वान्वयात् एवमितिउ
त्तरपदेसमाहारलक्षणेत्यर्थः तन्यमतमाह परेत्विति बुध्यतइत्यस्यनतुसमाहारोपीतिशेषः ननुयदिसमाहारोनबुध्यते तदैकत्वस्य
कुत्रान्वयः समाह्रियमाणयोरेकत्वाभावादतआह प्रत्येकमिति तत्रैकवचनंसाधुत्वार्थमित्यपिवदन्ति ननुपाणिपादमित्यादेःसमु राम
दायस्यसमाहारबोधकत्वाभावेकथन्तस्यसमाहारसञ्ज्ञेत्यतआह समाहारसञ्ज्ञेति तत्रैवेति तथाचपारिभाषिकोवसान्वयौ त्वे। १८३
ऽन्यत्रातिप्रसङ्गादितिभावः ॥

अन्यत्रेति समाहारातिरिक्तद्वन्द्व इत्यर्थः तथा च नित्यैकवचनक्लीबलिङ्गत्वादिप्रसंस्कारार्थत्वान्नतस्यावैयर्थ्यमिति भावः पितरौ श्वशुरावित्यादाविति चैत्रस्य पितरावित्यादौ विरूपैकशेषस्थल इत्यर्थः लक्षणेति एकस्य चैत्रादेः पितृद्वयासम्भवेन तत्र विरूपैकशेषं विना गत्यभावादिति भावः विरूपैकशेषत्वेपि तत्र तु प्रमात्रादिशब्दस्मरणेनैव शाब्दबोधात् न लक्षणेत्यन्ये एवमन्यत्रापीति पुमान् स्त्रियेत्यनेन यत्रैकशेषस्तत्र दम्पती पुजाप्रकरणोब्राह्मणावानयेत्यादौ शिवौ नमस्कुर्यादित्यादौ भ्रातरौ पुत्रावित्यत्रापि प्रमाणान्तरेण स्त्रीपरत्वज्ञाने भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति विरूपैकशेषाज्ञाने तु पदे भ्रातृस्वस्रोः पुत्रपदे पुत्रदुहित्रोर्लक्षणेत्यर्थः नत

अन्यत्रैकवचनमसाधित्याहुः पितरौ श्वशुरावित्यादौ पितृपदे जनकदम्पत्योः लक्षणा श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा एवमन्यत्रापि घटा इत्यादौ तु न लक्षणा घटत्वेन रूपेण नाना घटोपस्थितिसम्भवात् कर्मधारयस्थले तु नीलोत्पलमित्यादौ अभेदसम्बन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारस्तत्र न लक्षणा अत एव निषादस्थपतिं याजयेदित्यत्र न तत्पुरुषः लक्षणापत्तेः किन्तु कर्मधारयः लक्षणाभावात् न च निषादस्य सङ्करजातिविशेषस्य वेदानधिकाराद्याजनासम्भव इति वाच्यम् निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनीयत्वात् लाघवेन मुख्यार्थान्वये तदन्वयानुपपत्त्या कल्पनीयायाः फलमुखगौरवत्वात्॥ ७०॥ ३॥

१ लक्षणेति बहुत्वान्वययोग्यानेकोपस्थितेः शक्तित एव सम्भवादिति भावः न तत्पुरुष इति स्वीक्रियत इति शेषः वेदानधिकारादिति स्त्रीशूद्रौ नाधीयातामित्यनेन निषेधादिति भावः याजनासम्भव इति अध्ययनविधिसिद्धज्ञानासंभवादिति भावः तत एवेति श्रुतिबोधितयाजनानुपपत्त्यैवेत्यर्थः ननु निषादस्य विद्याकल्पने गौरवमत आह लाघवेनेति ननु स्त्रीशूद्रौ नाधीयातामिति श्रुतेरप्रामाण्यापत्तिभिया लाघवमकिञ्चित्करम् शूद्रपदस्य निषादेतरशूद्रपरत्वे निषादस्य वेदान्तराध्ययनप्रसङ्गः अध्ययनपदस्य यागोपयुक्ताध्ययनेतराध्ययनपरत्वे च शूद्रान्तरस्यापि यागोपयुक्ताध्ययनप्रसङ्ग इति चेन्न विशेषतः प्राप्ताध्ययनेतराध्ययनपरत्वाद्ध्ययनपदस्य तेन निषादस्य यागोपयुक्ताध्ययनेतराध्ययननिषेधः शूद्रान्तरस्य त्वध्ययनमात्रनिषेधः सिध्यतीति॥

का॰सु॰ अदोषत्वादिति ननुलक्षणाकल्पनेपिनदोषः शक्यसम्बन्धरूपलक्षणायाः क्लृप्तत्वात् नचशाब्दबोधप्रतिलक्षणाज्ञानस्यहेतुत्वक॰ शा॰खं॰
टि॰ ल्पनमधिकमितिवाच्यम् निषादस्थपतिरितिश्रुत्यन्यानिषादसम्बन्ध्यभिन्नस्थपत्यनुभवस्यलौकिकवाक्ये क्लृप्तत्वात्तदनुरोधे
१८५ नलक्षणाज्ञानहेतुत्वस्यसर्वसिद्धत्वेनवेदधिकस्याकल्पनादितिचेन्न शक्यसम्बन्धरूपलक्षणाज्ञानस्यशक्तिज्ञानंविनाऽसम्भ
वेनशक्तिज्ञानस्यतत्रोभयसिद्धत्वेपाभवन्मतेवैदिकवाक्यजन्यशाब्दबोधात्पूर्वंलक्षणानभ्यक्तिकल्पनागौरवस्यवज्रलेपत्वा
दिति उपकुम्भमर्द्धपिप्पलीत्यादाविति अत्रच कुम्भस्यसमीपमित्यस्वपदविग्रहः अव्ययीभावस्यनित्यसमासत्वात् पूर्वपदार्थप्र
धानतयेति कुम्भपदलक्षितस्यकुम्भसम्बन्धिन उपपदार्थेसमीपेऽभेदान्वयात् कुम्भसम्बन्ध्यभिन्नंसमीपमित्युपपदार्थविशेष्य

अदोषत्वादिति उपकुम्भमर्द्धपिप्पलीत्यादौपरपदेतत्सम्बन्धिनिलक्षणा पूर्वपदार्थप्रधान
तयाचान्वयबोधइति इत्थञ्चसमासेनक्वापिशक्तिः परशक्त्यैवनिर्वाहादिति ॥ ३॥ श्रीः॥

कोऽन्वयबोधइत्यर्थः केचित्तुउपपदार्थःसामीप्यन्तुसमीपम् समीपेउपपदलक्षणास्वीकारेतुपरद्वयलक्षणापेक्षयाकुम्भ
पदस्यैवकुम्भसमीपेलक्षणाउपपदस्यान्यथैवाहकंकुम्भसमीपमितिचान्वयबोधइत्याहुः अत्रयद्यप्यर्द्धपिप्पलीतितत्पुरुषे
शक्तिनिराकरणस्युनरुक्तम्पूर्वन्तत्पुरुषेतन्निरासात्तथापि पूर्वमूत्तरपदार्थप्रधानराजपुरुषादौतन्निराकरणम्पूर्वंपदलक्षणयाइ
हचपूर्वपदार्थप्रधानेऽर्धपिप्पलीत्यादि तत्पुरुषेउत्तरपदलक्षणयातन्निराकरणमितिभेदादपौनरुक्त्यमितिध्येयम् वैया राम॰
करणमतन्दूषयति इत्थञ्चेति परशक्त्यैवेति॥समासघटकीभूतपदशक्तिलक्षणाभ्यामित्यर्थः॥ श्रीः॥ छ॥ ३॥ छ॥ छ॥ १८४

आसत्तिर्योग्यताकाङ्क्षेति मूलादासत्तेः स्वरूपसत्या एव कारणत्वं लभ्यते ननु योग्यताज्ञानादिवदासत्तिज्ञानस्य ज्ञानपदस्य समासघटकत्वेन समासाघटकासत्तिपदार्थेनान्वयात् स्वरूपसत्याश्चासत्तेः कारणत्वन्न सम्भवति गिरिर्भुक्तमित्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमेण शाब्दबोधोदये न व्यभिचारादतो मूलस्थमासत्तिपदमासत्तिज्ञानपरतया व्याचष्टे      आसत्तिज्ञानमिति आसत्तियोग्यतेति विसर्गशून्यपाठस्तु ऋजुरेव ८२ ननु सन्निधानन्तु पदस्यासत्तिरुच्यते इति मूलोक्तस्यासत्तिलक्षणस्य गिरिर्भुक्तमित्यत्राति व्याप्तिः तत्रापि गिरिपदभुक्तपदयोरव्यवधानसत्वादतो व्याचष्टे यत्पदार्थेति अपेक्षितस्तात्पर्यविषयः तयोरिति तयोः पदयोरित्यर्थः तादृशपदयोरव्यवधानमासत्तिस्तदुपस्थितिः कारणमित्यर्थः तथा च गिरिपदार्थभुक्तपदार्थयोरन्वयो न तात्पर्यविषयोऽपि तु

आसत्तिरिति आसत्तिज्ञानं योग्यताज्ञानम् आकाङ्क्षाज्ञानं तात्पर्यज्ञानं शाब्दबोधे कारणम् ॥ ८२ ॥ तत्रासत्तिपदार्थमाह सन्निधानमिति यत्पदार्थेन सह यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः शाब्दबोधे कार

आसत्तिर्योग्यताकाङ्क्षा तात्पर्यज्ञानमिष्यते ८२ कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते ॥६॥६॥

णम् तेन गिरिर्भुक्तं वह्निमान्देवदत्तेनेत्यादौ न शाब्दबोधः नीलो घटो द्रव्यम्पट इत्यत्र नासत्तिर्भ्रमाच्छाब्दबोधः ॥७॥६॥

गिरिपदार्थाग्निमत्पदार्थयोरेवेति तयोरव्यवधानाभावान्नातिव्याप्तिरिति भावः तेनैतादृशपदान्यपदगर्भासत्तिनिर्वचनेन ननु नीलो घटो द्रव्यम्पट इत्यत्र नीलपदार्थपटपदार्थयोर्यत्रान्वयो वस्तुतात्पर्यविषयो न तु नीलपदार्थघटपदार्थयोस्तत्र नीलपदघटपदयोरासत्तिर्न स्यात् तत्र तदर्थयोरन्वयस्य तात्पर्यविषयत्वाभावात् अतस्तत्रेष्टापत्तिमाह नीलो घट इत्यादिना तर्हि तत्र नीलो घट इति कथं शाब्दबोध इत्यत आह भ्रमाच्छाब्दबोध इति तथा च भ्रमाच्छाब्दबोधमात्रम् ननु तत्रासत्तिरिति भावः ननु तत्र यथासत्तिभ्रमस्तथा शाब्दबोधोऽपि भ्रमात्मकः स्यात् न चेष्टापत्तिः घटे नीलस्य सत्वेन विषयबाधाभावादासत्तिभ्रमाच्छाब्दप्रमाङ्गीकारे त्वासत्तिभ्रमाच्छाब्दभ्रम इति प्राचीन

का॰मु॰ आसत्तिभ्रमेणेति नक्षतिरिति आसत्तिभ्रमस्य न शाब्दभ्रमप्रयोजकत्वं किन्तु योग्यताभ्रमस्यासत्तिभ्रमाच्छाब्दभ्रम इति प्राचीनगाथा
टि॰ तु निर्युक्तिकत्वादश्रद्धेयेति भावः क्वचित्पुस्तके न शाब्दबोध इत्यनन्तरं नीलो घट इत्यतः पूर्वं तात्पर्यगर्भासत्तिरिति पाठः स च यत इत्यादि श॰खं॰
१८५ पूरणेन यतस्तात्पर्यगर्भा तात्पर्यविषयीभूतान्वयबोधविषयीभूतार्थबोधकपदान्वयरूपा पूर्वं निरुक्तासत्तिरतो न शाब्दबोध इत्यर्थकतया
व्याख्येयः पाठान्तरं त्वाल्पनिकमिति न चोक्ताया आसत्तेः श्लोकेऽभावाद्विशेषदर्शने पदाव्यवधानभ्रमस्यापि तत्राभावाच्छाब्दबोधो
न स्यादिति वाच्यम् श्लोकादौ योजनावाक्यादेवान्वयबोधोपगमात् नव्यास्तु उक्तासत्तिर्मौनिश्लोके न सम्भवति तत्र पदाभावेन पदाव्यवधा
नासम्भवात् उक्तासत्तिज्ञानविलम्बेन शाब्दबोधविलम्बाभावाच्च किन्त्वव्यवधानेन वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिस्तत्राप्यव्य-

आसत्ति भ्रमेण शाब्दभ्रमाभावेपि न क्षतिः ननु यत्र छत्री कुण्डली वासस्वी देवदत्त इत्याद्युक्तं तत्रोत्तरपदस्मरणेन पूर्वपदस्मरणनाशाद्व्यवधानेन तदुत्तरपदस्मरणासम्भव इति चेन्न प्रत्येकपदानुभवजन्यसंस्कारैश्चरमस्य तावत्पदविषयकस्मरणस्याव्यवधानेनोपपत्तेः नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात्कथम्॥ श्लो॰ ८ ॥ ० ॥ ८

वधानांशो न निवेश्यते शाब्दबोधम्प्रति पदजन्यपदार्थोपस्थितेः कारणतयाऽव्यवधानेनैव तत्सम्भवात् तस्माद्वृत्त्या पदजन्यप
दार्थोपस्थितिरासत्तिरित्याहुः नन्वव्यवधानेन पदोपस्थितिः शाब्दबोधे कारणमित्ययुक्तम् अनेकपदघटितवाक्यस्थलेऽव्यवधा
नेन पदोपस्थित्यसम्भवादित्याशङ्कते नन्विति अव्यवधानेनोपपत्तेरिति अभेदेऽप्यव्यवधानसंभवादिति भावः ननु तद्विशेष्यकतत्प्र
कारकस्मृतिम्प्रति तद्विशेष्यकतत्प्रकारकसंस्कारकत्वेन जनकत्वात्कथम्प्रत्येकपदसंस्कारैर्नानापदविशेष्यकं स्मरणं भिन्नविष राम॰
यकत्वादत आह नानासन्निकर्षैरिति संभवादिति तथा च यथा घटचक्षुःसंयोगस्य पटप्रत्यक्षांशे कारणत्वाभावेपि घटचक्षुःसंयो १८५
गपटचक्षुःसंयोगाभ्यामेकम्प्रत्यक्षन्तथा तत्तत्पदगोचरसंस्कारस्य भिन्नविषयकत्वांशेऽजनकत्वेपि तत्तत्संस्कारजन्यं स्मरणमेक
मेव तथा च न बाधकाभावादिति भावः॥

अन्यथा नानासंस्काराणामेकस्मरणजनकत्वाभावात् नानावर्णैरिति नानावर्णानां प्रत्येकसंस्कारैरित्यर्थः एकस्मरणं नानावर्णगोचरमेकस्मरणम् परस्मरणवदाशुतरविनाशिनीनाङ्क्रमिकाणाम्पदजन्यपदार्थोपस्थितीनामपि मेलनासम्भवात्सर्वत्र शाब्दबोधे पदजन्यपदार्थोपस्थितिः समूहालम्बनात्मिकैव कारणम् एवञ्च सर्वत्र युगपदेव सकलपदार्थानां विशेष्यविशेषणमिति न्यायेनैव शाब्दबोधो न तु विशिष्टवैशिष्ट्यमिति रीत्या तज्जनकविशेषणतावच्छेदकप्रकारकनिर्णयस्य पूर्वमभावादिति प्राचीनमतं दर्शयति परन्त्वित्यादिना एकदैवेति ननु घटमानयेत्यादौ प्रथमं घटीयाकर्मतेत्येव बोधस्तदनन्तरं घटकर्मकानयनेत्यादिबोध इत्यादिक्रमे तात्पर्यः वृद्धायुवानस्त्यस्यन्तदाहुरित्यादिः अत्र वृद्धयुवशिशुभिः कपोतैश्चिरतरसन्निहितकालोक्तानाम्पदार्थानां साम्यम्बोध्य

अन्यथा नानावर्णैरेकपदस्मरणम्परन्तु तावत्पदार्थानां स्मरणादेकदैव खलेकपोतन्यायेन तावत्पदार्थानाम-
ङ्कियाकर्मभावेनान्वयरूपः शाब्दबोधो भवतीति केचित् वृद्धायुवानः शिशवः कपोताः खले यथामी युगपत्प-
तन्ति तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति परे तु यद्यदाकाङ्क्षितं योग्यं सन्निधानम्प्रपद्यते ते-
न तेनान्वितः स्वार्थः पदैरेवानुगम्यते तथा च खण्डवाक्यार्थबोधानन्तरम्॥ ७॥ ७॥ ७१॥ ७॥ ॥ १॥

म् केचिदित्यनेन सूचितमस्वरसम्प्रकाशयन् मतान्तरमाह परे त्विति यद्यदिति स्वार्थाकाङ्क्षितं स्वार्थे योग्यं यद्यत्सन्निधानं प्रपद्यते स्वार्थोपस्थितिविषयो भवति तेन तेनैवान्वितः स्वार्थः पदैः प्रथममनुभाव्यते ऽनन्तरञ्च महावाक्यार्थबोध इत्यर्थः एवञ्च पूर्वोक्तं समूहालम्बनात्मकम्पदार्थस्मरणं विनापि निर्वाह इति भावः न च घटमानयेत्यादौ चरमपदार्थस्मृतिकाले घटादिपदार्थस्मृतेर्नाशात्समूहालम्बनस्मृतिरावश्यकीति वाच्यम् तत्र घटस्मरणनाशेऽपि घटीयाकर्मतेत्याकारकावान्तरबोधसत्त्वेऽपि पदजन्यपदार्थोपस्थितित्वेन तेनैव घटकर्मकानयनेत्यादिमहावाक्यार्थबोधनिर्वाहात्॥ न हि पदजन्यपदार्थस्मृतित्वेन शाब्दबोधम्प्रति हेतुत्वमपि तु श्रा॥ श्री

संघटकार्थान्वयबोधजनकज्ञानविषययोग्यताकम्॥ टि॰ ५॥ संघटकार्थान्वयबोधप्रयोजकाकांक्षावत्वेनयद्दीनम्॥ टि॰॥ ५॥ टि॰॥

मुक्तावल्यां इत्याहुरित्यस्याग्रे इदन्तु बोध्यमित्यतः प्राक्॥ एतेन तावद्वर्णाभिव्यंग्यः पदस्फोटोऽपि निरस्तः तत्तद्वर्णसंस्कार सहितचरमवर्णोपलम्भेन तत्तदर्थं जकेनैवोपपत्ते रिति पाठोऽपि कुत्रचित्प्राचीनपुस्तके दृश्यते॥ टिप्पन॰।मु॰ १॥



ब्दबोधसाधारणतादृशोपस्थितित्वेनैवेति एवञ्चैतन्मते खण्डवाक्यार्थबोधपूर्वक एव महावाक्यार्थबोधः अत एव सर्वत्र खण्डवाक्यार्थबोधरूपस्य विशेषणतावच्छेदकप्रकारकनिश्चयस्य पूर्वसत्त्वाद्विशिष्टवैशिष्ट्यमितिरीत्यैव महावाक्यार्थबोध उत्पद्यत इति॥ यत्र खण्डवाक्यार्थबोधनाशोत्तरं महावाक्यार्थबोधस्तत्रापि खण्डवाक्यार्थसमानाकारं स्मरणं कल्पयित्वा विशिष्टवैशिष्ट्यबोधनिर्वाह इत्याह तथैव पदार्थस्मृत्येति॥ अत्रेदं बोध्यम् यत्र खण्डवाक्यार्थबोधानन्तरं चरमपदस्मृतिस्तदुत्तरं तदर्थस्मृतिस्तत्र खण्डवाक्यार्थानुभवस्य नाशात्समूहालम्बनस्मरणमावश्यकम् एवञ्च यत्र न विशिष्टवैशिष्ट्यबोधसामग्री तत्र विशेष्ये विशेषणमितिरीत्यैव बोधः यत्र तत्सामग्री तत्र विशिष्टस्य वैशिष्ट्यमितिरीत्येत्यन्यत्र विस्तरः अवान्तरवाक्यार्थबोधपूर्वकमहावाक्यार्थबोधेऽवान्तरवाक्यार्थस्मरणमेव कारणं न तु समूहालम्बनस्मृतिः नहि शाब्दबोधे पदजन्यपदार्थोपस्थितिः कारणं लाघवेन पदार्थोपस्थि



तथैव पदार्थस्मृत्या महावाक्यार्थबोधमित्याहुः इदन्तु बोध्यम् यत्र द्वारमित्युक्तं तत्र पिधेहीत्यादिपदस्यज्ञानादेव बोधः ननु पिधानादिरूपार्थज्ञानात् पदजन्यतत्पदार्थोपस्थितेस्तत्र शाब्दबोधे हेतुत्वात् किञ्च क्रियाकर्मपदानां तेन तेनैव सह रूपेणाकाङ्क्षितत्वात् तेन क्रियापदं विना कथं बोधः स्यात्॥ ८॥०॥

तेरेव हेतुत्वात् अत एव द्वारमित्यादौ न पिधेहीति पदाध्याहारः किन्त्वर्थाध्याहार एवेति प्राभाकरमतं दूषयति इदन्तु बोध्यमित्यादिना पदजन्येति पदार्थोपस्थितिमात्रस्य हेतुत्वे प्रत्यक्षादिनोपस्थितस्यापि शाब्दबोधापत्तिरिति भावः ननु प्रत्यक्षोपस्थितिकलापादेः शाब्दबोधाभावस्तात्पर्याभावात्तत्सत्त्वे त्विष्टापत्तिरत आह किञ्चेति तेनैव सहेति द्वारङ्कर्मत्वम्पिधानङ्कृतिरिति वाक्यात् द्वारकर्मकपिधानान्वयबोधानुदयात् द्वारम्पिधेहीत्यानुपूर्वीरूपाकाङ्क्षाज्ञानहेतुत्वस्यावश्यं वाच्यतया। एम
तादृशाकाङ्क्षाज्ञानार्थम्पिधेहीति पदाध्याहार आवश्यक इति भावः ननु द्वारकर्मकपिधानानुकूलकृतिबोधे आनुपूर्वीविशेषस्य ह १८६

पिधेहीत्यानुपूर्व्यव्यवहितोत्तरक्षणावच्छिन्नद्वारनिष्ठकर्मतानिरूपकपिधानानुकूलकृतिमानिति शाब्दत्वावच्छिन्नंप्रति पिधेहीत्यानुपूर्वीकारणं
द्वारमित्यानुपूर्व्यव्यवहितोत्तरक्षणावच्छिन्नद्वारनिष्ठकर्मतानिरूपकपिधानानुकूलकृतिमानिति शाब्दत्वावच्छिन्नंप्रति द्वारमित्यानुपूर्वीकरणम् । टि॰ टि॰ पंच॰

रपरोत्तराम् पदरूपस्य पिधेहीत्याकारकस्यवाज्ञानङ्कारणमतोनद्वारङ्कर्मत्वम्पिधानङ्कृतिरित्यस्माच्छाब्दबोधापत्तिः तथाच द्वारमित्यु
क्तेपिधेहीति पदस्यताध्याहारः नचतादृशानुपूर्व्योः परस्परंव्यभिचारः अव्यवहितोत्तरत्वंसकार्यतावच्छेदके निवेशात् नचयत्र द्वारम्पि
धानङ्कृतिरिति द्वारंकर्मत्वम्पिधेहीति चोक्तन्तत्रापि द्वारकर्मकपिधानानुकूलकृतेः शाब्दबोधापत्तिरितिवाच्यम् इष्टापत्तेः प्रत्यक्षानुमा
नादिनोपस्थितस्येवनिराकाङ्क्षपदेनोपस्थितस्यापिबोधेबाधकाभावादतआह तथापुष्पेभ्यइतिस्पृहयतीत्यादौत्यादिनाकुध्यतिद्रुह्यति
असूयति ईर्ष्यतीत्यादिपरिग्रहः चतुर्थ्यनुपपत्तेरिति कर्मत्वार्थकचतुर्थ्याः स्पृहयति योगएवानुशासनेनबोधनादितिभावः अत्रेदं ।

तथाचपुष्पेभ्यइत्यादौस्पृहयतीत्यादिपदाध्याहारं विना चतुर्थ्यनुपपत्तेः तस्मात् पदाध्याहारआवश्यकः योग्यतांल
क्षयति पदार्थइति एकपदार्थेऽपरपदार्थसम्बन्धोयोग्यतेत्यर्थः तज्ज्ञानाभावाच्च वह्निनासिञ्चतीत्यादौन शाब्दबोधः न

पदार्थेतत्रतद्वत्तायोग्यतापरिकीर्तिता ॥

न्वेतस्यायोग्यतायाज्ञानंशाब्दबोधात्प्राक्सर्वत्रनसम्भवति वाक्यार्थस्यापूर्वत्वादितिचेन्नतत्पदार्थस्मरणेसति क्वचि
त्संशयरूपस्यक्वचिन्निश्चयरूपस्यापियोग्यताज्ञानस्यसम्भवात् ॥ ८३ ॥

१ चिन्त्यम् अस्त्वेवंरीत्याक्वचित्पदाध्याहारस्ताव
तापितज्जन्योपस्थितित्वेनशाब्दबोधहेतुत्वम्लाघवेनपदार्थोपस्थितित्वस्यैवजनकतावच्छेदकत्वात् तथाच द्वारमित्यादौकथञ्चिदु
पस्थितस्यपिधानादेर्बोधेबाधकाभावादर्थाध्याहारपक्षएवोचितइतिमूले पदार्थेतत्रतद्वत्तायोग्यतापरिकीर्तितेत्यनेनतत्पदार्थेतत्पदा
र्थवत्त्वंयोग्यतेत्युक्तन्तच्चायुक्तम् अनुपयुक्तञ्चस्वस्मिन्स्वाधिकरणकत्वाभावात्तज्ज्ञानस्यशाब्दबोधेहेतुत्वाभावाच्चेत्यतः प्रथमन्तत्पदमेक
पदार्थपरम् द्वितीयञ्च तत्पदमपरपदार्थपरमित्यभिप्रायेणव्याचष्टे एकपदार्थइति योग्यताज्ञानस्य शाब्दबोधहेतुत्वेमानमाह त
ज्ज्ञानाभावाच्चेति अपूर्वत्वादि॰ ति सर्वत्रशाब्दबोधात्पूर्वमनिश्चितत्वादित्यर्थः क्वचित्संशयस्येति संशयनिश्चयसाधा ॥ ८३ ॥ ८४ ॥ ८५ ॥

का० मु० रणयोग्यताज्ञानत्वेन हेतुत्वादिति भावः अत एव निश्चयमपि दर्शयति क्वचिदिति भूतले घट इति प्रात्यक्षिकनिश्चयोत्तरभाविनि शाब्दबोध
टि० इत्यर्थः नव्यास्त्विति ननु अयोग्यतानिश्चयस्य प्रतिबन्धकत्वेन तदभावत्वेन हेतुत्वम्वाच्यम् तथा च तदपेक्षया लाघवेन योग्यताज्ञानहे
१८७ तुत्वस्यैवोचितत्वमित्यत आह तदभावनिश्चयस्येति बाधनिश्चयकालेपि लौकिकसन्निकर्षजन्यतद्विशिष्टबुद्धेरुदयादत आह लौकि
कसन्निकर्षाजन्येति शङ्खो न पीत इति निश्चयोपि पित्तादिदोषवशात् पीतः शङ्ख इति प्रत्यक्षोदयात् दोषविशेषाजन्येत्युक्तम् शुक्तो
नेदं रजतमिति ज्ञाने तत्त्वदोषजन्यस्येदं रजतमिति भ्रमस्य वारणाय विशेषेति पित्तमाण्डूकवसाञ्जनादिदोषेत्यर्थः तज्ज्ञानमात्रे तद्वि
शिष्टबुद्धिमात्रे सिद्धमिति तथा चायोग्यताज्ञानस्य शाब्दबोधम्प्रति प्रतिबन्धकत्वस्य क्लृप्तत्वात्तेनैव निर्वाहे योग्यताज्ञानस्यातिरिक्तप्रति
बन्धकत्वं न कल्प्यत इति भावः ननु यत्र नायोग्यताज्ञानं वा योग्यताज्ञानं तत्र शाब्दबोधापत्तिरित्यत आह योग्यताज्ञानविलम्बाच्चेति॥

नव्यास्तु योग्यताज्ञानं न शाब्दबोधहेतुः वह्निना सिञ्चतीत्यादौ सेके वह्निकरणकत्वाभावरूपायोग्यतानिश्च
येन प्रतिबन्धान्न शाब्दबोधः तदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे प्रतिब
न्धकत्वात् शाब्दबोधम्प्रत्यपि प्रतिबन्धकत्वं सिद्धम् योग्यताज्ञानविलम्बाच्च शाब्दबोधविलम्बोऽसिद्ध इत्याहुः
॥८३॥

तथा चेष्टापत्तिरिति भावः आहुरित्यस्वरसः तद्बीजन्तु यद्विषयकमनुमित्यादिकं न जातं शाब्दबोध एव जातः तद्धि शिष्टबुद्धौ
वयोग्यताज्ञानाभावत्वापेक्षया लाघवेन योग्यताज्ञानत्वेनैव हेतुतासिद्धिः एवं न्वयद्विशेषयोरिति व्याप्तिबलाच्छाब्दे सामान्ये योग्यता
ज्ञानत्वेन हेतुतासिद्धिर्दुर्वारेति एवमिच्छाया उत्तेजकत्वानुरोधेनायोग्यताज्ञानप्रतिबन्धकत्वस्य विशेषे पर्यवसानात् क्लृप्तप्रतिबध्यता
वच्छेदकस्यानुमितित्वादेः शाब्दबोधसाधारण्याभावात् शाब्दबोधे त्वयोग्यत्वनिश्चयस्यातिरिक्तप्रतिबन्धकताकल्पने गौरवात् लाघवेन
योग्यताज्ञानस्यैव हेतुत्वं युक्तमिति॥ न च योग्यताज्ञानस्य हेतुत्वेऽप्रामाण्यनिश्चयाभावस्तत्र विशेषणं तदपेक्षयाऽप्रामाण्यज्ञानाभावविशि ष्टाम
ष्टायोग्यतानिश्चयाभावस्य हेतुत्वे लाघवमिति वाच्यम् योग्यताज्ञानस्य हेतुत्वेन तदभाववत्तितत्त्र॥ ६॥ ७॥ ८॥ ९॥ श्री॥ ॥ १८७

कारकमित्येकविधाप्रामाण्यनिश्चयाभावनिवेशेनलाघवात् अयोग्यतानिश्चयस्यप्रतिबन्धकत्वेतुतदभावाभाववतितदभावप्रकारकत्वन्तु तितदभावप्रकारकमितिद्विविधाप्रामाण्यग्रहाभावनिवेशेनप्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्यभावेप्रतियोगितासम्बन्धेनतत्प्रकारकमित्यप्रामाण्यग्रहाभावनिवेशेनचगौरवाद्वाधनिश्चयस्यैवतदभावव्याप्यतदभाववच्छेदकनिश्चयः योःप्रतिबन्धकत्वेनातिगौरवाच्चेति एवंयोग्यताज्ञानस्यशाब्दबोधाजनकत्वेशाब्दसामग्रीकालेयोग्यताज्ञानाभावविशिष्टात्ममानसवारणायतत्रशाब्दसामग्र्याःप्रतिबन्धकत्वङ्कल्पनीयमितिगौरवम् योग्यताज्ञानस्यशाब्दबोधजनकत्वेतुतत्रयोग्यताज्ञानाभावरूपविषयाभावादेवनतादृशमानससमिति तत्रशाब्दसामग्रीप्रतिबन्धकत्वन्नकल्प्यतइतिलाघवमित्याद्यवसेयम्॥ ८३॥तेनपदेनसहतस्येति तत्पदविशिष्टत्वन्तत्पदस्येत्यर्थः घटमानयेत्यत्र घटपदंविनाम्पदस्यान्वयाननुभावकत्वात् घटपदविशिष्टत्वमम्पदेआकाङ्क्षा

आकाङ्क्षानिर्वक्तियेनपदेनविनायत्पदस्यान्वयाननुभावकत्वन्तेनपदेनसहतस्याकाङ्क्षेत्यर्थः क्रियापदंवि

यत्पदेनविनायस्याननुभावकताभवेत्॥

नाकारकपदन्नान्वयबोधञ्जनयति तेनतस्याकाङ्क्षा॥८४॥ घटःकर्मत्वमित्यादौकर्मत्वपदेघटपदवत्वन्तुनाकाङ्क्षाकर्मत्वपदेघटीयाकर्मतेतिशाब्दबोधानुभावकत्वस्यघटपदविरहाप्रयुक्तत्वात् अत्रचाननुभावकत्वन्नादृशपदपरिचायकन्नत्वाकाङ्क्षास्वरूपान्तर्गतम् यद्वाऽननुभावकत्वमप्याकाङ्क्षास्वरूपान्तर्गतमशाब्दबोधेतस्यस्वरूपतएवोपयोगस्तेनजनितान्वयबोधकाद्वाक्यान्नपुनरन्वयबोधोपपत्तिः एकपदेपरपदवत्त्वेशश्वज्ञातएवोपयुज्यते तेनक्रियापदेनतस्यकारकपदस्य अत्रचैकपदेपरपदवत्त्वमपरपदाव्यवहितोत्तरत्वन्तत्रचावधानांशस्याऽऽसत्त्यैवलाभः आसत्तेःपदाव्यवधानरूपतायाः पूर्वमुपवर्णितत्वात् ॥ उत्तरत्वञ्चक्रियाकारकपदयोर्नापेक्षितम् चैत्रःपचति पचतिचैत्रइतिवाक्यद्वयादप्यन्वयबोधात्तः क्रियाकारकपदयोराकाङ्क्षानास्त्यै

अव्यवहितोत्तरत्वमिति तत्पदाधिकरणक्षणध्वंसानधिकरणत्वेसतितत्पदाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वमव्यवहितोत्तरत्वम् उत्तरत्वंचतत्पदाधिकरणक्षणध्वंसाधिकरणवृत्तित्वम् अव्यवहितत्वंचतत्पदाधिकरणक्षणध्वंसानधिकरणवृत्तित्वंतत्तुक्रियाकारकयोरपेक्षितंनतूत्तरत्वमितिभावः॥टि०२॥

का॰मु॰ किन्तु प्रकृतिप्रत्यययोरेव तत्राप्यव्यवधानांशस्यासत्त्वालाभात् प्रत्यये प्रकृत्युत्तरत्वरूपाकांक्षाज्ञानं कारणमित्याह वस्तुतस्त्वित्यादिना ॥ सं॰
टि॰ नन्वयमेति पुत्रो राज्ञ इत्यादावजनितान्वयबोधदशायां राजपदस्य पुत्रपदेनेव पुरुषपदेनाप्याकाङ्क्षासत्त्वाद्राज्ञः पुरुषइत्यन्वयबो-
१८८ धः स्यादत आह अयमेतीति तथा च राजपदपुरुषपदयोराकाङ्क्षायाः सत्त्वेपि तात्पर्याभावान्न तयोरन्वयबोध इति भावः स्यादेवेति ॥
भवत्येवेत्यर्थः ननु पुरुषेण पुत्रेण च राजपदस्य तात्पर्ये ज्ञातेपि पुत्रपदराजपदयोरेव यत्रैकवाक्यता निश्चयः पुरुषपदराजपदयोरेक-
वाक्यत्वाभावनिश्चयश्च तत्र पुरुषपदेन सह निरुक्ताकाङ्क्षायाः सत्त्वाद्राज्ञः पुरुष इति बोधापत्तिरिति चेन्न यत्पदेन विनेत्यस्य समभि-
व्याहृतयत्पदेन विनेत्यर्थकतया समभिव्याहारस्याप्याकाङ्क्षाशरीरे प्रवेशात्समभिव्याहारश्चेदमपदमेतत्पदेन सहान्वयबोधयत्वि-
ति पदतात्पर्यम्प्रकृते च तज्ज्ञानाभावान्नह्यदिनाकाङ्क्षाज्ञानाभाव इति समभिव्याहारस्य नाकाङ्क्षाशरीरे प्रवेशः किन्तु स्वातन्त्र्येणैव त

वस्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्याचरितार्थम् परन्तु घटकर्मताबोधम्प्रति घटपदोत्तरद्वितीया-
याः काङ्क्षाज्ञानं कारणं तेन घटः कर्मत्वमानयनं कृतिरित्यादौ न शाब्दबोधः अयमेति पुत्रो राज्ञः पुरुषोपा-
सार्यतामित्यादौ पुत्रेण सह राजपदस्य तात्पर्यग्रहात्तेनैवान्वयबोधः पुरुषेण सह तात्पर्यग्रहे तु तेन सहान्व-
ज्ञानं शाब्दबोधे कारणमित्यन्ये नव्यास्तु अर्थतात्पर्यज्ञानस्य राजपदम्पुरुषविषयकराजसं॥ यबोधः स्यादेव ॥ ६ ॥ छं ॥
संसर्गकप्रतीतीच्छयोच्चरितमित्याकारकज्ञानत्वादिना हेतुतावत्त्वातिप्रसङ्गाभावे समभिव्याहारज्ञानस्य हेतुत्वे मानाभावो निरुक्त-
तात्पर्यनिश्चये पूर्वोक्तसमभिव्याहारस्य पदतात्पर्यरूपस्य संशये व्यतिरेकनिश्चये वाभवत्येव शाब्दबोध इत्याहुरित्यमत्र विस्तरः इद-
न्त्ववधेयम् आकाङ्क्षालक्षणे तत्पदं तत्पदज्ञानपरम्मो निश्लोकानुरोधात्तत्सर्वाध्याहृतपदेनाप्याकाङ्क्षानिर्वाहः अध्याहार-
श्चाश्रुतपदानामनुसन्धानम् अत एव [illegible] नरानुसन्धानेमा वृत्तिः नेदीयःस्थानान्त एम
रस्थितस्यानुसन्धानमनुषङ्गः दवीयस्थानान्तरस्थितस्यानुसन्धानमनुवृत्तिरियञ्च सिंहावलोकितमण्डूकप्लु ॥ ६ ॥ छं ॥ ७ ॥ १८८

तिगङ्गास्तोतोवत्स्थितेति निराकाङ्क्षत्वज्ञानस्य प्रतिबन्धकत्वमत्वाकाङ्क्षाज्ञानस्य हेतुत्वमिति तु न सत् तथासत्याकाङ्क्षाभाववद्व्याप्यत्वरूपवच्छेदकधर्मज्ञानानां प्रतिबन्धकत्वे गौरवादित्यलम् इत्याकाङ्क्षा॥ छ॥ वक्तुरिच्छेतीति घटमानयेत्यादौ कर्मत्वविशेष्यकाधेयता संसर्गकघटप्रकारकप्रतीतीच्छा वक्तुस्तात्पर्यम् तादृशेच्छयोच्चरितमिदं वाक्यमित्याकारकं श्रोतुस्तात्पर्यज्ञानम् शाब्दबोधे कारणमित्यर्थः तत्र युक्तिमाह सैन्धवेति आदिना श्वेतोधावतीत्यादिपरिग्रहः तत्र कदाचित् श्वेतगुणविशिष्टस्य कदाचित् कुक्कुरादेर्बोधस्य तात्पर्यज्ञाननियम्यत्वात् क्वचिल्लवणस्येति क्वचित्तदुभयोरित्यपि बोध्यम् इति न स्यादिति इति नियमो न स्यादित्यर्थः इदमुपलक्षणम् तात्प

यदि तात्पर्यज्ञानङ्कारणन्न स्यात्तदा सैन्धवमानयेत्यादौ क्वचिदश्वस्य क्वचिल्लवणस्य बोध इति न स्यात् नच तात्पर्यग्राहकाणां प्रकरणादीनां शाब्दबोधे कारणत्वमस्त्विति वाच्यम् तेषामननुगमात् तात्पर्यज्ञानजनकत्वेन तेषामनुगमे तु तात्पर्यज्ञानमेव लाघवात्कारणमस्तु इत्थं च वेदस्थलेपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते नच तत्राव्यापकता तात्पर्यज्ञान

॥ आकाङ्क्षा वक्तुरिच्छा तु तात्पर्यम्परिकीर्तितम्॥

ङ्कारणमिति वाच्यम् सर्गाद्यावव्यापकाभावात् नच प्रलय एव नास्ति कुत्र सर्गादिरिति वाच्यम् प्रलयस्यागमे प्रतिपाद्यत्वात् इत्थं च शुकवाक्येपीश्वरीयतात्पर्यज्ञानङ्कारणम् विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानङ्कारणम्वाच्य

यसंशयव्यतिरेकनिश्चयेवा शाब्दबोधानुदयात् शाब्दबोधे तात्पर्यज्ञानङ्कारणम् यत्संशय इति व्याप्तेरित्यपि बोध्यम् प्रकरणेति आदिना संयोगविप्रयोगसाहचर्यादीनाम्परिग्रहः प्रकरणादीनाङ्क्लृप्तनियतपूर्ववर्तिताकत्वेनानन्यथासिद्धत्वमात्रकल्पने लाघवादिति भावः अननुगमादिति॥ तथा च परस्परजन्यशाब्दबोधे परस्परव्यभिचारेण न हेतुत्वसम्भव इति भावः इत्थञ्चेति शाब्दबोधत्वावच्छिन्नम्प्रति तात्पर्यज्ञानस्य हेतुत्वे चेत्यर्थः एवमग्रेपि प्रलयस्य कार्यद्रव्यानधिकरणकार्याधिकरणकालविशेषात्मकखण्डप्रलयस्य आगमेति नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमोज्योतिरभून्नचान्यदित्याद्यागमेत्यर्थः शुकवाक्येपि संवादिशुकवाक्यजन्यबोधेपि शिक्षयितुरेवेति ईश्वरेच्छया विसंवादित्वाभावादि

इत्थं चेत्यस्य शुकवाक्येपीत्यत्रेत्यर्थः टि॰ २॥ अदृष्टादिरूपकार्याधिकरणेत्यर्थः। टि॰ १२॥ यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तत्र कारणमिति न्यायादित्यर्थः टि॰ १२ख॥

कासु॰ अन्ये त्विति क्वचिदित्यस्य विवरणम् नानार्थादाविति गृहीतनानार्थवृत्तिकादावित्यर्थः तेन गृहीतनानार्थशक्तिकस्य गृहीतनानार्थलक्षण शा॰खं॰
दि॰ कस्य गृहीतविभिन्नार्थशक्तिलक्षणकस्य च सङ्ग्रहः आदिना एकार्थगृहीतलक्षणकस्य सङ्ग्रहः मीमांसा वा घवज्ञानात्मकस्तर्कः परिशो
१८४ धितेति सह कृतेत्यर्थः तर्कोऽनुमानम् आहुरित्यस्वरसोद्भावनन्तद्बीजन्तु गृहीतनानार्थवृत्तिकपदजन्यानुभवत्वापेक्षया लाघवेन पदजन्यानुभवत्वस्यैव तात्पर्यज्ञानजन्यतावच्छेदकत्वमुचितमित्यन्यत्राधिकमनुसन्धेयम् ॥ इति शाब्दपरिच्छेदः समाप्तः ॥ ३ ॥ ८४ ॥
॥ सुगमतयेति सुगमस्यस्वयमप्यूहयितुं शक्यतयाद्युरूह एवादौ सुधियाञ्जिज्ञासोदयादितिभावः तथा चावसरसङ्गत्याऽनुभावा

अन्येतु नानार्थादौ क्वचिदेव तात्पर्यज्ञानङ्कारणम् तथा च शुकवाक्ये विनैव तात्पर्यज्ञानं शाब्दबोधः वेदे त्वनादि मीमांसापरिशोधिततर्कैरर्थावधारणमित्याहुः ॥ ३ ॥ इति शाब्दखण्डं समाप्तम् ॥ ८४ ॥ पूर्वमनुभवस्मरणभेदाद्बुद्धेर्द्वैविध्यमुक्तम् तत्रानुभवप्रकारा दर्शिताः स्मरणन्तु सुगमतया न दर्शितम् तत्र हि पूर्वानुभवः कारणम् अत्र केचित् अनुभवत्वेन न कारणत्वं किन्तु ज्ञानत्वेनैव अन्यथा सकृदनुभूतस्थले स्मरणोत्तरस्मरणं न स्यात् समानप्रकारकस्मरणे न पूर्वसंस्कारस्य विनष्टत्वात् मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरञ्जन्यते इत्याहुस्तन्न यत्र समूहालम्बनोत्तरङ्घटपटादीनाङ्क्रमेण स्मरणमजनिष्ट सकलविषयकस्मरणन्तु नाभूत्तत्र फलस्य संस्कारनाशकत्वाभावात् ॥ ३ ॥

नन्तरं स्मरणनिरूपणमिति भावः तत्र हि स्मरणे हि स्मरणं न स्यादिति अनुभवस्य नष्टत्वादिति भावः ननु अनुभवस्य व्यापारद्वारा कारणत्वम् तच्च कार्याव्यवहितपूर्वक्षणवृत्तिस्वस्वव्यापारान्यतरकत्वं तच्चानुभवनाशेऽपि तज्जन्यसंस्कारस्य सत्त्वाविरोधमत आह समानप्रकारकेति विनष्टत्वादिति तथोक्तादृशमपि कारणत्वमनुभवेन सम्भवतीति भावः तेनैव संस्कारनाशकेन समानप्रकारकस्मरणेनैव संस्कारान्तरद्वारेति स्मरणस्य तृतीयक्षणे नाशेन स्वरूपतो हेतुत्वासम्भवादिति भावः फलस्येति प्रत्येकविषयकक्रमिकस्मरणरूपस्य संस्कारनाशकत्वभावादिति समानप्रकारकत्वाभावादिति भावः ॥ श्रीः ॥ ॥ ॥ ॥ ॥ ॥ ॥ राम॰
१८९

कालस्यरोगस्यवेति अन्यथा उक्तसमूहावलम्बनसंस्कारस्यानाशप्रसङ्गादिति भावः नचेष्टापत्तिः जन्यभावत्वेन विनाशित्वनियमात् ननु कालादेः कालत्वादिना नाशकत्वे संस्कारमात्रस्य क्षणिकत्वापत्तिस्तद्व्यक्तित्वेन तथात्वे नन्तथा गौरवमत आह चरमफलस्यवेति चरमफलेवैजात्यङ्कल्पयित्वा तेन रूपेण नाशकत्वम्वाच्यमिति भावः नक्रमिकेति नस्मरणोत्तरस्मरणेत्यर्थः दार्ढ्यपदार्थत्वादिति तथाच पुनः पुनः स्मरणान्न दृढतरसंस्कारोत्पत्तिः किन्तु विद्यमानसंस्कारस्यैव पुनः पुनः स्मरणेन झटित्युद्बोधकसमवधानञ्जायते उद्बुद्धाच्च तस्मात् स्मरणान्तरमिति भावः व्यभिचारसंशयइति अनुभवत्वेन हेतुत्वे व्यभिचारसंशयइत्यर्थः तथाच नविशेषधर्मेण व्यभिचा

कालस्यरोगस्य वा चरमफलस्य वा संस्कारनाशकत्वं वाच्यम् तथाच नक्रमिकस्मरणानुपपत्तिः नच पुनः पुनः स्मरणाद्दृढतरसंस्कारानुपपत्तिरिति वाच्यम् झटित्युद्बोधकसमवधानस्य दार्ढ्यपदार्थत्वात् नच विनिगमनाविरहादेवज्ञानत्वेनापि जनकत्वं स्यादिति वाच्यम् विशेषधर्मेण व्यभिचाराज्ञाने सामान्यधर्मेणान्यथासिद्धत्वात् कथमन्यथा दण्डस्यभ्रमिद्वारा द्रव्यत्वेन रूपेण कारणत्वम् नचान्तरालिकस्मरणानां संस्कारनाशकत्वे संशयाद्व्यभिचारसंशयइति वाच्यम् अनेन संस्कारतन्नाशककल्पनापेक्षया लाघवेन चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात् ॥ ६ ॥ इति स्मृतिप्रक्रिया ॥ इदानीङ्क्रमप्राप्तम्मनो निरूपयति ॥

राज्ञानमिति भावः व्यभिचारसंशयाभावादिति सकृदनुभूतस्थले संस्कारनाशकचरमस्मृतेस्तदानीमभावेन संस्कारनाशाभावादनुभवत्वेन हेतुत्वेपि नव्यभिचारसन्देहइति भावः यद्यप्यनन्तसंस्कारतन्नाशककल्पनागौरवस्य फलमुखत्वेन नदोषत्वम् अन्यथा विशिष्टज्ञानकल्पनागौरवभियानुमितिस्मृतिविशिष्टज्ञानत्वेन हेतुता विलयप्रसङ्गात्तथापि ज्ञानत्वेन हेतुत्वे उपेक्षात्मकतत्तत्स्मृतिव्यक्तिभेदस्य कारणतावच्छेदककोटिनिवेशेन गौरवमनुभवत्वेन स्मृतिहेतुत्वेतु तत्तत्स्मृतिव्यक्तिभेदानिवेशे लाघवमिति लाघवज्ञानरूपोत्तेजकसत्वाद्व्यभिचारशङ्काऽकिञ्चित्करीत्यत्र तात्पर्यम् ॥ ६ ॥ इति स्मरणनिरूपणम् ॥ ६ ॥ ६ ॥ ६ ॥ ॥ ७ ॥ ७ ॥ ॥ ६ ॥ ॥ ७ ॥ ७ ॥

मृतशरीरेव्यभिचारवारणायाह प्राणस्येति। टि॰॥१॥स्व॰॥

का॰मु॰ जन्यसाक्षात्कारत्वादिति ईश्वरीयसाक्षात्कारेव्यभिचारवारणाय जन्येति नन्वतिलाघवात्त्वगिन्द्रियस्य प्राणेस्यवाकरणत्वमस्त्वत आह स्वर्म॰नां
दि॰ मिति असमवायिकारणसंयोगाश्रयतयेति भावकार्यस्य समवायिकारणकत्वनियमादितिभावः तन्मनसो विभुत्वेचेति तद्सन्निधान।
१९० म्मनसो विभुत्वेनसम्भवतीत्यर्थः तथासतीति दृष्टसामग्रीसत्त्वेप्यदृष्टविलम्बात्कार्यविलम्बाङ्गीकारइत्यर्थः चक्षुरादीनामपीति चाक्षु

साक्षात्कारइति एतेनमनसिप्रमाणन्दर्शितम् तथाहिसुखसाक्षात्कारःसकरणकःजन्यसाक्षात्कारत्वात् चाक्षुषसा
क्षात्कारवदित्यनुमानेनमनसःकरणत्वसिद्धिः नचैवन्तु सुखादिसाक्षात्काराणामपिकरणान्तराणिसन्त्विति वाच्यम् लाघ
वादेकस्यैवसकलसाक्षात्कारकरणतयासिद्धेः एवंसुखादीनामसमवायिकारणसंयोगाश्रयतयामनसःसिद्धिर्बोध्या
मनसोऽणुत्वेप्रमाणमाह अयौगपद्यादिति ज्ञानानाञ्चाक्षुषरासनादीनामयौगपद्यमेककालोत्पत्तिर्नास्तीत्यनुभवसि
द्धम् तत्रनानेन्द्रियाणांसत्यपिविषयसन्निधानेयत्सम्बन्धादेकेनेन्द्रियेणज्ञानञ्जन्यतेयदसम्बन्धाच्चापरैर्ज्ञानन्नोत्पा

साक्षात्कारेसुखादीनाङ्करणम्मनउच्यते अयौगपद्याज्ज्ञानानान्तस्याणुत्वमिहोच्यते॥ ८५॥श्लो॥

द्यतेतन्मनः तन्मनसोविभुत्वेचाऽसन्निधानन्नसम्भवतीतिनविभुमनः नचतदानीमदृष्टविशेषोद्बोधकविलम्बादेवत
ज्ज्ञानविलम्बइतिवाच्यम् तथासतिचक्षुरादीनामप्यकल्पनापत्तेः नचदीर्घशष्कुलीभक्षणादौनानावधानभाजाञ्च
कथमेकदानेकेन्द्रियजन्यज्ञानमितिवाच्यम् मनसोऽतिलाघवाज्झटितिनानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्तेः उत्प
लशतपत्रभेदादिवद्यौगपद्यप्रत्ययस्यभ्रान्तत्वात् नचमनसःसंकोचविकाशशालित्वादुभयोपपत्तिरितिवाच्यम्॥

वतद्विरहयोरदृष्टतद्विरहाभ्यामुपपत्तेरितिभावः भ्रान्तत्वादिति अव्यवहितकालोत्पत्तिकत्वस्यदोषत्वादितिभावः उभयोपपत्तिरि राम
तिमनसःसंकोचदशायामेकेन्द्रियमात्रसम्बन्धादेकमेवज्ञानंविकाशेतुनानेन्द्रियैर्मनसःसम्बन्धाद्युपपन्नानांज्ञानानामुपपत्तिरितिभावः। ५१०

यद्यपि नानेन्द्रियैर्मनःसन्निकर्षकाले चाक्षुषाद्युत्पत्तिकाले रासनाद्यनुत्पादस्य रासनादिकं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वेनैवोपपत्तेर्मनसो विभुत्वेऽपि बाधकाभावस्तथापि तथा प्रतिबन्धकत्वे गौरवमित्यभिप्रायः न च त्वङ्मनोयोगस्य ज्ञानमात्रहेतुत्वाच्चाक्षुषसामग्रीकाले स्पार्शनसामग्र्या नियमतः सत्त्वात् स्पार्शनापत्तिर्मनसोऽणुत्वपक्षेऽपि दुर्वारैवेति वाच्यम् अनन्यगत्या स्पार्शनं प्रति चाक्षुषादिसामग्र्याः प्रतिबन्धकत्वस्वीकारादेवमपि रासनादिप्रत्यक्षे चाक्षुषादिसामग्री प्रतिबन्धकत्वाकल्पनेन प्रयुक्तलाघवस्याणुत्वपक्षे निष्प्रत्यूहत्वात् यद्वा ज्ञानसामान्यं प्रति त्वङ्मनःसंयोगस्याहेतुत्वमित्यभिप्रायः अत एव तत्सम्बन्धात्वगादिभिः परैर्ज्ञानं नोत्पाद्यते इत्युक्तं प्राक् ॥ यथा च त्वङ्मनोयोगस्य ज्ञानसामान्यं प्रत्यजनकत्वेऽपि सुषुप्तौ ज्ञानानुत्पादनिर्वाहस्तथोपपादितमधस्तात् एवं मनसो विभुत्वे आत्ममनःसंयोगानुपपत्तिरात्ममनसोः कर्माभावेन कर्मजन्यसंयोगस्य विभुत्वादिमत्तेऽसम्भवादजन्यसंयोगे मानाभावात् यद

नानावयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्याणुरूपस्यैव मनसः कल्पनादिति
सङ्क्षेपः ॥ ६ ॥ इति द्रव्यपदार्थव्याख्यानः ८५ ॥ द्रव्यं निरूप्य गुणान्निरूपयति ॥ १ ॥ १ ॥

पि भौतिका एव परमाणवो मनांसि अनन्तधर्मिणामतिरिक्तानां याश्च जातेः कल्पनामपेक्ष्य क्लृप्तानामेव धर्मिणां तद्रूपेण हेतुत्वस्य युक्तत्वात् नियमस्त्वदृष्टोपग्रहादिति न चैवमुक्तनयेऽपि यत्संयोगव्यतिरेकात्सुषुप्तिकाले कार्यानुत्पादस्तस्य मनसोऽवश्यमङ्गीकरणीयत्वात् न च कालविशेषस्य प्रतिबन्धकत्वादेव सुषुप्तिकाले कार्यानुत्पाद इति वाच्यम् अनन्तानां कालविशेषाणां प्रतिबन्धकत्वे गौरवात् न चोदासीनमनःसंयोगस्य सुषुप्तिप्राक्काले सत्त्वापत्तिस्तदवस्थैवेत्यदृष्टविशेषाकृष्टमन एव ज्ञानादिहेतुस्तेन वक्तव्यं तद्रूपे सत्याचादृष्टविशेषाकृष्टभौतिकपरमाणूनामेव तद्धेतुत्वमुचितमिति वाच्यम् तस्य भौतिकत्वे पृथिवीत्वजलत्वादिकं वान्यत्र विनिगमकाभावादुभयकल्पने च जातिसाङ्कर्यात् तदेतदभिप्रेत्योक्तं संक्षेप इति ॥ ६ ॥ इति द्रव्यपदार्थव्याख्यानम् ॥ ८५ ॥ अवसरसङ्गतिमभिप्रेत्याह द्रव्यं निरूप्येति ॥ १ ॥

तस्मिन्निरूपिते प्रतिबन्धकीभूतजिज्ञासानिवृत्तेरिति भावः इति चेदिदमिति पाठः ननु रूपत्वस्य सत्तायावा गुणनिष्ठकारणतावच्छेदकत्वस्यादित्याशङ्क्याह नहीति रूपत्वादीत्यादिना रसत्वादिपरिग्रहः यद्यपि गुणत्वजातौ प्रत्यक्षमेव प्रमाणं रूपादिषु संयुक्तसमवेतसमवायेन गुणत्वप्रत्यक्षसम्भवात्तथाप्यतीन्द्रियरूपादौ तत्प्रत्यक्षासम्भवेन तत्साधारण्यं गुणत्वस्य न घटत इत्यनुमानम्प्रदर्शितम् नच रूपत्वादिना साङ्कर्यभियातीन्द्रियरूपादौ गुणत्वसिद्धिः गुरुत्वादौ तु धर्मिग्राहकमानेन तत्सिद्धिरित्यनुमानप्रदर्शनम्व्यर्थमिति वाच्यम् रूपादावप्यापामरसाधारणस्य गुण गुण इति प्रत्ययस्याप्रसिद्धेः इदमत्रबोध्यम् सकलगुणसाधारणीएकाकारणता नास्त्येवेति क।

अथेत्यादिना गुणत्वजातौ किम्मानमिति चेत् इदं द्रव्यकर्मभिन्ने सामान्यवति या या कारणता सा किञ्चिद्धर्मावच्छेद्या निरवच्छेद्यकारणताया असम्भवात् नहि रूपत्वादिकं सत्तावा तत्रावच्छेदिका न्यूनाधिकदेशवृत्तित्वात् त

॥ अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ॥

अनुविंशत्यनुगतं किञ्चिद्वाच्यं तदेव गुणत्वमिति द्रव्याश्रिता इति यद्यपि द्रव्याश्रितत्वन्न लक्षणं कर्मादावतिव्याप्तेः तथापि द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वन्तदर्थः भवति हि गुणत्वं द्रव्यत्वव्यापकतावच्छेदक((त्त्व वृत्ता च गुणानामिति ६॥

थत्त्वदवच्छेदकतया गुणत्वजातिसिद्धिः नच चतुर्विंशतिगुणेषु प्रत्येकं या कारणता तासामेव पक्षतया तादृशसकलकारणतावच्छेदकतया गुणत्वजातिसिद्धिरिति वाच्यम् तथासति द्रव्यकर्मरूपभिन्नसामान्यवत्तिया कारणता सा किञ्चिद्धर्मावच्छिन्नेत्यनुमानेन रूपभिन्नत्रयोविंशतिगुणसाधारण वैजात्यस्यापि सिद्धिप्रसङ्गात् पारिमाण्डल्यस्यकाप्यकारणतया गुणत्वस्याप्यतिप्रसक्ततया नवच्छेदकत्वाच्चेत्यन्यत्र विस्तरः कर्मादावतिव्याप्तेरिति आदिना सामान्यपरिग्रहः लक्ष्ये लक्षणसत्त्वम्प्रति पादयति भवति हीति द्रव्यत्वव्यापकतावच्छेदके त्यस्य फलमाह ॥ ६ ॥ श्री ६ ॥ ६ ॥ ॥ ६ ॥ ६ ॥ ॥ ६ ॥ ६ ॥

द्रव्यत्वमिति जातिपदस्य कृत्यमाह द्रव्यत्वत्वमिति सत्तारूपजातिमादाय द्रव्यादावतिव्याप्ति''वारणाय सत्ताभिन्नेति तथापि सामान्यवत्त्वे स
तीति सत्यन्तयोर्विशेष्यस्य च फलमाह जात्यादीनामिति तत्र तेषु गगनादावतिव्याप्तेरिति आदिना कालादिपरिग्रहः यथाश्रुते चैतत् सामा
न्यवत्त्वे सति कर्मान्यत्वे च सति कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वेऽतिव्याप्तेरभावात् वेगेन स्थितिस्थापकोप्युपलक्षणीय इति पाठः
वेगपदस्य भावनान्यसंस्कारपरत्वादिति भावः इदमुपलक्षणम् वेगाश्चेत्यत्र चकारेणानुक्तसमुच्चायकेन गुरुत्वस्यापि संग्रहात् ननु मूर्त्त
गुणत्वम्मूर्त्तवृत्तिगुणत्वं तच्च सङ्ख्यादावतिव्याप्तमत आह अमूर्त्तेष्विति तथा चामूर्त्तावृत्तिगुणत्वम्प्रदर्शितगुणानां साधर्म्यमित्यर्थः

द्रव्यत्वङ्कर्मत्वं वा न द्रव्यत्वव्यापकतावच्छेदकम् मनादौ द्रव्यकर्मणोरभावात् द्रव्यत्वत्वं सामान्यत्वादिकं वा न जाति
रिति तद्व्युदासः निर्गुणा इति यद्यपि निर्गुणत्वङ्कर्मादावपि तथापि सामान्यवत्त्वे सति''कर्मान्यत्वे च सति निर्गुणत्वम्बोध्य

रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ८६ द्रवत्वस्नेहवेगाश्च मता मूर्त्तगुणा अमी धर्माधर्मौ भावना च
शब्दो बुद्ध्यादयोऽपि च ८७ एतेऽमूर्त्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः सङ्ख्यादयो विभागान्ता उभयेषां गु
॥ णा मताः ८८

म् जात्यादीनान्तु सामान्यवत्त्वङ्कर्मणो न कर्मान्यत्वन्द्रव्यस्य न निर्गुणत्वमिति तत्र नातिव्याप्तिः निष्क्रिया इ
ति स्वरूपकथनन्तु लक्षणम् गगनादावतिव्याप्तेः ८६ वेगा इति वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः मूर्त्तगुणा इति
॥ अमूर्त्तेषु न वर्त्तन्त इत्यर्थः॥ ८७॥ अमूर्त्तगुणा इति मूर्त्तेषु न वर्त्तन्त इत्यर्थः॥ १॥ ६॥ २॥ ४॥ ए नचैतदपि मूर्त्तमात्रवृत्ति

सङ्ख्यायामतिव्याप्तमिति वाच्यम् अमूर्त्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वस्य मूर्त्तत्वव्याप्यतावच्छेदकगुणवृत्तिजाति
मत्त्वस्य वा विवक्षितत्वात् अत्र चाद्ये मूर्त्तान्तेन सङ्ख्यादेर्बुद्ध्यादेश्च व्युदासः वेगस्थितिस्थापकोपग्रहाय संस्कारत्वान्येति द्वितीयेऽवच्छे
दकान्तेन सङ्ख्यात्वादेर्वृत्तित्वान्तेन कर्मत्वादेर्व्युदासः ८७ मूले एतेऽमूर्त्तगुणा इत्यत्राकारप्रश्लेषो बोध्यः ननु धर्मेत्यादिमूले नैतेषाममू
र्त्तगुणवृत्तित्वं साधर्म्यमुक्तम् तत्सङ्ख्यादावतिव्याप्तमत आह मूर्त्तेष्विति मूर्त्तावृत्तिगुणत्वमेव तेषां साधर्म्यमित्यर्थः॥ ७॥ ६॥ ४॥ ४॥

नचनथाप्यमूर्त्तमात्रवृत्तिसंख्यादावतिव्याप्तिरितिवाच्यम् मूर्त्तगुणवृत्तिसंस्कारत्वान्यगुणत्वव्याप्यजातिशून्यगुणत्वस्य मूर्त्तत्वभावव्याप्यतावच्छेदकपरिमाणवृत्तिजातिमत्त्वस्य वा विवक्षितत्वात् आद्ये शून्यान्तेन संख्यादिरूपादिसुखादेः सत्तामादायासम्भववारणाय गुणत्वव्याप्येति कर्मण्यतिव्याप्तिवारणाय विशेष्यीभूतगुणत्वस्य निवेशः द्वितीये परममहत्त्वजातिमादाय तत्रातिव्याप्तिवारणाय परिमाणवृत्तीति ननूभयेषां गुणा इति मूलेन सङ्ख्यादिपञ्चानामुभयवृत्तिगुणत्वं साधर्म्यमुक्तम् तच्च रूपादावतिव्याप्तमत उभयपदं मूर्त्तामूर्त्तपरतया व्याचष्टे मूर्त्तामूर्त्तेति नच मूर्त्तमात्रवृत्तिसङ्ख्यादावव्याप्तमिति वाच्यम् कालवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य द्रव्यत्वसमव्यापकतावच्छेदकजातिमत्त्वस्य वा विवक्षितत्वात् ॥८८॥

उभयेषामिति मूर्त्तामूर्त्तगुणा इत्यर्थः लक्षणं तु मूर्त्तवृत्तिवृत्तिपदं मूर्त्तवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वं संख्यात्वादिकमादाय लक्षणसमन्वयः ॥८८॥ अनेकाश्रिता इति संयोगविभागद्वित्वादीनि द्विवृत्तीनि त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति वा

संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥८९॥ अतः शेषगुणाः सर्वे मता एकैकवृत्तयः बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥९०॥ अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥९१॥ गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः

ध्यम् ॥८९॥ अत इति रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः बुद्ध्यादीनि बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इत्यर्थः स्पर्शान्ताः रूपरसगंधस्पर्शा इत्यर्थः द्रवो द्रवत्वं ॥९०॥ वैशेषिकाः विशेषा एव वैशेषिकाः स्वार्थे ठक् विशेषगुणा इत्यर्थः सङ्ख्यादिरिति ॥ ९ ॥ २ ॥ ३ ॥

नन्वनेकाश्रितत्वं संयोगादावव्याप्तमनेकपदस्य बहुत्वविशिष्टे शक्तत्वादत आह संयोगेति तथा चैकत्वभिन्नसङ्ख्याविशिष्टवाचकत्वमनेकपदस्येति न तत्राव्याप्तिरिति भावः स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वस्य विवक्षितत्वान्न तत्राव्याप्तिरित्यपि केचित् ॥८९॥ एकैकवृत्तय इति सूत्र्॰ राम
लस्य स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वका इत्यर्थः यद्वा स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिन इत्यर्थः ॥९०॥ १९२



समपदे अनेकत्वग्राह्यम् ॥ टि॰ ॥१॥

ठ मिथानाद्विशेषशब्दस्यतदन्तर्गतत्वाद्विनयादेराक्तनिगणत्वादितिभावः विशेषगुणाइत्यर्थइति विशेषगुणत्वञ्चभावनान्योयोग्यवृत्ति
वृत्ति स्पर्शावृत्तिधर्मसमवायित्वरूपत्वेसतिगुरुत्वजलद्रवत्वान्यगुणत्वम् अत्रजात्यादावति व्याप्तिवारणायविशेष्यभङ्गुरत्वनैमित्तिकद्रवत्वयो
वारणायगुरुत्वेत्यादि सांसिद्धिकद्रवत्वसङ्ग्रहायाजलेति संयोगादिवारणायसत्यन्तम भाव नायामव्याप्तिवारणायधर्मान्तेसत्यन्तघटकसम
वायिविशेषणम् सत्तादिकमादायासम्भववारणायस्पर्शसङ्ग्रहायचस्पर्शावृत्तीतिसङ्ख्यादिर्यस्यापरत्वमनेयस्येति ग्रुन्यत्वापरिमा
णपरत्वयोरेवग्रहणमिति भ्रमवारणायादिपदग्राह्यगुणान्विशिष्यदर्शयति सङ्ख्यापरिणामादिनागुरुत्ववेगावित्यत्रमूलेवेगपदम्भाव
नातिरिक्तसंस्कारपरत्वेन स्थितिस्थापकस्यापिपरिग्रहः मूलेसामान्यगुणाइति तत्वञ्चरूपस्पर्शान्यत्वेसति द्रव्यविभाजकोपाधिव्याप्यतावच्छेदकसंयोगविभागवेगद्रवत्वाद्यतिजातिशून्यगुणत्वन्द्रव्यविभाजकतावच्छेदकम्पृथिवीत्वादितद्व्याप्यतावच्छेदकञ्चगन्धत्वादित

सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः ९१।९२ द्वीन्द्रियेति चक्षुषात्वचापिग्रहयोग्यत्वात्वाह्येति

सङ्ख्यादिरपरत्वान्तोद्रवत्वंस्नेहएवच॥ ९२॥ एतेतुद्वीन्द्रियग्राह्याअथस्पर्शा
न्तशब्दकाः वाह्यैकैकेन्द्रियग्राह्यागुरुत्वादृष्टभावना॥ ९३॥ ९४॥ ९५॥ ९६॥ ९७॥

न्नत्वस्यसङ्ख्यादौसत्वाल्लक्षणसमन्वयः अत्रजलीयशुक्लरूपेवायोरनुष्णाशीतस्पर्शेचपृथिव्यादिशुक्लरूपस्पर्शव्यावृत्तजा
तिविशेषमानाभावाच्छुक्लरूपानुष्णाशीतस्पर्शयोरतिव्याप्तिवारणायसत्यन्तम् शब्दविशेषजनकतावच्छेदकजात्यवच्छिन्नेभेरीद
ण्डसंयोगेनादृष्टेकठिनावयवद्वयविभागेतेजोवेगातिशयेऽत्यन्ताग्निसंयोगनाश्यतावच्छेदकवैजात्यावच्छिन्नघृतादिवृत्तिद्रवत्वे
चाव्याप्तिवारणायात्यन्तञ्जातिविशेषणम् कर्मादौतद्वारणायविशेष्यम् पृथिवीत्वादिव्याप्यतावच्छेदकतत्तत्संख्यात्वादिशून्यत्वस्य
तत्तत्सङ्ख्यायामभावात् अव्याप्तिवारणायजातिपदन्द्रव्यविभाजकतावच्छेदकरूपोपाधेश्चव्यापकत्वन्तत्तद्व्यक्तित्वेनविवक्षितन्नतुना
दृष्टोपाधित्वेन अन्यथासङ्ख्यात्वादेरपितादृशजातित्वादसम्भवापत्तेरितिसङ्ख्यादिरपरत्वान्तोद्रवत्वंस्नेह एवचेत्यत्रमूलेस्नेहपदंवेग

उपलक्षकं स्थितिस्थापकत्व॥

का॰मु॰ तीन्द्रियत्वं वक्ष्यते॥९१॥९२॥ ननु द्वीन्द्रियग्राह्यत्वं रूपादावति व्याप्तं तेषां मनसापि ग्रहणात् बाह्येन्द्रियद्वयग्राह्यत्वमपि तत्रैवाति व्याप्तम्। म॰ना॰
दि॰ रूपादीनाञ्चक्षुर्द्वयादिना ग्रहणादतीन्द्रियसङ्ख्यादावव्याप्तञ्चन तत्रेन्द्रियग्राह्यत्वस्यैवाभावादत आह चक्षुषात्वचापीति चक्षुस्त्वगु
१९३ भयग्रहणयोग्यत्वन्तदर्थः चक्षुस्त्वगुभयग्राह्यभावनान्यत्वन्यधर्मसमवायिगुणत्वमितितु निष्कर्षः संस्कारत्वादिकमादाय भावनायामतिव्या
प्तिवारणाय भावनावृत्यन्येति कर्मादीनवारणाय गुणत्वस्य निवेशः ननु बाह्यैकैकेन्द्रियग्राह्यत्वं सङ्ख्यादावति व्याप्तं तेषामुभयग्राह्यत्वे
प्येकग्राह्यत्वानपायादव्याप्तञ्चातीन्द्रियरूपादौ तेषामिन्द्रियग्राह्यत्वस्यैवाभावादत आह रूपादीनामिति चक्षुरादीति चक्षुरादिनैकेप
र्थः तथाचैकैकमात्रग्राह्यत्वं स विवक्षितत्वात् संख्यादौनातिव्याप्तिः ग्राह्यत्वात् ग्रहणयोग्यत्वात् तेननातीन्द्रियरूपादावव्याप्तिः तथाच
।चक्षुस्त्वगुभयाग्राह्यवहिरिन्द्रियग्राह्यगुणसमवेतजातिमत्वमेतेषां लक्षणमितिभावः नचत्र सरेणुनिष्ठापकर्षस्य चक्षुरिन्द्रियेणैव

रूपादीनाञ्चक्षुरादिग्राह्यत्वात्॥९३॥ विभूनामिति बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दाइत्य

अतीन्द्रियाविभूनान्तुयेस्युर्वैशेषिकागुणाः अकारणगुणोत्पन्ना एतेतुपरिकीर्तिताः॥ ९४॥.

र्थः कारणगुणेन कार्येयेगुणा उत्पाद्यन्ते तेकारणगुणपूर्वका रूपादयो वक्ष्यन्ते॥९॥ ग्रहणान्नत्रातिव्याप्तिरितिवाच्यम् परि
माणान्यत्वेनापि गुणस्य विशेषणीयत्वात् मूले गुरुत्वादृष्टभावनेत्यत्र भावनापदं वेगभिन्नसंस्कारपरम् तेन स्थितिस्थापकस्यापि सं
ग्रहः नचातीन्द्रियत्वमिन्द्रियजन्यप्रत्यक्षाविषयत्वं यदि तदा गुरुत्वादावसंभव एषामलौकिकप्रत्यक्षविषयत्वात् लौकिकप्रत्यक्षा
विषयत्व विवक्षणे चातीन्द्रियरूपादावतिव्याप्तिरितिवाच्यम् लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्मसमवाय्य
न्यगुणत्वस्य विवक्षितत्वात् सत्तादिकमादाया सम्भववारणाय गुणत्वन्यूनवृत्तीति भावनास्थितिस्थापकयोरव्याप्तिवारणाय संस्कार
त्वान्येति जात्यादावति व्याप्तिवारणाय गुणपदम्॥९३॥ मूलेऽकारणगुणोत्पन्ना इत्यत्र नकारणमकारणन्तस्य गुणइति भ्रमनिराकरणा राम
याह मुक्तावल्यामकारणगुणेनेति समवायिकारणसमवेतगुणेनेत्यर्थः अत्र कारणत्वमविवक्षितम् समवायित्वमात्रं बोध्यम् ॥९॥९४॥ १९३

न त्वादृशा इति तथाच कारणगुणैरुत्पन्नाः कारणगुणोत्पन्नाः न कारणगुणैरुत्पन्ना अकारणगुणोत्पन्ना इति विग्रहेण स्वाश्रयसमवायिसमवेतगुणजन्यत्वङ्कारणोत्पन्नत्वन्तादृशगुणाजन्यत्वमकारणगुणपूर्वत्वमिति भावः यद्यपीदन्नित्यरूपे जन्येपि च पाकजादौ अवयवावयविनोर्द्वित्वद्विपृथ क्त्वातिरिक्तद्वित्वद्विपृथक्त्वादौ कर्मजन्यसंयोगविभागेषु पाकजद्रवत्वे चातिव्याप्तन्तथाप्यकारणगुणोत्पन्नमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम्विवक्षितमित्यदोषः अकारणगुणोत्पन्नमात्रवृत्तित्वञ्च निरुक्तकारणगुणोत्पन्नावृत्तित्वं स्वसनिष्ठपाकजन्यतावच्छेदकवैजात्यंसंयोगविभागवेगनिष्ठकर्मजन्यतावच्छेदकवैजात्यमणुपरिमाणनिष्ठवैजात्यम्परममहत्त्वत्वञ्चादायातिव्याप्तिवारणाय गुणत्वसाक्षाद्व्याप्येति संस्कारत्वान्यगुणत्वव्याप्याव्याप्यत्वे सति गुणत्वव्याप्यत्वन्तदर्थः अन्यथा भावनात्वस्य गुणत्वसाक्षाद्व्याप्यत्वाभावाद्भावनायामव्याप्तिप्रसङ्गात् इत्थमपि परत्वापरत्वयोरतिव्याप्तिरवशिष्यते सापि परत्वापरत्वावृत्तित्वेन जातेर्विशेषणी

बुद्ध्यादयस्तु नतादृशाः आत्मादेः कारणाभावात् ९४ अपाकजास्त्विति पाकजरूपादीनाङ्कारणगुणपूर्वकत्वाभावादप

अपाकजास्तु स्पर्शान्ता द्रवत्वञ्च तथाविधम् स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥

॥ स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ॥ ९ ॥ २ ॥ ९ ॥ ९ ॥ ९ ॥ २ ॥ (( कजा इत्युक्तम् ॥ ९ ॥ ९ ॥

यत्वान्निरसनीयेति ध्येयम् ॥ ९४ ॥ मूले स्युः कारणगुणोद्भवा इति कारणगुणोत्पन्नत्वञ्च न पूर्वोक्तस्वाश्रयसमवायिसमवेतगुणजन्यत्वन्तत् हस्तपुस्तकसंयोगविभागादिजन्यकायपुस्तकसंयोगविभागादावतिव्याप्तेः न च स्वाश्रयसमवायिमात्रसमवेतगुणजन्यत्वन्तत् हस्तपुस्तकसंयोगादिश्च न स्वाश्रयसमवायिमात्रसमवेत इति वाच्यम् तथाप्यवयवावयविनोरेकत्वाभ्यां जनितेऽवयवावयविद्वित्वादावतिव्याप्तेः तथापि स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यत्वन्तत् अवयवैकत्वादेरवयवावयविद्वित्वसजातीयत्वाभावेन तत्रातिव्याप्त्यभावात् न च सङ्ख्यात्वेन तयोः साजात्यमस्तीति तद्दोषतादवस्थ्यङ्गुणत्वव्याप्यव्याप्यजात्या साजात्यस्य विवक्षितत्वात् अवयवावयविरूपादीनान्नीलत्वादिना साजात्यसत्त्वान्नासम्भवः ननु तथापि नित्यरूपे सङ्ख्याप्रचयजन्यपरिमाणे

का॰मु॰ कर्मजवेगे चाव्याप्तिरिति चेन्न स्वाश्रयसमवायिमात्रसमवेतत्वस्य जातीयगुणजन्यवृत्तिजातिमत्त्वस्य विवक्षितत्वात् नित्यरूपादीनां दृ म॰नी॰

टि॰ शरूपत्वादिकमादायलक्षणसमन्वयात् अत्र च सङ्ख्यात्वपृथक्त्वातिरिक्तत्वेन भावनावृत्त्यन्यत्वेन च तादृशजातिर्विशेषणीया तेन ता

१९४ दृशसङ्ख्यात्वपृथक्त्वसङ्ख्यादायद्वित्वद्विपृथक्त्वादीनामतिव्याप्तिः न वा ऽवयववेगजन्यावयविवेगवृत्तिसत्तागुणत्वसंस्कारत्वमादायभा

वनायामतिव्याप्तिः न चैवङ्ज्ञानघटितलक्षणेनादृशरूपत्वादिजातिमादायपाकजरूपादावतिव्याप्तिरिति वाच्यम् तादृशजातिमत्वेसत्यपा

कजत्वस्य विवक्षितत्वादिति सर्वञ्चतुरस्रं लेस्यनावच्छेदकेऽपाकजत्वविशेषणस्य प्रयोजनमाह मुक्तावल्याम् पाकजरूपादीनामितिका

तथाविधमपाकजम् तथैकत्वमपि बोध्यम् ९५ स्पर्शम् संयोगश्चेति कर्मजन्यत्वं यद्यपि न साधर्म्यं घटादावतिव्या

प्तेः संयोगजसंयोगेऽव्याप्तेश्च तथापि कर्मजन्यवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम् एवमन्यत्राप्यूह्यम् ९६ पृथक्

त्वमित्यत्रत्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वम्पृथक्त्वञ्च ग्राह्यम् पृथक्त्वपदे न चैकपृथक्त्वम् भवेदसमवायित्वे

संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ९६ ॥ स्पर्शान्तपरिमाणैकपृथक्त्वं स्नेहशब्दके ॥

भवेदसमवायित्वमथ वैशेषिके गुणे ॥ ९७ ॥ ॥ श्री ॥ ९७ ॥ ॥ ९७ ॥ ९७ ॥ ॥ श्री ॥ श्री ॥

मिति घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति एवङ्कपालादिपरिमाणादीनाङ्घटादि

परिमाणाद्यसमवायिकारणत्वम् शब्दस्यापि द्वितीयशब्दम्प्रति एवं स्थितिस्थापकैकपृथक्त्वयोरपि ज्ञेयम् ॥

रणगुणपूर्वकत्वाभावात् कारणगुणपूर्वकत्वव्यवहाराभावात् अत्र पाकजरूपरसगन्धस्पर्शपाकजद्रवत्वद्वित्वादिद्विपृथक्त्वादिसंयोगविभाग

परत्वापरत्वानामकारणगुणपूर्वकत्वन्न वा अकारणगुणपूर्वकत्वं साधर्म्यमिति ध्येयम् ९५ एवमन्यत्रापीति अथ प्रादेशिक इत्यादिमूलेन संयोग

द्विद्वयविभुविशेषगुणानामव्याप्यवृत्तित्वसाधर्म्यम्प्रदर्शितं यत्तत्रापि यथाश्रुते कर्मादावतिव्याप्तेरीश्वरज्ञानादावव्याप्तेश्चाव्याप्यवृत्तिवृत्तिगुणत्व एम॰

व्याप्यजातिमत्त्वम्बोध्यमित्यर्थः ९६ मूले एकपृथक्त्वं स्नेहशब्दक इत्यत्रैकत्वमेकपृथक्त्वञ्चेत्यर्थो बोध्यः वैशेषिके गुण इत्यत्रात्मनः न्मस्यान्वयः ९७ १९८

सुक्तावल्यामुष्णस्पर्श इति अवयववृत्तेरुष्णस्पर्श इत्यर्थः उष्णस्पर्शस्य अवयविगतोष्णस्पर्शस्य एवमग्रेऽपि कारणैकार्थप्रत्यासत्त्या कार्यैकार्थ प्रत्यासत्त्या च गुरुत्वस्यासमवायिकारणत्वमिति प्रदर्शनाय गुरुत्वपतनयोरित्युभयमुक्तम् एवमग्रेऽपि सङ्ग्रहे सक्त्वादिसंयोगविशेषे भेर्याकाश संयोगोऽसमवायीति प्रथमान्तसंयोगपदघटितः पाठः भावकार्यस्यासमवायिकारणजन्यत्वनियमाद्भेर्याकाशसंयोगस्य शब्दं प्रत्यसमवायि कारणत्वमावश्यकमिति भावः यद्यपि भेरीदण्डसंयोगस्य शब्दे निमित्तत्वं न तु तत्र तस्यासमवायिकारणत्वं भेर्याकाशसंयोगस्यासमवायिका रणत्वं न तु तत्र तस्य निमित्तत्वमित्येकव्यक्तेर्न द्विविधहेतुत्वं तथापि संयोगत्वजातीयस्य द्विविधहेतुत्वमस्त्येवेति भावः एवमग्रेऽपि मूले संयो

बुद्ध्यादीनामिच्छादिनिमित्तत्वादिति भावः॥९७।९८॥ असमवायिकारणत्वं निमित्तकारणत्वं तथा हि उष्णस्पर्श उ ष्णस्पर्शस्यासमवायिकारणं पाकजे निमित्तम् गुरुत्वं द्रवत्वं पतनयोरसमवायिकारणमभिघाते निमित्तम् वेगो वेगस्यन्दयोर समवायि अभिघाते निमित्तम् द्रवत्वं द्रवत्वस्यन्दनयोरसमवायि सङ्ग्रहे निमित्तं भेरीदण्डसंयोगः शब्दे निमित्तं भेर्याकाशसंयो।

आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः। वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥९८॥ द्विधैव कारणत्वं।
स्यादथ प्रादेशिको भवेत्। वैशेषिको विभुगुणः संयोगादिद्वये तथा ॥९९॥ चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपल
म्भकम्। चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥१००॥

गोऽसमवायि वंशदलद्वयविभागः शब्दे निमि त्तं वंशदलाकाशविभागोऽसमवायीति प्रादेशिकः अव्याप्यवृत्तिः ९९ चक्षुरिति रूपत्वजातिस्तु प्रत्यक्षसिद्धा रूपशब्दोल्ले खिनी प्रतीतिर्नास्तीति चेन्मास्तु रूपशब्दप्रयोगः तथापि नीलपीतादिष्वनुगतजातिविशेषोऽनुभवसिद्ध एव रूपशब्दाप्र। योगेऽपि नीलो वर्णः पीतो वर्ण इति वर्णशब्दोल्लेखिनी प्रतीतिरस्त्येव॥ ९८ गादिद्वये तथेत्यनन्तरं द्विधैवेत्यस्य प्राक् परापरत्वद्वित्वादिद्वए

यक्षादिके पुनरिति पाठः क्वचित्पुस्तके प्रमादादायातः परत्वादीनामकारणत्वेन द्विविधकारणत्वस्य तत्राभावात् न च परत्वादीनामपि स्वध्वंसजनकसम्भतिहे तुत्वात्कथमकारणत्वमिति वाच्यम् ध्वंसप्रत्यासत्तिरिक्तस्य ¯ त्यकारणत्वस्योक्तत्वात् विस्तरस्त्वन्यत्रानुसन्धेयः मुक्तावल्यामव्याप्यवृत्तिरित्यस्य देशिकेत्यादिसे

का॰मु॰ नीलत्वादीत्यादिना रक्तत्वादिपरिग्रहः अन्यथा नीलादीनामेकव्यक्तित्वेन तु लाघवादेव नीलारुणादिव्यक्तेरैक्यं स्यादित्यत आह लाघव
टि॰ न्विति प्रत्यक्षबाधितमिति नीलो नष्टो रक्त उत्पन्न इत्यादिप्रत्यक्षबाधितमित्यर्थः अन्यथेति लाघवमात्रेण नीलारुणादीनामैक्याभ्यु
१९५ पगम इत्यर्थः न चोत्पन्नो घटो विनष्टो घट इत्यादिप्रतीतेर्न घटादेरैक्यमित्यत आह उत्पादेति एतेनेह शब्दजातिसाधकप्रमाणेन रसादिकं
रसत्वादिकम् आदिना गन्धत्वादिपरिग्रहः संयोगादावतिव्याप्तिमाशङ्क्याह चक्षुर्ग्राह्यमितीति चक्षुर्ग्राह्यमित्यस्येत्यर्थः तेन चक्षुरिति ॥

एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम् न चैकैकैव नीलारुणादिव्यक्तयः इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिकं न जातिरिति वाच्यम् नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात् अन्यथा एकनीलनाशे जगदनीलतामापद्येत न च नीलसमवायरक्तसमवाययोरेवोत्पादविनाशविषयकोऽसौ प्रत्यय इति वाच्यम् प्रतीत्या समवायानुल्लेखात् न च स एवायं नील इति प्रत्यक्षबलाल्लाघवाच्चैक्यमिति वाच्यम्॥ प्रत्यक्षस्य तज्जातीयविषयत्वात् सैवेयं गुर्जरीतिवत् लाघवं तु प्रत्यक्षबाधितम् अन्यथा घटादीनामप्यैक्यप्रसङ्गात् उत्पादविनाशबुद्धेः समवायालम्बनत्वापत्तेरिति एतेन रसादिकमपि व्याख्यातम् चक्षुर्ग्राह्यमिति ॥ चक्षुर्ग्राह्यविशेषगुणत्वमित्यर्थः ॥

प्राक् प्रतीकधारणेऽपि न पौनरुक्त्यम् विशेषगुणत्वमिति विलक्षणगुणत्वमित्यर्थः वैलक्षण्यञ्च चक्षुर्भिन्नाग्राह्यत्वम् न च तथापि
प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति वाच्यम् चक्षुर्मात्रग्राह्यत्वस्य च त्वङ्मात्रगृहीतस्नेहविशेषेऽतिव्याप्त्यापत्त्या चक्षुर्मात्रग्राह्यत्वस्य एम॰
जातिविशेषणत्वं स्वीकृत्य चक्षुर्मात्रग्राह्यजातिमद्गुणत्वविवक्षणस्यावश्यकतया तेनैव प्रभाभित्तिसंयोगेऽतिव्याप्तिवारणादिति प्र १९५
भाभासयोः प्रभायामतिव्याप्तिवारणाय गुणपदम् ॥

एवमन्येपि रसस्पर्शलक्षणेप्येषा रीतिर्बोध्येत्यर्थः अप्रत्यक्षप्रसङ्गादिति द्रव्यचाक्षुषम्प्रति समवायसम्बन्धेनोद्भूतरूपस्य हेतुत्वादिति भावः व्याप्यवृत्तिजातीयेति व्याप्यवृत्तिवृत्तिजातिश्च स्वविषयावृत्तिर्बोध्या तेन व्याप्यवृत्तीश्वरज्ञानजातीयस्यास्मदादिज्ञानस्याव्याप्यवृत्तित्वेपि न क्षतिः ननु वृक्षाणां बहुत्वेप्येकं वनमितिवद्रूपसमुदायगतमेकत्वमादायैकञ्चित्रमित्यनुभवोपपत्तिरत आह नानेति गौरवादिति चित्रमिति प्रतीतिविषयताया अनेकत्र कल्पने गौरवादित्यर्थः ननु चित्ररूपाधिकरणे घटादौ स्वाश्रयसमवेतत्वसम्बन्धेन कपालनीलादीनाङ्कारणादीनां सत्वात्कथन्न तत्र नीलाद्युत्पत्तिरित्यत आह इत्थञ्चेति उक्तलाघवेन चित्ररूपसिद्धौ चेत्यर्थः प्रतिबन्धक

एवमन्येपि द्रव्यादेरिति उपलम्भकमुपलब्धिकारणम् इदमेव विवृणोति चक्षुष इति द्रव्यगुणकर्मसामान्यानाञ्चाक्षुषप्रत्यक्षम्प्रति उद्भूतरूपङ्कारणम् शुक्लादिकमनेकधेति तच्च रूपं शुक्लनीलपीतरक्तहरितकर्बुरादिभेदादनेकप्रकारकम्भवति ननु कथङ्कर्बुरमतिरिक्तं रूपम्भवति इत्थन्नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीलरूपोऽप्रत्यक्षत्वप्रसङ्गात् नोपि व्याप्यवृत्तिनीलादिकं रूपमुत्पद्यते पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात् नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात् तस्मान्नानाजातीयरूपैरवयविनि विजातीयञ्चित्रं रूपमारभ्यते अत एवैकञ्चित्ररूपमित्यनुभवोपि नानारूपकल्पने गौरवात् इत्थञ्च नीलादीनाम्पीताद्यारम्भे प्रतिबन्धकत्वकल्पनात् ॥ ई ॥ श्री ई ॥ छ ॥ छ ॥

त्वकल्पनादिति समवायेन नीलम्प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलातिरिक्तरूपत्वेन पीतरूपम्प्रति पीतातिरिक्तरूपत्वेन प्रतिबन्धकत्वमिति रीत्या प्रतिबध्यप्रतिबन्धकभावकल्पनादन्यथा नानाजातीयरूपवत्कपालारब्धे घटे नीलकपालाद्यवच्छेदेन पीतोत्पादापत्तेर्दुर्वारत्वादिति भावः अत्र नव्याः नानाजातीयरूपवत्कपालारब्धे घटे पीतकपालावच्छेदेन नीलापत्तिवारणाय न पूर्वोक्तः प्रतिबध्यप्रतिबन्धकभावः कल्प्यते ॥

का॰मु॰ टि॰ १९६ किंत्ववच्छेदकतासम्बन्धेन नीलादिकम्प्रति समवायेन नीलादेः कारणत्वङ्कल्प्यते चित्ररूपाङ्गीकारे तु समवायेन नीलादिकम्प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलत्वादिना हेतुत्वस्य पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावस्य च कल्पना गौरवमित्याहुस्तन्न अवच्छेदकतासम्बन्धघटितोक्तकार्यकारणभावाङ्गीकारेप्यवच्छेदकतासम्बन्धेन कपालादौ जायमानस्य नीलादेः समवायेन घटादावितरागनादावप्युत्पत्तिवारणाय समवायेन नीलादिकम्प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्हेतुत्वस्य तवाप्यावश्यकत्वात् किञ्च चित्रमिति प्रतीतिविषयतायाअनेकत्रकल्पने गौरवमेकत्र कल्पने लाघवमिति लाघवानुरोधेनातिरिक्तचित्ररूपसिद्धौ पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावकल्पना गौरव

अवयविनि नपीताद्युत्पत्तिः एतेन स्पर्शोपि व्याख्यातः रसादिकमपि नाव्याप्यवृत्तिः किन्तु नानाजातीयरसवद्वयवैरारब्धेऽवयविनि रसाभावेपि न क्षतिः तत्र रसनयाऽवयवरस एव गृह्यते रसनेन्द्रियादीनान्द्रव्यग्रहे सामर्थ्याभावात् अवयविनो नीरसत्वेपि क्षतेरभावात् नव्यास्तु तत्राव्याप्यवृत्त्येव नानारूपम् नीलादेः पीतादि प्रतिबन्धकत्वकल्पना गौरवात् अत एव लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते इत्यादिशास्त्रमप्युपपद्यते न चाव्याप्याव्याप्यवृत्तिजातीययोर्विरोधः मानाभावात् न च लाघवादेकं रूपम् अनुभवविरोधात् अन्यथा घटादेरपि लाघवादैक्यं स्यात्॥ १००॥ ६॥

॥ स्वन दोषत्वम्फलमुखत्वादिन्त्यन्यत्र विस्तरः स्पर्शोपि व्याख्यात इति कोमलकठिनस्पर्शवदवयवाभ्यामारब्धे घटादौ स्पर्शानङ्गीकारे घटस्यास्पार्शनापत्तिरित्यादिरीत्या चित्रस्पर्शोप्यावश्यक इति भावः अवयविनो नीरसत्वेपि क्षतेरभावादिति न च चित्रो रस इति प्रतीतिविषयातिरिक्तचित्ररससिद्धिरिति वाच्यम् तादृशप्रतीतेरवयवगतनानारसैरुपपत्तेरतिरिक्तचित्ररसतत्प्रागभावध्वंसादिकल्पने गौरवात् न चैवन्द्व्यणुकरसस्यायोग्यतया मधुरादिरसप्रतीतिनियामकाभावे नास्तु द्व्यणुके मधुरादिरसः चतुरणुकाद्यन्यावयविपर्यन्तम्मधुरादिरसवत्त्वे मानाभावः त्र्यणुकगतमधुररसेनैव मधुरादिप्रत्ययोपपत्तेरिति वाच्यम्॥ एम॰ १९६

समवायेनमधुररसम्प्रति स्वसमवायिसमवेतत्वसम्बन्धेनमधुररसत्वेनहेतुतायास्त्र्यणुकगतमधुररसान्यथानुपपत्त्या कृप्तत्वात्ता दृश
कारणवलाच्चतुरणुकादौमधुरादिरसोत्पत्तेर्दुर्वारत्वात्॥ १०० ॥ननुघटावयवेप्यापाततुपाकोनतुपरमाणावत आहनहिरक्तेति १०१।१०२

एतेनस्पर्शादिकमपिव्याख्यातमितिवदन्ति १०० जलादीति जलपरमाणौतेजःपरमाणौचरूपन्नित्यम् पृथिवीप
रमाणुरूपन्तुनेनित्यम् तत्रपाकेनरूपान्तरोत्पत्तेः नहिघटस्यपाकानन्तरन्तदवयवोऽपक्कउपलभ्यते नहिरक्तकपा
लस्यकपालिकानीलावयवाभवति एवञ्च क्रमेणपरमाणावपिपाकरूपसिद्धेः अन्यत् जलतेजःपरमाणुरूपभि
न्नरूपम् सहेतुकम् जन्यम् १०१ रसन्निरूपयति सहकारीति रासनज्ञानेरसःकारणमित्यर्थः पूर्ववदितिजलपरमाणौ

जलादिपरमाणौतन्नित्यमन्यत्सहेतुकं रसस्तुरसनाग्राह्योमधुरादिरनेकधा १०१ सहकारीरसज्ञाया
नित्यतादिचपूर्ववत् घ्राणग्राह्योभवेद्गन्धोघ्राणस्यैवोपकारकः १०२ सौरभश्चासौरभश्चसद्वेधापरिकी
र्तितः स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचःस्यादुपकारकः १०३ अनुष्णाशीतशीतोष्णभेदात्सत्रिविधोमतः॥
काठिन्यादिक्षिताचैवनित्यतादिचपूर्ववत्॥१०४॥ ॥ रसोनित्यःअन्यस्सर्वोपिरसोऽनित्यइत्यर्थः॥

गन्धन्निरूपयति घ्राणग्राह्येति घ्राणजन्यज्ञानेसहकारीसइत्यर्थः सर्वोपिगन्धोऽनित्यएव॥ १०२ स्पर्शन्निरूपयति स्प
र्शइति उपकारकइति स्पार्शनप्रत्यक्षेस्पर्शःकारणमित्यर्थः १०३ अनुष्णाशीतइति पृथिव्यांवायौचस्पर्शोनुष्णाशीतः
जलेशीतः तेजस्युष्णः कठिनसुकुमारस्पर्शौपृथिव्यामेवेत्यर्थःकठिनत्वादिकन्तुनसंयोगगतोजातिविशेषः चक्षुर्ग्राह्य
त्वापत्तेः जलतेजोवायुपरमाणुस्पर्शानित्यास्तद्भिन्नास्त्वनित्याइत्यर्थः॥ १०४॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥१०३॥ नसंयोगगतइति कठिनस्संयोगइतिप्रतीतिस्तुकठिनस्पर्शवद्द्रव्यप्रतियोगिकत्वमवगाहतइतिभावः॥१०४॥ ॥ ॥ ॥

का॰मु॰ रूपादीनाम्पाकइति रूपादीनाम्परावृत्तिरित्यर्थः पाकोनसम्भवतीति रूपादिपरावृत्तिफलकः तेजःसंयोगोनसम्भवतीत्यर्थः रूपादिपरा
टि॰ वृत्तिर्नसम्भवतीतियावत् रूपादिनाशम्प्रतिसामान्यरूप्यसाधारणसर्वावयवावच्छेदेनतेजःसंयोगस्य हेतुतयावयविनावष्टब्धेष्व
१९७ वयवेषुसत्सु अवयविनिरूपादिनाशोनसम्भवतितद्धेतोः सर्वावयवावच्छेदेनतेजःसंयोगस्याभावादितिभावः नचविद्यमानेपिघ
टादौसर्वावयवावच्छेदेनतेजःसंयोगः कुतोनोत्पद्यतइतिवाच्यम् तथासत्यारम्भकसंयोगावच्छेदेनावयविनितेजःसंयोगोत्पादका
लेतदवच्छेदेनावयवेष्वपितोदनाभिघातयोरन्यतरस्योत्पादनियमेनावयवेषुविभागहेतुक्रियोत्पादेनारम्भकसंयोगनाशादवयविना

एतेषाम् रूपरसगन्धस्पर्शानाम् नान्यत्रेति पृथिव्यांहि रूपरसगन्धस्पर्शपरावृत्तिरग्निसंयोगादुपलभ्यते नहि
शतधाध्मायमानेजलेरूपादिकम्परिवर्तते नीरेसौरभमौष्ण्यञ्चान्वयव्यतिरेकाभ्यामौपाधिकमेवेतिनिर्णीयतेपवनपृथि

एतेषाम्पाकजत्वन्तुक्षितौनान्यत्रकुत्रचित् तत्रापिपरमाणौस्यात्पाकोवैशेषिकेनये॥ १०५॥ ६॥

व्योः शीतस्पर्शादिवत् तत्रापिपार्थिवेष्वपिमध्येपरमाणावेव रूपादीनाम्पाकइतिवैशेषिकावदन्तितेषामयमाश
यः अवयविनावष्टब्धेष्ववयवेषुपाकोनसम्भवति॥ रोश्यापत्तेः नचावयवेषुतेजोभिघातानन्तरम्पञ्चमक्षणएवावयविनाशस्य
वेनतत्पूर्वमवयविनिरूपादिनाशोत्पादाभ्युपगमेबाधकाभावइतिवाच्यम् तत्रपूर्वावयविनाशावयव्यन्तरोत्पादयोरावश्यकत्वात्पूर्वावय
विनिरूपादिपरावृत्तिजनकविजातीयतेजःसंयोगस्यमानाभावेनाकल्पनात् अवयविरूपनाशेआश्रयनाशस्यहेतुत्वात्पाकजन्यत्वस्य राम
कार्यतावच्छेदककोटिप्रवेशेगौरवादवयविनाशंविनापाकेनावयविरूपनाशासम्भवादवयविनीलादावव यव नीलादेर्हेतुतया १९७
व्यभिचारापत्त्यापाकेनावयविनिनीलाद्युत्पादासम्भवाच्चेत्यभिमानः ॥ ६॥ ७॥ ४॥ ७॥ १॥ ८॥ ७॥ ७॥ ८॥

अवयविषु विनष्टेष्विति घटाद्यारम्भककपालादिपरमाणुपर्यन्तेष्वग्निसंयोगेन पूर्वोक्तरीत्या घटादिद्व्यणुकपर्यन्तेषु नाशसम्भवादिति भावः स्वतन्त्रेषु कार्यद्रव्यध्वंसविशिष्टेषु न तु तत्रस्थस्थानभेदादिः कथन्न प्रतीयत इत्यत आह तेजसामिति व्यूहः संस्थानम् वैशेषिकसुत्पत्तिः प्रक्रिया द्व्यणुकनाशादिरूपा गुणोत्पत्तिक्षणनिरूपणं क्रियत इति शेषः विभागजविभागानङ्गीकार इति कारणाकारणविभागात्कार्याकार्यविभागवत्कारणमात्रविभागात्कारणाकारणविभागानङ्गीकार इत्यर्थः द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियायास्तद्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वनियमे मानाभावादिति भावः ॥ अत्र च विभागग्रन्थे वक्ष्यमाणविकसत्कमलभङ्गप्रसङ्गभिया उक्तनियमाङ्गीकार आवश्यकः ॥ एवञ्च द्व्यणुकारम्भकपरमाणुक्रियया यत्र द्व्यणुकारम्भकसंयोगप्रतिद्वन्द्विविभागो जनितस्तत्र

परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः पुनश्च पक्वपरमाणुसंयोगाद्व्यणुकादिक्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति अथ द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पन्ने रूपादिमद्भवतीति शिष्यबुद्धिवैशद्याय क्षणप्रक्रिया ॥ तत्र विभागजविभागानङ्गीकारे नवक्षणाः । तदङ्गीकारे तु विभागः किञ्चित्सापेक्षो विभागञ्जनयेत् ॥ ॥ ॥ ॥ ॥

यातत्परमाणुक्रियया तत्परमाण्वाकाशसंयोगप्रतिद्वन्द्विविभागोत्पत्तिर्न सम्भवति न च मास्तु तत्र परमाण्वाकाशविभागः का क्षतिरिति वाच्यम् ॥ तथा सति नाशकविभागाभावेन परमाण्वाकाशसंयोगस्य नित्यत्वापत्तेः ॥ एवम्परमाण्वाकाशसंयोगरूपस्य पूर्वदेशसंयोगस्य प्रतिबन्धकस्य सत्त्वात्परमाणावुत्तरदेशसंयोगानुत्पत्त्या परमाणुगतक्रियानाशानुपपत्तेश्च अतस्तादृशपरमाण्वाकाशविभागजनकः ॥ परमाण्वोर्विभागो वाच्य इत्यभिप्रायवानाह तदङ्गीकारे त्विति ॥ अनयोः पक्षयोः प्रथमपक्ष एव सम्यक् यदवच्छेदेन कमलारम्भकसंयोगस्तदवच्छेदेन क्रियानुत्पत्त्या च न विकसत्कमलभङ्गप्रसङ्ग इति ध्येयम् ॥ ॥ ॥

का॰मु॰ तत्वेविभागजनकत्वे कर्मत्वम् कर्मलक्षणस्यातिव्याप्तिः संयोगविभागयोरनपेक्षङ्कारणङ्कर्मेतिसूत्रस्यसंयोगस्यविभागस्यचानपेक्षङ्का
दि॰ रणङ्कर्मेति लक्षणद्वयेतात्पर्यमित्यभिप्रायेणद्वितीयलक्षणस्यतत्रातिव्याप्त्यभिधानमिदम् वस्तुतस्तुसंयोगविभागयोरनपेक्षङ्कारणङ्कर्मे
१९८ तिसूत्रम् तत्रसंयोगस्यानपेक्षङ्कारणमित्युक्तौकारणाकारणसंयोगेऽतिव्याप्तिस्तस्यकार्याकार्यसं[illegible]गोकिञ्चिदनपेक्ष्यकारणत्वात् एवम्वि
भागस्यानपेक्षमित्युक्तौकारणाकारणविभागेऽतिव्याप्तिरत उक्तंसंयोगविभागयोरिति। अनपेक्ष[illegible]त्वस्योत्तरोत्पन्नभावानपेक्षत्वम् अन्यथाक
र्मणोपिसंयोगजननेद्रव्यस्यपूर्वसंयोगनाशस्यचापेक्षणादसम्भवापत्तेः विभागासमवायिकारणत्वेसतिसंयोगहेतुत्वंवातत् पूर्वदेशविभा
गस्तुनोत्तरदेशसंयोगेकारणम् व्यवहाराभावेनान्यथासिद्धेः संयोगस्यविभागम्प्रतिकारणत्वाभावादेवनासमवायिकारणत्वमितिनतत्रा

निरपेक्षस्यतत्वेकर्मत्वंस्यात् संयोगविभागयोरनपेक्षङ्कारणङ्कर्मेतिहिवैशेषिकम्सूत्रम् स्वोत्तरोत्पन्नभा
वानापेक्षत्वन्तस्यार्थः अन्यथाकर्मणोप्युत्तरसंयोगोत्पत्तौ पूर्वसंयोगनाशापेक्षणादव्याप्तिःस्यात् तत्रयदिद्र
व्यारम्भकसंयोगविनाशविशिष्टङ्कालमपेक्ष्यविभागजविभागःस्यात्तदादशक्षणाः अथद्रव्यनाशविशिष्टङ्काल
मपेक्ष्यविभागजविभागःस्यात्तदैकादशक्षणाः॥ तथाहि अथनवक्षणावह्निसंयोगात्परमाणौकर्मततःपरमा
ण्वन्तरेणविभागःततःआरम्भकसंयोगनाशःततोद्व्यणुकनाशः।१॥

तिव्याप्तिः। इत्थञ्चकारणमात्रविभागस्यपूर्वसंयोगनाशन्द्रव्यनाशञ्चानपेक्ष्यकारणाकारणविभागजनकत्वेपिनातिव्याप्तिः तस्यविभाग
जनकत्वेपिसंयोगविभागोभयजनकत्वाभावादितिध्येयम् द्रव्यारम्भकसंयोगविनाशविशिष्टङ्कालमपेक्ष्येति द्रव्यारम्भकसंयोगना
शोत्पत्त्यधिकरणक्षणोत्तरक्षणइत्यर्थः कारणतात्तुद्रव्यारम्भकसंयोगनाशत्वेनैव लाघवादितिध्येयम् एवमग्रेपिनवदशैकादशक्षणाः
प्रक्रियाः क्रमेणोपपादयति तथाहीत्यादिना परमाणौकर्मद्व्यणुकारम्भकपरमाण्वोर्मध्येएकस्मिन्परमाणौकर्मपरमाण्वन्तरेण द्व्य एम॰
णुकारम्भकपरमाण्वन्तरेण आरम्भकेति द्व्यणुकारम्भकेत्यर्थः॥ श्रीः६॥ ॥६॥ ॥ ३॥ ॥७॥ ॥६॥ ॥७॥ ॥७॥७॥६॥ १९८

ततःपरमाणौश्यामादिनाशइति परमाणुगतरूपनाशश्चेति द्व्यणुकात्मकद्रव्यस्यप्रतिबन्धकत्वात्ततः पूर्वं श्यामनाशासम्भवादिति भावः ॥
द्रव्यारम्भकेति द्व्यणुकारम्भकेत्यर्थः॥ आरम्भकेति द्व्यणुकारम्भकेत्यर्थः तद्विनाशमन्तरेणेति द्व्यणुकनाशोत्पत्तिक्षणोत्पत्तिकोत्तरसंयोगेनश्याम
नाशक्षणएवपूर्वक्रियानाशइतिभावः परमाणौक्रियान्तराभावादिति तस्मिन्परमाणौक्रियान्तराभावादित्यर्थः अत्रहेतुमाह कर्मवतीति ॥
कर्मवतिकर्मान्तरानुदयेनकर्मोत्पत्तौकर्मणः प्रतिबन्धकत्वकल्पनादितिभावः गुणोत्पत्तिमन्तरेणकर्मानुत्पत्तौहेतुमाह॥ निर्गुणइति कार

ततःपरमाणौश्यामादिनाशः २ ततोरक्ताद्युत्पत्तिः ३ ततोद्रव्यारम्भानुगुणाक्रिया ४ ततोविभागः ५ ततःपूर्वसं
योगनाशः ६ ततआरम्भकसंयोगः ७ ततोद्व्यणुकोत्पत्तिः ८ ततोरूपाद्युत्पत्तिः ९ इतिनवक्षणा। ननुश्यामा
दिनाशक्षणे रक्तोत्पत्तिक्षणेवापरमाणौद्रव्यारम्भानुगुणाक्रियाऽस्त्वितिचेन्न अग्निसंयुक्तेपरमाणौयत्कर्मतद्वि
नाशमन्तरेणगुणोत्पत्तिमन्तरेणचपरमाणौक्रियान्तराभावात् कर्मवतिकर्मान्तरानुत्पत्तेः निर्गुणेद्रव्येद्रव्यारम्भा
नुगुणक्रियानुपपत्तेश्च तथापिपरमाणौश्यामादिनिवृत्तिसमकालेरक्ताद्युत्पत्तिः स्यादितिचेन्न पूर्वरूपा
दिध्वंसस्यापिरूपान्तरेहेतुत्वात्॥ अथदशक्षणा॥ सचारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्यवि
भागेनविभागजननेसतिस्यात् तथाहि वह्निसंयोगाद्व्यणुकारम्भकेपरमाणौकर्मततोविभागः ततआर
॥१ ॥ म्भकसंयोगनाशः॥ २॥ ३॥ ४॥

णमात्रविभागस्यकारणाकारणविभागजनकत्वाभाव पक्षएवपरमाण्वन्तरेकर्मचिन्तनंविनैवग्रन्थान्तरेऽष्टक्षणाप्रक्रियोक्ता साचनिर्गुणे
द्रव्यारम्भानुगुणक्रियोत्पत्तौबाधकाभावेनरक्तोत्पत्तिक्षणएवद्रव्यारम्भानुगुणक्रियोत्पत्तिः सम्भवतीत्यभिप्रायेणसमर्थनीयाविभागेनवि
भागजननइति कारणमात्रविभागेनकारणाकारणविभागजननेसतीत्यर्थः ॥५॥ ६॥ ७॥ ८॥ ९॥ १०॥ ११॥ १२॥

का०मु० दि० १९९

विभागजविभागाविति आरम्भकसंयोगनाशस्तृतीयक्षणएवोत्पन्नतयाचतुर्थक्षणे परमाण्वाकाशविभागः सम्भवतीतिभावः ततः श्याम नाशपूर्वसंयोगनाशाविति परमाणुश्यामनाशपरमाण्वाकाशसंयोगनाशावित्यर्थः परमाणुश्यामनाशम्प्रति द्व्यणुकनाशस्य हेतुत्वात्पूर्वम्परमा णुश्यामेनाशासम्भवादितिभावः रक्तोत्पत्त्युत्तरसंयोगाविति उत्तरसंयोगं विना पूर्वकर्मणोनाशासम्भवेन द्रव्यारम्भानुगुणक्रियानुत्पत्तिरितिभा वः एवमग्रेपि अत्र पश्वाग्निसंयोगाद्व्यणुकनाशकः सएव श्यामनाशेरक्तोत्पादेच हेतुरिति केषाञ्चिन्मतस्पुनरग्न्यन्तरसंयोगादितिभाष्यवि रुद्धत्वादरणीयमित्यभिप्रेत्याह मध्यमशब्दवदिति एकस्मादिति द्व्यणुकनाशकादेकस्मादित्यर्थः यथा मध्यमशब्दात्पूर्वशब्दनाशोत्तरशब्दो

ततोद्व्यणुकनाशविभागजविभागौ १ ततः श्यामनाशपूर्वसंयोगनाशौ २ ततोरक्तोत्पत्त्युत्तरसंयोगौ ३ ततोवन्हिनोदन जन्यपरमाणुकर्मणोनाशः ४ ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानुगुणाक्रिया ५ ततोविभागः ६ ततश्चपूर्वसं योगनाशः ७ ततआरम्भकसंयोगः ८ ततोद्व्यणुकोत्पत्तिः ९ ततोरक्तोत्पत्तिः १० अथैकादशक्षणा ॥ वन्हिसंयोगात्पर माणौकर्मततोविभागः ततोद्रव्यारम्भकसंयोगनाशः ततोद्व्यणुकनाशः १ ततोद्व्यणुकनाशविशिष्टकालमपेक्ष्यवि भागजविभागश्यामनाशौ २ ततः पूर्वसंयोगनाशरक्तोत्पत्ती ३ ततउत्तरदेशसंयोगः ४ ततोवन्हिनोदनजन्यप रमाणौकर्मनाशः ५ ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानुगुणाक्रिया ६ ततोविभागः ७ ततः पूर्वसंयोगना शः ८ ततोद्रव्यारम्भकोत्तरसंयोगः ९ ततोद्व्यणुकोत्पत्तिः १० ततोरक्ताद्युत्पत्तिः ११ मध्यशब्दवदेकस्माद ग्निसंयोगात्तद्रूपनाशोत्पादौ तावत्कालमेकस्याग्नेरस्थिरत्वात् ॥ श्री६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

त्पादौभवतस्तथैकस्माद्व्यणुकनाशकादग्निसंयोगाच्छ्यामनाशरक्तोत्पादौनभवतइतिव्यतिरेकेदृष्टान्तः तावत्कालमिति श्यामनाशोत्पत्त्यव्यवहि तपूर्वक्षणपर्यन्तमित्यर्थः अग्नेः द्व्यणुकनाशकाग्निसंयोगस्यएवमग्रेपिअस्थिरत्वादितियद्यपरमाणावग्निसंयोगाद्व्यणुकासमवायिकारणसंयोग राम० विनाशकपरमाणौकर्मतदैवनोदनाभिघाता[illegible]कर्मतस्यविनाशः कर्मणः स्वजन्यसंयो ॥ ६ ॥ ६ ॥ १९९

गविनाश्यत्वात् न तु तत्क्षणे पुनरन्यो कर्मकारणीभूतवेगाभिघातादेः स्वसमानाधिकरणकर्मध्वंसरूपसहकारिणश्च सत्त्वात् ततो विभागः ततो द्व्यणुकनाशसमकालमग्निपरमाणुसंयोगस्य नाशेन श्यामरूपोत्पत्त्यव्यवहितपूर्वक्षणपर्यन्तस्य स्थिरत्वादिति भावः ॥ ॥ ननु मास्तु द्व्यणुकनाशकाग्निसंयोगस्य परमाणुश्यामनाशकत्वं रक्तोत्पादकत्वञ्च परन्तु द्व्यणुकनाशसमकालोत्पन्नाग्न्यन्तरसंयोगस्य परमाणोः श्यामनाशकत्वं रक्तोत्पादकत्वञ्चास्तु न च श्यामनाशकतावच्छेदकरक्तोत्पादकतावच्छेदकजात्योः साङ्कर्यापत्तिरिति वाच्यम् उत्पादकतावच्छेदकजातेर्नाशकतावच्छेदकजातिव्याप्यत्वोपगमादत आह किञ्चेति नाशक एव यद्युत्पादक इति एवकारेण नाशकतावच्छेदकवह्नित्वादित्वरूपाव्याप्तिरुत्पादकतावच्छेदके लभ्यते तथा च यद्युत्पादकतावच्छेदकं नाशकतावच्छेदकव्याप्यं तदेत्यर्थः नष्टे रूपादौ नीरूपपरमाणुतया नष्टायामग्निनाशे चरमाग्निसंयोगनाशे परमाणौ पाकेन रूपोत्पत्तिस्थले प्रथमाग्निसंयोगादिना रूपोत्पत्तिस्तेनैव रूपनाशः पुनरग्निसंयोगानन्तरमु

किञ्च नाशक एवोत्पादकस्तदा नष्टे रूपादावग्निनाशे नीरूपश्चिरम्परमाणुः स्यात् उत्पा
दकश्चेन्नाशकस्तदा रक्तोत्पत्तौ न दृश्येत नाशो रक्ततरत्वानस्यात् ॥ श्री ६ ॥ ई ॥ छ ॥ छ ॥ छ ॥

नारूपोत्पत्तिसम्भवेऽपि चरमाग्निसंयोगोत्तरन्तेन पुना रूपोत्पादेन रूपसत्त्वे तेनैवाग्निसंयोगेन नाशसम्भवात् तदग्निसंयोगस्यापि नाशे रूपान्तरोत्पादासम्भवेन नीरूपश्चिरम्परमाणुः स्यादित्यर्थः न च चरमाग्निसंयोगेन विनश्यदवस्थेनैव रूपोत्पत्तिस्तदुत्तरक्षणे च तद्रूपनाशः पूर्वक्षणेऽग्निसंयोगाभावादिति वाच्यम् ॥ असमवायिकारणस्य कार्यसहभावेनैव हेतुतायाः न्यायवैशेषिकसिद्धान्तसिद्धतया विनश्यदवस्थेन चरमाग्निसंयोगेन रूपोत्पादासम्भवादिति परमाणुरिति वैशेषिकमताभिप्रायेण न्यायेन पूर्वोक्तरीत्या घटादेरपि नीरूपत्वप्रसङ्गो बोध्यः ननु रक्तोत्पादकतावच्छेदकवैजात्यं श्यामनाशकतावच्छेदकवैजात्यव्याप्यमिति न ब्रूमः परन्तु वैजात्ययोरभेद इत्यतेन न साङ्कर्यमत आह उत्पादकश्चेदिति ॥ चेन्नाशक उत्पादक इति योजना नाशकतावच्छेदकमेव यद्युत्पादकतावच्छेदकं तदेत्यर्थः रक्ततरत्वानस्यादिति ॥ ६ ॥ छ ॥ छ ॥ छ

विशिष्टविषयकत्वस्यैवकार्यतावच्छेदकत्वकल्पनेनैवनिर्वाहात् न्यायनयेतु प्रवृत्तित्वावच्छिन्नम्प्रतिविशिष्टज्ञानत्वेन हेतुत्वान्तरकल्पनेगौरवमिति ननरजतरोधेनकल्पनीयभ्रमात्मकरजतज्ञानार्थंज्ञानलक्षणाप्रत्यासत्त्याद्यदृतिकारणबाधाद्युपाधिजमेवमिथ्याज्ञानमित्याशङ्काम्मनसिनिधायस्थलविशेषेकारणबाधाभावादनिवार्यमेवमिथ्याज्ञानमित्याह किञ्चेत्यादिना यत्ररजतेरजतभेदग्रहोननवारङ्गेरजतभेदग्रहस्तत्रसतियुगपदिन्द्रियसन्निकर्षेरजतरङ्गयोरिमेरजतेइतिज्ञानेनकिमपिबाधकम् रजतत्वेनसमंसंयुक्तसमवायस्यसत्त्वात् ताद्दृशञ्च ज्ञानंरङ्गांशेनप्रमात्मकंविशेषणवद्विशेष्यसन्निकर्षरूपप्रमासामग्र्यभावात् किन्त्वन्यथाख्यातिरेवेतिभावः॥ ननुतद्विशेष्येनतद्विशिष्टबुद्धिम्प्रतितन्नद्विशेषणेनतद्विशेष्यघटितसन्निकर्षोहेतुरन्यथातिप्रसङ्गात् तथाचकथंरजतघटितसंयुक्तसमवायेनरङ्गेरजतत्वग्रहइत्यतआह अपिचेति अन्यथाख्यातिभयादित्यनन्तरङ्गेरङ्गभेदाग्रहस्यरजतेरजतभेदाग्र

किञ्चयत्ररङ्गरजतयोरिमेरजतेरङ्गेवेतिज्ञानञ्ज्ञाततत्रनकारणबाधोपि अपिचयत्ररङ्गरजतयोरिमेरजतरङ्गेइतिज्ञानन्तत्रोभयत्रयुगपत्प्रवृत्तिनिवृत्तीस्यातांम् रङ्गेरङ्गभेदग्रहरजतेरजतभेदग्रहेचान्यथाख्यातिभयात् त्वन्मतेदोषादेवरङ्गेरजतभेदाग्रहस्यरजतेरङ्गभेदाग्रहस्यचसत्त्वात् किञ्चानुमितिम्प्रतिभेदाग्रहस्यहेतुत्वेनलहृदेवह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा॥

(१)हस्येतिपूरितस्यसत्त्वादित्यनेनान्वयः। अनेनरङ्गेऽनिष्टभेदाग्रहरूपानिवृत्तिसामग्री रजतेइष्टभेदाग्रहरूपाप्रवृत्तिसामग्रीचप्रदर्शिनारङ्गेरजतभेदाग्रहस्येत्यादिनाचरङ्गेइष्टभेदाग्रहरूपाप्रवृत्तिसामग्रीरजतेऽनिष्टभेदाग्रहरूपानिवृत्तिसामग्रीचप्रदर्शिता दोषादेवेतित्वन्मतेन्यायाभिमतभ्रमस्थलाभिषिक्तभेदाग्रहम्प्रतिदोषस्यहेतुत्वादितिभावः॥इदञ्चेष्टभेदाग्रहः प्रवृत्तिकारणमनिष्टभेदाग्रहो निवृत्तिकारणमिति यथाश्रुताभिप्रायेण इष्टभेदोपस्थितिविशिष्टेष्टभेदासंसर्गाग्रहः प्रतिबन्धकत्वरभावः कारणमितिदर्शितंनिष्कर्षेतुरजतभेदोपस्थितिविशिष्टरजतभेदासंसर्गग्रहस्यप्रतिबन्धकस्यरङ्गेऽभावादितिरीत्यासामग्रीबोध्यानतुरङ्गेरजतभेदाग्रहप्रयोजकदोषस्यप्रतिबन्धकत्वान्नरङ्गे निवृत्तिरेवंरजतेरङ्गभेदाग्रहप्र

न्तरजनने प्रवृत्तिरिति कथं युगपत्प्रवृत्तिनिवृत्त्योरापादनमित्यत आह किञ्चेति भेदाग्रहस्य व्याप्यवह्नेदाग्रहस्य अनुमितिर्निराबाधेति सति
बाधाभावेऽन्यथाख्यातिरूपानुमितिर्निराबाधेत्यर्थः॥४॥ आपत्तितमिति अन्यथाख्यातिरूपमापत्तितमित्यर्थः ननु ह्रदे वह्निव्याप्यधूम
वह्नेदाग्रहान्नह्रदो वह्निमानित्यन्यथाख्यातिरू पानुमितिः परन्त्वगृहीतासंसर्गकज्ञानद्वयमेवात्रोत्पद्यते न च तत्र विशिष्टज्ञानोत्पत्तौ बाध
काभावः व्याप्यवह्नेदाग्रहस्य ह्रदो वह्निमानित्यन्यथाख्यातिरूपानुमिति कारणस्य सत्त्वादिति वाच्यम् अन्यथाख्यातौ प्रमाणाभावेन तादृश
कार्यकारणभावस्याकल्पनादित्यस्तत्र प्रमाणम्प्रदर्शयति इत्यञ्चेति यद्यानन्त्वनुमितिम्प्रति विशिष्टज्ञाने सैव हेतुत्वं यत्र च न तादृशविशिष्ट
बोधस्य सामग्री तत्र लिङ्गासंसर्गाग्रहात् लिङ्ग्यसंसर्गाग्रहस्यैव परै रुपगमात्तापः पिण्डे वह्न्यनुमित्यनुरोधादन्यथाख्यातिरित्यत आह इ
त्यञ्चेति चकारोऽप्यर्थः ननु तादृशानुव्यवसायो नेदं विशेष्यकज्ञाने रजतत्वप्रकारकत्वविशिष्टबुद्धिरूपः परन्तु रजतत्वप्रकारकत्वासं

यदि च विशिष्टज्ञानङ्कारणन्तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितं सेयमुभयतः पा
शा रज्जुः इत्यञ्चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणम् रङ्गं रजततयाऽवेदिषमित्यनुभवादिति संङ्क्षेपः ।१३२।
१३३।१३४।१३५।१३६। पूर्वैर्व्याप्तिरुक्तानङ्ग्रहोपायस्तु न दर्शित इत्यतस्तान्दर्शयति व्यभिचारेति व्यभिचारग्रहस्य
संसर्गाग्रहरूप एवेत्यत आह ॥ सङ्क्षेप इति ॥ विद्यमानेपि भेदग्रहे आहार्य व्याप्तिग्रहे प्रतिबन्धकत्वान्न दूषणं प्रकारण
प्रत्यक्षोत्पादादिच्छायाउत्तेजकत्वं वाच्यम् इच्छाया उत्तेजकत्वानुरोधेन चानुमितित्वादीनामेव कार्यतावच्छेदकत्वात् प्रवृत्तित्वाव
च्छिन्नम्प्रति भेदाग्रहाभावत्वेन पृथक्कारणत्वे न गौरवापत्त्या विशिष्टज्ञानत्वेनैव तत्र हेतुताकल्पनीयेति विसम्वादिप्रवृत्त्यनुरोधेनान्य
थाख्यातिर्दुर्वारैवेति भावः ननु प्रामाण्यमनुमानगम्यन्तदा भवेद्यद्यनुमानम्प्रमाणम्भवेत्तदेव न सम्भवति व्याप्तेर्ग्राहकाभावेनाज्ञाना
दित्यतः प्रामाण्यानुमितिप्रयोजकतया व्यभिचारस्याग्रहोऽथ सहचारग्रहस्तथेति मूलेन व्याप्तिग्रहोपायो दर्श्यते स चायुक्तः स्वका
रणीभूतव्याप्तिस्वरूपज्ञानाभावादित्यत आह पूर्वैर्व्याप्तिरुक्तेति व्यभिचारग्रहस्य व्याप्तिग्राहकतामुपपादयन्ति ॥ ६ ॥ ७ ॥ ८ ॥

व्यभिचारग्रहस्येति सहचारग्रहस्यतामुपपादयति एवमिति भूयोदर्शनस्य कारणत्वं खण्डयति भूयोदर्शनन्त्विति व्यतिरेकव्यभिचारमाह सकृद्दर्शनेपीति भूयोदर्शनस्याहेतुत्वेपि क्वचित्प्रयोजकतयातदादरइत्याह क्वचिदिति तर्कोऽपेक्षितइतिशङ्कापनयनार्थं तर्कोऽपेक्षितइत्यर्थः॥ तद्दर्शयति तथाहीत्यादिना यद्ययमिति अयन्धूमवान्पर्वतः कारणंविनेति तथाचधूमोवन्हिव्यभिचारीस्यादि

व्यभिचारग्रहस्यव्याप्तिग्रहेप्रतिबन्धकत्वात्तदभावः कारणमित्यर्थः एवमन्वयव्यतिरेकाभ्यांसहचारग्रहस्यापिहेतुता भूयोदर्शनन्तुनकारणम् व्यभिचारास्फूर्तौसकृद्दर्शनेपि क्वचिद्व्याप्तिग्रहात् क्वचिद्व्यभिचारशङ्काविधूननद्वाराभूयोदर्शनमुपयुज्यते यत्रतुभूयोदर्शनादपिशङ्कानापैतितत्रविपक्षेबाधकतर्कोपेक्षितः तथाहि वन्हिविरहिण्यपिधूमःस्यादिति

व्यभिचारस्याग्रहोपिसहचारग्रहस्तथा॥ हेतुर्व्याप्तिग्रहेतर्कः क्वचिच्छङ्कानिवर्तकः॥ १३७॥ ६॥

यद्याशङ्काभवति तदासाववन्हिधूमयोः कार्यकारणभावस्यप्रतिसन्धानान्निवर्तते यद्ययंवन्हिमान्नस्यात्तदाधूमवान्नस्यात्कारणंविनाकार्यानुपपत्तेः यदिचक्वचित्कारणंविनाकार्यम्भविष्यति तदाऽहेतुकएवभविष्यतीति तत्राप्याशङ्काभवेत् ॥ तदासाव्याघातादपसारणीया यदिहिकारणम्विनाकार्यंस्यात्तदाधूमार्थंवन्हेस्तृप्त्यर्थम्भोजनस्य नियमतउपादानन्तवैवनस्यादिति॥ ६॥ ६॥

न्हिजन्योनस्यादिति तर्काकारोबोध्यः॥यथाश्रुतेवन्हिमान्नस्याद्धूमवान्नस्यादिति तर्कस्यविषयपरिशोधकस्यव्याप्तिग्रहानौपयिकत्वात्सङ्गतेः॥तत्रापितादृशतर्ककारणीभूतकार्यकारणभावग्रहेपि।आशङ्काभवेत् आशङ्काप्रतिबन्धिकाभवेत् व्याघातमेवदर्शयति यदिहीत्यादिना

ननु तर्कस्यान्यापाद्यव्याप्यापादकवत्ताज्ञानं कारणं तत्र व्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिवर्तकस्तर्कोऽपेक्षित एव मग्रेपीम नवस्थेत्यत आह यत्रेति स्वत एव शङ्कासामग्रीविरहादेव न तर्कापेक्षेत्यनन्तरमतो नानवस्थेति शेषः। ननु तर्कस्य न व्यभिचारशङ्कानिवर्तकत्वं तर्ककारणीभूतव्याप्तिज्ञानेनैव तन्निवृत्तेः सम्भवादिति चेदत्र केचित् अनाहार्यशङ्कायास्तर्ककारणीभूतज्ञानेन निरासंभवेप्याहार्यशङ्कायास्ततो निवृत्तिर्न सम्भवति आहार्यज्ञानस्य तदप्रतिबध्यत्वात्किन्तु तर्केणैव तथाहि अनिष्टप्रसञ्जनात्मकेन तर्केणापादकज्ञाने आपाद्यज्ञानरूपानिष्टसाधनत्वज्ञानजनन द्वारा पादकज्ञाने द्वेषो जन्यते तेन चापादकज्ञाने इच्छाप्रतिबन्धः क्रियते॥ एवञ्चेच्छारूपकारणविरहादेवनाहार्यशङ्कोत्पत्तिरित्यर्थं वश सम्भवत्येव तर्केण निवर्तकत्वमिति केचित्तु तर्कस्य शङ्कानिवर्तकत्वं व्याप्तिज्ञानकारणीभूतो यो व्यभिचारशङ्काविरहस्तत्सम्पादकत्वम् एवञ्च व्यभिचारशङ्काप्रतिबन्धकतायां तर्कस्योत्तेजकत

यत्र स्वत एव शङ्कानावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तं तर्कः क्वचिच्छङ्कानिवर्तक इति इदानीम्परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिन्निरूपयितुमाह॥ ७॥ १॥ १॥ ७॥

योत्तेजकाभावविशिष्टव्यभिचारशङ्काविरहसम्पादकत्वमक्षुण्णमेव तर्कस्येत्याहुः परे तु तदापादककापत्तित्वेनाहार्यानाहार्यसाधारणतद्विशिष्टबुद्धित्वावच्छिन्नम्प्रति प्रतिबन्धकतया तर्कस्य व्यभिचारशङ्कानिवर्तकत्वमित्याहुः तर्कश्चाहार्यारोपविशेषः॥ तत्त्वञ्च मानसत्वव्याप्यो जातिविशेषस्तर्कयामीत्यनुभवात् जिज्ञासाविशेषनिवर्तकतया वा सिद्ध इति तर्कश्च द्विविधो विषयपरिशोधको व्याप्तिग्राहकश्चेति॥ तत्र विषयपरिशोधको निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः॥ धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्यादिश्च व्याप्तिग्राहकः॥ विस्तरस्तु अन्यत्रानुसन्धेयः॥ इदानीम्व्याप्तिग्रहोपायनिरूपणोत्तरम्व्याप्तिनिश्चयाभावप्रयोजकव्यभिचारशङ्काकारणज्ञानविषयत्वेनोपाधेः स्मरणे सति तथा च प्रसङ्गसङ्गत्योपाधिनिरूपणमिति भावः॥ १॥ ७॥ ७॥ ७॥ 

सिद्धिविषयत्वरूपसाध्यत्वस्यसिद्धिजनकत्वरूपसाधनत्वस्यचसोपाधावभावादभिमतेति। योयदवच्छिन्नव्यापकत्वेसतियदवच्छिन्नाव्यापकः सतदवच्छिन्नसाध्यकतदवच्छिन्नहेतावुपाधिरित्यर्थः। यथाश्रुतेभिमतस्यविशेषणत्वेयत्रनतदभिमानस्तत्राव्याप्तिःस्यात्॥ यदवच्छिन्नविवक्षणाद्गुणकर्मान्यत्वविशिष्टसत्तावाञ्जातिमत्त्वादित्यादौसंयोगोगुणकर्मान्यत्वविशिष्टसत्तात्वादित्यादौचनाव्याप्त्यतिव्याप्ती व्यापकत्वाव्यापकत्वेएकप्रकारेणैकसम्बन्धेनचविवक्षिते। तेनद्रव्यत्वत्वेनसमवायसम्बन्धेनचवह्निम्प्रतिव्यापकस्यद्रव्यत्वस्यहित्वादिनासंयोगादिसम्बन्धेनचधूमम्प्रत्यव्यापकत्वेपिवह्निमान्धूमादित्यत्रद्रव्यत्वादौनातिव्याप्तिः॥ सश्यामइति काकः श्यामो मित्रातनयत्वा

साध्यस्येति साध्यत्वाभिमतव्यापकत्वेसतिसाधनत्वाभिमताव्यापकत्वमुपाधिरित्यर्थः॥ ननुसश्यामोमित्रातनयत्वादित्यत्रशाकपाकजन्यत्वन्नोपाधिःस्यात्तस्यसाध्यव्यापकत्वाभावाच्छ्यामत्वस्यघटादावपिसत्त्वात् एवंवायुःप्रत्यक्षःप्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वन्नोपाधिःस्यात् प्रत्यक्षत्वस्यात्मादिषुसत्त्वात् तत्रचरूपाभावात् एवंध्वंसो

साध्यस्यव्यापकोयस्तुहेतोरव्यापकस्तथा॥ सउपाधिर्भवेत्तस्यनिष्कर्षोयम्प्रदर्श्यते॥१३८॥छै॥

विनाशीजन्यत्वादित्यत्रभावत्वन्नोपाधिःस्याद्विनाशित्वस्यप्रागभावेसत्त्वात् तत्रभावत्वाभावादितिचेन्न यद्धर्मावच्छिन्नसाध्यव्यापकत्वन्तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थेतात्पर्यात्॥ १ दित्यादावित्यर्थः तेनवक्ष्यमाणेनध्वंसोविनाशीजन्यत्वादित्यनेननपौनरुक्त्यम् अस्यसाधनावच्छिन्नसाध्यव्यापकत्वादग्रिमस्यसाधनरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात् साध्याव्यापकत्वमुपपादयति॥ श्यामत्वस्येति। ननुसाधनावच्छिन्नसाध्यव्यापकत्वेविवक्षणीयमतोनोक्ताव्याप्तिरतःपक्षधर्मावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिमाह एवंवायुरिति। अत्रप्रत्यक्षम्प्रत्युद्भूतरूपस्यव्यापकत्वेरूपस्यतुतदव्यापकत्वमित्युद्भूतपदम्व्यर्थन्तथाप्युपाधेःसाध्यव्यापकत्वेकार्यकारणभावलक्षणानुकूलतर्कदर्शनार्थन्तदितिध्येयम् पक्षधर्मावच्छिन्नसाध्यव्यापकत्वोक्तौतुपूर्वोक्तिशाकपाकजत्वाव्याप्तिरितिभावः अव्याप्तीःपरि-

का॰मु॰ मित्वाननयत्वेत्यादिना ॥ व्यभिचारिणिनित्यादिवायुः प्रत्यक्षोद्भूतस्पर्शवत्त्वादित्यादौ प्रत्यक्षत्वरूपसाध्याधिकरणमात्मा उद्भूतरूपात्मकोपाधिशून्यं
दि॰ साध्यव्यभिचाराधिकरणञ्च गगनन्तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वस्योद्भूतरूपेऽभावादुक्तमुपाध्यधिकरणमिति उद्भूतरूपाधिकर
२१६ णपरमाणवाकाशान्यतरत्वावच्छिन्नसाध्याप्रसिध्यानद्दोषतादवस्थ्यमतः साध्याधिकरणमिति। उद्भूतरूपाधिकरणम् यत्प्रत्यक्षत्वाधिक
रणंघटादिस्तद्भिन्नद्रव्यत्वाव्यापकधर्मावच्छिन्नसाध्यव्यापकत्वाभावादुक्तंपक्षेत्यादि तत्रापिसाध्यव्यभिचाराधिकरणपरमाणुघटान्य
तरत्वावच्छिन्नद्रव्यत्वात्मकसाधनव्यापकत्वादुपाधिशून्यमिति तत्रैवोपाध्यधिकरणसाध्याधिकरणंघटउपाधिशून्यमधिकरणमात्मातदन्यत
रत्वावच्छिन्नसाध्यव्यापकत्वाभावात्साध्यव्यभिचाराधिकरणमिति। उद्भूतरूपत्वाधिकरणंयत्प्रत्यक्षत्वाधिकरणंघटः पक्षोद्भूतरूपशून्य

मित्यात्मनयत्वावच्छिन्नश्यामत्वस्यव्यापकंशाकपाकजत्वन्तदवच्छिन्नसाधनाव्यापकञ्च एवमपक्षधर्मवहिर्द्रव्यत्वा
वच्छिन्नप्रत्यक्षत्वस्यव्यापकमुद्भूतरूपवत्त्वम् एवंबहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकञ्च एवम्ध्वंसोविनाशीजन्य
त्वादित्यत्रजन्यत्वावच्छिन्नसाध्यव्यापकत्वभावत्वम् सद्धेतावेतादृशोधर्मोनास्ति यदवच्छिन्नसाध्यस्यव्यापकत्वन्तदवच्छि
न्नस्यसाधनस्यचाव्यापकंकिञ्चित्स्यात् व्यभिचारिणित्तुउपाध्यधिकरणंयत्साध्याधिकरणंयच्चोपाधिशून्यंसाध्यव्यभिचा
राधिकरणन्तदन्यतरत्वावच्छिन्नस्यसाध्यस्यव्यापकत्वंसाधनस्यवाव्यापकत्वमुपाधेरंततःसम्भवतीति१३८॥ ६॥ छ॥

प्रत्यक्षत्वाभावाधिकरणमनोन्द्रियरूपादि तदन्यतरत्वावच्छिन्नद्रव्यत्वरूपसाधनाव्यापकत्वस्योद्भूतरूपेभावात्साध्याभावाधिकरणमितिपरि
त्यज्यसाध्यव्यभिचाराधिकरणमित्युक्तम् तदर्थश्चसाधननिष्ठसाध्यव्यभिचारनिरूपकाधिकरणत्वं अन्तत इति नादृशधर्मान्तरस्यास्फूर्तावित्य
र्थः नचसाध्यव्यापकत्वंसाध्यनिष्ठव्याप्तिनिरूपकत्वन्तथाचशुद्धसाध्यव्यापकेधूमादिनिष्ठव्याप्तेः केवलधूमत्वावच्छिन्नत्वात्कथंनादृशधर्मान्त
रावच्छिन्नधूमादिनिष्ठव्याप्तिनिरूपकत्वमार्द्रेन्धनादीनामितिवाच्यम् तद्धर्माधिकरणीभूतसाध्याधिकरणनिष्ठाभावाप्रतियोगित्वरूपस्यै राम
वतद्धर्मावच्छिन्नसाध्यव्यापकत्वस्यलक्षणेप्रवेशोनतुयद्धर्मावच्छिन्नसाध्यनिष्ठव्याप्तिनिरूपकत्वस्येत्याशयात्॥ श्री ६॥ ६॥ छ॥५ २१६

धूमवान्वह्नेरित्यादावयःपिण्डमहानसान्यतरत्वावच्छिन्नसाध्यव्यापकं व्यञ्जनवत्त्वादिकं संग्राह्यमेवेति ध्येयम्॥१३८॥ अत एव यद्धर्मावच्छिन्नत्वघटितनिरुक्तलक्षणस्य तात्पर्यविषयत्वादेव एतदनुसारेण निरुक्तलक्षणानुसारेण स्वस्य साध्यमिति षष्ठीतत्पुरुषभ्रमम् व्यावर्त्तयितुमाह स्वञ्चेति नव्यास्तु यदभावेन यद्द्रव्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिर्लाघवात् अत एव जलत्वतेजस्त्वयोस्तदुभयत्वेन रूपेण न क्वचिदप्युपाधित्वमित्याहुः तद्धर्मवत्युपाधिव्यभिचारेण तद्धर्माधिकरणीभूतयदुपाध्यभावाधिकरणं तद्

अत एव लक्षणमप्युपाधिस्वरूपमेतदनुसारेण दर्शयति सर्वे इति स्वञ्च साध्यञ्च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः।उपाधेर्दूषकताबीजमाह व्यभिचारस्येति उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः।तथा हि यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैवोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् यथा धूमवान्वह्नेरित्यादौ वह्निर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् यत्र तु किञ्चिद्धर्मावच्छि-

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः। हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता॥१३९॥ व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम्॥

न्नसाध्यस्य व्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् यथा स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणाभावात् स्वव्याघातकत्वाच्च नोपाधिः॥

त्वेन वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ तु प्रमेयत्वं प्रत्यक्षत्वव्यभिचारि बहिर्द्रव्ये उद्भूतरूपव्यभिचारित्वादित्यादि द्रष्टव्यम् ननु पक्षेतरत्वेति व्याप्तिः न च तस्य लक्षणत्वमेव। एकाश्रये येषामित्यादिमूलेन प्रदर्शितस्य लक्षणस्यावच्छेदकस्य तत्राभावात् तत्र हेतौ। पक्षेतरत्वव्यभिचारस्य पक्षमात्रे एव सम्भवात् साध्यव्यभिचारस्य तन्मात्रे असम्भवादत आह। बाधानुन्नीतेति। स्वव्याघातकत्वादिति। उपाधिमात्रस्य दूषकत्वव्याघातकत्वादित्यर्थः॥ पक्षेतरत्वस्योपाधित्वे सर्वत्रानुमाने पक्षेतरत्वस्योपाधेः सम्भवादनुमान ॥

का॰मि॰ मात्रोच्छेदापत्त्याव्यभिचारानुमानाधीनस्योपाधेर्दूषकत्वस्यासम्भवादितिभावः॥ छ॥ ननु तथापि यत्र साध्यव्यापकताग्राहकम्प्रमाणम-
दि॰ स्ति तत्र पक्षेतरत्वेलक्षणातिव्याप्तिर्दुर्वारेत्यत आह वाधोन्नीतस्त्विति वाधेन पक्षे साध्याभाववत्तयाउन्नीतः साध्यव्यापकत्वेननिश्चितइ-
२१७ त्यर्थः। संदिग्धोपाधिरपीति। पक्षेसाध्यसन्देहेन साध्यव्यापकतासन्देहस्य पक्षेतरत्वेसम्भवादितिभावः। नचसत्प्रतिपक्षव्याघातकत्वेनानुपाधित्वादेवा
नुद्भावनसंभवे सम्प्रदायमात्रेण हेतुत्वकथनमसङ्गतमितिवाच्यम् यत्र साध्यव्यापकताग्राहकतर्कावतारस्तत्र व्यापकव्यभिचारिणोव्या-

वाधोन्नीतस्तु उपाधिर्भवत्येव यथावन्हिरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेणवन्हावुष्णत्वग्रहे वन्हीतरत्वमुपाधिः। यत्र
तूपाधेः साध्यव्यापकतासंदिह्यते सः संदिग्धोपाधिः पक्षेतरस्तु संदिग्धोपाधिरपिनोद्भावनीयः कथकसम्प्रदायानुरोधा
त् केचित्तु सत्प्रतिपक्षोत्थापनमुपाधेः फलन्तथाहि अयोगोलकन्धूमवद्वन्हेरित्यादौ अयोगोलकन्धूमाभाववत् आर्द्रे
न्धनाभावादिति सत्प्रतिपक्षसम्भवात् इत्थञ्च साधनव्यापकोपिक्वचिदुपाधिः यथाकरकापृथिवी कठिनसंयोगव

॥ शब्दोपमानयोर्नैवपृथक्प्रामाण्यमिष्यते १४० अनुमानगतार्थत्वादितिवैशेषिकंमतम्॥ छ॥

त्वादित्यादौ अनुष्णाशीतस्पर्शवत्त्वम् नचात्रस्वरूपासिद्धिरेवदूषणमितिवाच्यम् सर्वत्रोपाधेर्दूषणान्तरसाङ्कर्यात्॥
अत्रचसाध्यव्यापकः पक्षाद्व्यावृत्तिरूपाधिरितिवदन्ति शब्दोपमानयोरिति वैशेषिकाणांमतेप्रत्यक्षमनुमानञ्च प्रमाणम्
शब्दोपमानयोस्तु अनुमानविधयैव प्रामाण्यम् तथाहि दण्डेनगामानयेत्यादिलौकिकपदानिवैदिकपदानिवा॥ १॥

प्यव्यभिचारावश्यम्भावेनव्यभिचारानुमापकत्वरूपस्यदूषकत्वस्यव्याघातासम्भवात् सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिनाम्म
तआह केचित्विति इत्थञ्चेति सत्प्रतिपक्षोत्थापकतयादूषकत्वे चेत्यर्थः अत्र च सत्प्रतिपक्षोत्थापकत्वपक्षे च पक्षाद्व्यावृत्तिरिति पक्षव्यावृत्तिवे
नुपक्षेतदभावेनसाध्याभावासाधनादितिभावः। गुरुमते लौकिकः शब्दोऽनुवादकः वैदिकएवप्रमाणन्तन्मतनिराकरणायाह वैदिकेति राम॰
॥ अत्र स्वर्गकामोयजेतेत्यादिपदत्वेनपक्षता तेनविशेषतः संसर्गसिद्धिरितिद्रष्टव्यम्॥ श्रीः॥ छ॥ छ॥ छ॥ श्रीः॥ २१७

तात्पर्यविषयेति अत्रब्राह्मणे विद्येत्यादौ यद्वाधिकरणत्वं संसर्गे तात्पर्ये तद्वा विषयत्वादिसंसर्गेणार्थान्तरवारणाय तात्पर्यविषयत्वं संसर्गे विशेषणं तात्पर्यज्ञाने इतरपदार्थत्वेनेतरपदार्थस्य प्रवेशाद्घटत्वादिनास्मृतस्य संसर्गे न सिद्ध्येदतः स्मारितेति स्मारितत्वञ्च वृत्त्या बोध्यम् ते न वस्तुपदात्समवायेनाकाशत्वादिनोपस्थापितेन रूपेण संसर्गसिद्ध्यभावेऽपि न क्षतिः हेतौ चायमेतिपुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राज्ञः पुरुष इत्यादिभागे राजपुरुषयोर्योग्यार्थयोः संसर्गे तात्पर्याभावेन साध्याभावाद्व्यभिचार इत्याकाङ्क्षाविशेषणं तच्चेदम्पदमनेन पदेन सहामुकसंसर्गेणैतदर्थान्वितस्वार्थबोधजनयत्विति पदतात्पर्यार्थकम् तेन नाकाङ्क्षाया इतरांशवैयर्थ्यप्रसङ्गः। वन्हिना सिञ्चतीत्यादिवाक्यसंसर्गप्रमापूर्वकत्वसाध्याभावेन व्यभिचारवारणाय हेतौ योग्यतापदम् नीलो घटोऽयम्पट इत्यादिनीलः पट इत्यादिभागे नीलपटयोराकाङ्क्षायोग्यता

तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वात् घटमानयेतिपदकदम्बकवत् यद्वा एते पदार्था मिथः संसर्गवन्तः योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवद्दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति एवङ्गवयव्यक्तिप्रत्यक्षानन्तरङ्गवयपदङ्गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् असति वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्प्रवृत्तिनिमित्तकं यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् यद्वा॰ गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिध्यति॥ ४॥ ६॥

सत्वेन हेतुसत्वाद्व्यभिचारवारणायासत्तिपदम्॥ कदम्बपदञ्चाकाङ्क्षादीनाम्परस्परप्रतियोगित्वलाभाय अन्यथा साध्यस्य परस्परार्थघटितत्वेन व्यभिचारप्रसङ्गात् नन्विष्टतावच्छेदकप्रकारकप्रवृत्तिविशेष्यकज्ञानस्य प्रवर्तकतया संसर्गज्ञानपूर्वकत्वादनुमितेरतादृशज्ञानस्याकथं प्रवर्तकत्वम्॥ अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन प्रमापूर्वकत्वत्वेन प्रमापूर्वकत्वसिद्धावपि पुरोवर्त्तिविशेष्यकजनत्वादिप्रकारकज्ञानस्य तस्यादनुत्पत्तेस्तदर्थं शब्दप्रामाण्यस्वीकार इत्यत आह यद्वेति मिथः संसर्ग इति। तात्पर्यविषयपरस्परसंसर्गवन्त इत्यर्थः। तेन नातात्पर्यविषयसंसर्गमादायार्थान्तरम् ननु दृष्टान्ते साध्यसिध्यभावात्कथम्व्याप्तिग्रह इत्यत आह दृष्टान्तेपीति ४॥

का॰मु॰ ननु सर्वत्र शब्दश्रवणानन्तरमनुमितिरूपकार्यान्यथानुपपत्त्या व्याप्तिज्ञानं कल्पनीयमित्यत आह किन्त्वेति पदज्ञानं कल्पयित्वेति पद
दि॰ स्मरणं कल्पयित्वेत्यर्थः वन्ह्यादिशब्देनार्थस्येव वन्ह्यादिरूपेणार्थे वापि वन्ह्यादिपदस्मरणसम्भवाद्वाच्यत्वादिवद्वाचकत्वादिसम्बन्धस्या
२१८ पिस्मारकत्वादिति भावः। इदमुपलक्षणम् आकाङ्क्षादिज्ञानं कल्पयित्वेत्यपि बोध्यम् मणिकृतस्त्वेते पदार्थाः परस्परसंसर्गवन्तः यो
ग्यतादिमत्पदोपस्थापितत्वादित्यनुमाने योग्यतानलिंगविशेषणम् लिङ्गस्य निश्चितस्यैव निश्चायकतया योग्यतायाश्च संशयेपि शाब्दबोधदर्श
नादतः पृथगेव शब्दो मानमिति वदन्ति मिश्रास्त्वनुमानमुद्रया शब्दस्य बोधकत्वे घटमानयेति स्वरूपयोग्यम् घटः कर्मत्वमानयनं कृतिरिति स्वरू

तन्मतं दूषयति। तन्नसम्यगिति व्याप्तिज्ञानं विना पि शब्दादिनो बोधस्यानुभवसिद्धत्वात् नहि सर्वत्र शब्दश्रवणानन्तरं व्या
प्तिज्ञाने प्रमाणमस्तीति किन्तु सर्वत्र शब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्द

तन्नसम्यग्विना व्याप्तिबोधं शब्दादिबोधतः ॥ १४१ ॥ त्रैविध्यमनुमानस्य केवलान्वयिभेदतः। द्वैविध्यन्तु भवे
द्व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥ अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते। साध्याभावव्यापकत्वं हेत्वभावस्य
यद्भवेत् ॥ १४३ ॥

बोधश्च किन्नस्वीक्रियतामिति ध्येयम् ॥ १३९ ॥ १४० ॥ १४१ ॥ त्रैविध्यमिति अनुमानं हि त्रिविधं केवला
न्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि भेदात् तत्रासद्विपक्षः केवलान्वयि ॥ ७ ॥ ९ ॥ ७ ॥ ४ ॥ १ पायोग्यमिति न स्यात्
अनुमानस्योभयत्रापि सम्भवात् न चाकाङ्क्षाघटितहेत्वभावान्नानुमितिरत्रेति वाच्यम् आकाङ्क्षाभ्रमेणानुमितिसम्भवात् विषयाबाधाच्च
तस्याः प्रमात्वात् शब्दप्रामाण्ये च स्वभावान्नादृशशब्दस्य बोधकत्वमित्याहुः। परे तु घटान्पृथगित्यादौ घटावधिकपृथक्त्वप्रकारेण निरवच्छिन्न
विशेष्यताकः पृथक्त्वाश्रयस्य शाब्दबोधः सर्वानुभवसिद्धः स चास्माकन्तादृशानुपूर्वीकपदज्ञानत्वेन तादृशशाब्दबोधं प्रति हेतुत्वादुपप राम
द्यते वैशेषिकाणान्तु पृथक्त्वं घटावधिकं घटपदसाकाङ्क्षपृथक्पदस्मारितत्वादित्यनुमानेन नन्निर्वाहः पक्षविधया पृथक्त्व ॥ ९ ॥ २१८

का०मु० स्यभानेपि तदाश्रयस्य भानात् नच पटस्य स्वीकृतपटो घटावधिक पृथक्त्ववानित्यनुमित्या तन्निर्वाह इतिवाच्यम् पटादिनिष्ठविशेष्यतायाः
स्तत्रपक्षतावच्छेदकीभूतपटत्वावच्छिन्नतया निरवच्छिन्नविशेष्यताकतादृशशाब्दबोधसमानाकारकत्वस्य तथाप्यनिर्वाहादित्याहुरि
तिदिक्॥ १३९ ॥ १४० ॥ १४१ ॥ तत्रतेषु मध्ये असद्विपक्ष इति अत्यन्ताभावाप्रतियोगिसाध्य इत्यर्थः॥ यथाश्रुते सिद्ध्यसिद्धिव्याघा
तात् अत्यन्ताभावाप्रतियोगित्वस्य च प्रमेयत्वादौ सत्वाल्लक्षणसमन्वयः नचैतन्न सम्भवति प्रमाविषयत्वरूपस्य तस्य नानात्वेनानुग॰

यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ तत्रहि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्वम् असत्सपक्षः केवलव्यतिरे
की यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्वादित्यादौ तत्रहि जलादित्रयोदशभेदस्य पूर्वमनिश्चिततया निश्चितसा
ध्यवतः सपक्षस्याभावात्॥ सत्सपक्षविपक्षोऽन्वयव्यतिरेकी यथा वन्हिमान् धूमादित्यादौ तत्र सपक्षस्य मह
नसादेर्विपक्षस्य जलह्रदादेश्च सत्वादिति तत्रहि व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तत्र इत्थं व्यतिरेक
व्याप्तिर्निर्वक्तिसाध्याभावेति साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः अत्रेदं बोध्यम्॥ यत्स
म्बन्धेन यदवच्छिन्नं प्रतियेन सम्बन्धेन येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताक
तद्धर्मावच्छिन्नाभावज्ञानात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति॥ ६ ॥

मादितिवाच्यम् प्रमात्वस्यैव परस्परासम्बन्धेनानुगतत्वात्वात् इत्यञ्च प्रमेयत्वादेर्व्यतिरेकित्वभ्रमेपि केवलान्वयित्वमेवेतिमन्तव्यम् असत्सपक्ष इ
ति सिद्ध्यसिद्धिव्याघातात्तत्राप्यगृहीतहेतुसहचारं यद्यतिरेकिसाध्यं तत्त्वं समर्थो बोध्यः सत्सपक्षेति॥ गृहीतान्वयव्यतिरेकिसाध्यकमित्यर्थः
यत्सम्बन्धेन यदवच्छिन्नं प्रतीति यत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नव्याप्यतानिरूपितव्यापकता गृह्यते इत्यर्थः॥ श्री ६ ॥ ६ ॥ ६ ॥

का॰मु॰ टि॰ २१९

इतरव्याप्यतेति इतरस्यव्याप्यतेत्यर्थः तादात्म्येनेतरव्यापकतेति पाठेतादात्म्यसम्बन्धावच्छिन्नायेतरनिष्ठव्याप्यतातन्निरूपितव्यापकतेत्यर्थः तादात्म्यसम्बन्धेनेति तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिकाभावः सिद्ध्यतीत्यर्थः।येनसम्बन्धेनव्याप्यतागृह्यते इत्यनुक्तौतुतादात्म्येनेतरस्य व्याप्यतायत्र गृहीतात त्रेतरान्यत्वाभावस्यसिद्धिःस्यादितिभावः।संयोगसंबन्धावच्छिन्नप्रयोगिताकवन्ह्यभावेनेतिसावधारणम् तेनसम्बन्धान्तरावच्छिन्नप्रतियोगिताकेननतत्सिद्धिरित्यर्थः अनेनचयेनसम्बन्धेनव्यापकतागृह्यतेइत्यस्यफलंसूचितम् प्रदर्शितरीत्यैव येनरूपेणयदवच्छिन्नेत्यनयोरपि प्रयोजनमूह्यम् ननुसाध्यसाधनसहचारज्ञानाभावात्कथंव्यतिरेकव्याप्तिज्ञानमित्यत आह अत्रचेति।तथाचव्यतिरेकसहचारेणैव व्यतिरेकव्याप्तिग्रहात्नान्वयसहचारग्रहापेक्षेतिभावः।ननुसाध्यप्रसिद्धिंविनातदभावाज्ञानेव्य

इत्थञ्चयत्रविशेषणतासम्बन्धेनेतरत्वव्यापकत्वङ्गन्धान्यत्वाभावेगृह्यते तत्रगन्धाभावाभावेनेतरत्वान्यत्वाभावः सिद्ध्यति यत्रतुतादात्म्यसम्बन्धेनेतरव्यापकत्वङ्गन्धाभावस्यगृह्यते तत्रतादात्म्यसम्बन्धेनेतरस्याभावः सिद्ध्यति सएवान्योन्याभावः एवंयत्रसंयोगसम्बन्धेनधूमम्प्रतिसंयोगसम्बन्धेनवन्हेर्व्यापकतागृह्यते तत्रसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावेनजलह्रदेसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिद्ध्यति अत्रचव्यतिरेकव्याप्तिग्रहेव्यतिरेकसहचारज्ञानङ्कारणम्॥ श्रीः॥ श्रीः॥ छ॥ छ॥ छ॥

तिरेकव्याप्तेर्दुर्ग्रहत्वंस्यात् साध्यसिद्धौचसिद्धसाधनमितिचेन्न साध्यस्यघटादावेवप्रत्यक्षसिद्धत्वात्पृथिवीतरभिन्नेत्युद्देश्यप्रतीतेरसिद्धत्वान्नसिद्धसाधनम् पक्षतावच्छेदकनानात्वएवांशतः सिद्धसाधनस्यदोषत्वात् अतएवानित्यौवाङ्मनसेइत्यत्रवागितिवुद्धेरुद्देश्यायाः अनित्यत्वस्यसिद्धत्वेनांशतः सिद्धसाधनमिति ननुतथापिघटः कथंपक्षः साध्यस्यनिश्चयेनतत्संदेहसिषाधयिषयोरभावादितिचेन्नयतः सर्वापृथिवीतरभिन्नानवेति संशयस्यतत्प्रकारकसिषाधयिषायाश्चघटविषयत्वाद्घटत्वेनविशेषदर्शनेसिद्धौवा साम
तेनरूपेणसंशयसिषाधयिषेनभवतः पृथिवीतेतरभवनत्वेति॥ श्रीः॥ ६॥ छ॥ ६॥ छ॥ छ श्रीः॥ ६॥ ६॥ ६॥ २१९

ननु पृथिवीतरभिन्ना पृथिवीत्वात् घटवदित्यन्वयिनैवेतरभेदसिद्धौ व्यतिरेकिवैयर्थ्यमिति चेन्न अन्वयव्याप्तेरग्रहे व्यतिरेकव्याप्तिस्फूर्तिद
शायां व्यतिरेकानुमितिजननसंभवेन व्यतिरेकानुमानप्रवृत्तेर्निष्प्रत्यूहत्वात् आचार्यमतमाह केचित्विति व्यतिरेकसहचारेण अन्वयसहचारनि
रपेक्ष व्यतिरेकसहचारेण अन्वयव्याप्तिरेवेत्येवकारेण व्यतिरेकव्याप्तेर्व्युदासः नन्वेवं व्यतिरेकव्याप्तिज्ञानरूपकारणाभावात्कथं
व्यतिरेकानुमितिरत आह नत्विति व्यतिरेकव्याप्तिज्ञानमित्यस्यानुमितावित्यादिः नन्वन्वयव्याप्तिज्ञानस्यैव हेतुत्वे कथं व्यतिरेकीति व्यवहा
र इत्यत आह यत्रेति ननु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ साध्यस्येतरभेदादेरप्रसिद्धत्वात्कथमन्वयव्यतिरेकसहचारग्रह इत्यत आह सा

केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते न तु व्यतिरेकव्याप्तिज्ञानमपि कारणम् यत्र व्यतिरेकसहचाराद्व्या।
प्तिग्रहस्तत्र व्यतिरेकीत्युच्यते साध्यप्रसिद्धिस्तु घटादावेव जाता पश्चात्पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति॥१४२॥१४३॥
अर्थापत्तिरिति अर्थापत्तिः प्रमाणान्तरमिति केचिन्मन्यन्ते। तथाहि। यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्राद्व

अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते। व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः॥ १४४॥ ६॥

गतं जीविनो गृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्य
त इति तत्प्रत्यनुमानेनान्यथासिद्धत्वान्नेष्यते तथाहि यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसि
द्धौ ज्ञायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते॥६॥ (( साध्यप्रसिद्धिस्त्विति ननु घटादौ साध्ये निर्णीते कथं तत्रेतरभेदा
नुमितिरत आह पश्चादिति अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वादिति भावः। अत्र चान्वयव्याप्तिग्र
रकतावत्पदार्थज्ञानादेवान्वयव्याप्तिज्ञानोत्पत्तौ व्यतिरेकसहचारज्ञानस्य तद्धेतुत्वे मानाभावः। न च व्यतिरेकसहचारेण तत्र प्रयोजकत्वा
न्नतीतार्थः तच्चानुपपन्नम् अन्वयव्याप्तिज्ञाने प्रतिबन्धकव्यभिचारशङ्कानिरासद्वारा व्यतिरेकसहचारज्ञानस्य तत्र प्रयोजकत्वादिति वा
च्यम् व्यतिरेकसहचारग्रहेऽप्यधिकरणान्तरे व्यभिचारशङ्कातादवस्थ्यात् तदधिकरणीयव्यभिचारशङ्कानिरासद्वारा तत्र तस्योपयोगित्वमित्य

तदधिकरणे साधनाभावग्रहमात्रेणैव तदधिकरणीयव्यभिचारशङ्कानिवृत्तेरित्यस्वरसो वदन्तीत्यनेन सूचितः १४२।१४३। केचित्तु मीमांसकाः तदपि॥ अर्थापत्तेः प्रमाणान्तरत्वमपि दिवा न भुङ्क्ते इत्यादावित्यादि नाम यूरः पर्वते तदस्मिन्नृत्यति नृत्यति चेत्यस्य संग्रहः नन्वेन ह्यन्यमयूरः पर्वते नृत्यतीति ज्ञानमुत्पद्यते नन्वेतद्व्यतिरेकिणः सम्भवति पर्वते नृत्यस्य साध्यस्याप्रसिद्धौ व्यतिरेकव्याप्तिनिरूपणादिति कथन्नार्थापत्तिः

एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिध्यतीति अभावप्रत्यक्षस्यानुभाविकत्वादनुपलम्भोऽपि न प्रमाणान्तरम् किञ्चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकारणत्वात् प्रत्यक्षम् ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था एवञ्चेष्टापि न प्रमाणान्तरं तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात् यत्र च व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति १४४ सुखं निरूपयति

सुखं हि जगतामेकं काम्यं धर्मेण जायते। अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् १४५ निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि १४६॥

सुखमिति काम्यमभिलाषविषयः धर्मेणेति धर्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थः॥ दुःखं निरूपयति॥ अधर्मेति अधर्मत्वेन दुःखत्वेन कार्यकारणभाव इत्यर्थः प्रतिकूलमिति। दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः १४५ इच्छां निरूपयति निर्दुःखत्व इति इच्छा हि द्विधा। फलविषयिणी उपायविषयिणी च फलं तु सुखं दुःखाभावश्च तत्र फलेच्छां प्रति फलज्ञानं कारणं॥

प्रमाणान्तरमिति चेन्न मयूरनृत्यस्य पर्वतानधिकरणकस्य पर्वतेतरानधिकरणत्वे सति साधिकरणत्वात्पर्वतत्ववदित्यन्वयव्यतिरेकिणैव पर्वताधिकरणकमयूरनृत्यज्ञानसम्भवात्॥ १४४॥ धर्मत्वेनेति इदञ्च प्राचाम्मतेनोक्तम् नवीनमते तु नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्या भगवति नित्यसुखसिद्धौ धर्मस्य कार्यतावच्छेदकं जन्यसुखत्वम् सुखत्वावान्तरजातिर्वेति बोध्यम् १४५ तत्र तयोर्मध्ये॥ ॥ ॥ ॥ ॥

अत एव फलज्ञानस्य फलेच्छां प्रति हेतुत्वादेव पुरुषार्थः सम्भवतीति ॥ सुखं दुःखाभावश्च पुरुषार्थः सम्भवतीत्यर्थः । ननु यद्ज्ञानमित्यादेः स्व
विषयकज्ञानजन्येच्छाविषयत्वमर्थः तथा चोपायेऽतिव्याप्तिस्तस्यापि स्वविषयकेष्टसाधनताज्ञानजन्येच्छाविषयत्वादत आह इतरेच्छेति पुर्व्वं
कृतिसाध्यताज्ञानमिति ननु कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण चिकीर्षां प्रति हेतुत्वे मानाभावः तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्ध
र्मप्रकारकेच्छां प्रति हेतुतायाः क्लृप्तत्वात् कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षायाः सम्भवादिति चेन्न यत्र कृ
तिसाध्यपाकत्वेनेष्टसाधनत्वन्न गृहीतमपि तु शुद्धपाकत्वेन कृतिसाध्यत्वं शुद्धपाकत्वेन चेष्टसाधनत्वं गृहीतं तत्रापि पाकगोचरप्रवृत्तेरनुभा
विकतया तदुपरोधेन चिकीर्षाया अप्यावश्यकत्वेन तन्निर्वाहाय कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्वात् अथ कृत्यसाध्य

अत एव पुरुषार्थः सम्भवति यज्ज्ञानं सत्स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात् इतरेच्छानधीनेच्छाविषयत्वं
म्फलिनोऽर्थः उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् चिकीर्षेति १४६ कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणी

चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा तु या भवेत् । तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥१४७॥६॥

च्छा चिकीर्षा पाकं कृत्या साधयामीति तदनुभवात् चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानञ्च कारणम् तद्धेतुरिति

ताज्ञानस्य प्रतिबन्धकत्वादेव वृष्ट्यादौ चिकीर्षानुत्पादात् कृतिसाध्यताज्ञानस्य चिकीर्षां प्रति हेतुत्वे मानाभाव इति चेन्न कृतिसाध्यत्वाभावज्ञाप्यतदव
च्छेदकधर्मज्ञानानां प्रतिबन्धकत्वकल्पनापेक्षया कृतिसाध्यताज्ञानस्य हेतुत्वे लाघवात् इष्टसाधनताज्ञानमिति । अन्यथा निष्फलत्वज्ञानेऽपि चैत्य
वन्दनादौ चिकीर्षापत्तिरिति भावः ॥ अत्रेदमवधेयम् पाकविशेष्यकेष्टसाधनताज्ञानस्य कार्यतावच्छेदकं न पाकादिगोचरचिकीर्षात्वं कृतिसा
ध्यत्वप्रकारकत्वनिवेशप्रयोजनविरहात् पाको जायतामितीच्छाया असङ्ग्रहापत्तेश्च किन्तु पाकत्वावच्छिन्नमुख्यवि ॥ श्रीः ॥ श्रीः ॥ श्रीः ॥

शेष्यकेच्छात्वस्याकसाध्यंसुखञ्जायतामितीच्छायामव्यभिचारवारणाय मुख्येति इष्टसाधनतेत्यत्रेच्छास्वरूपसतीविशेषणम् तेनेच्छात्वानस्यान्य
कालेपिचिकीर्षानिर्वाहः॥अतएवकृतिसाध्यताज्ञानस्य हेतुत्वादेव १४७ बलवद्विष्टेति द्विष्टन्द्वेषविषयीभूतन्द्वेषश्च दुःखेनाद्वृप्येण ज्ञानान्
स्पर्शादीनत्साधनताज्ञानात् द्वेषेबलवत्वञ्जातिविशेषः प्रतिबन्धकमिति ननुबलवद्द्वेष विषयसाधनत्वज्ञानस्य प्रतिबन्धकत्वेचैत्रस्या
गम्यागमनजन्यनरके यदाबलवान्द्वेषस्तदामैत्रस्यतादृशद्वेषशून्यस्यागम्यागमनेतादृशनरकसाधनत्वज्ञानवत इच्छाप्रवृत्त्योरनुपपत्तिः।
एवञ्चैत्रस्यैवकालान्तरेतादृशद्वेषसत्वेपि नचतत्कालीनतत्पुरुषीयेच्छास्तिप्रवृत्तिस्तथाचतत्कालीनतत्पुरुषीयबलवद्विष्टजनकत्वज्ञान
स्यप्रतिबन्धकत्वङ्कल्प्यते यत्पुरुषस्ययदानकापिद्वेषस्तत्कालतत्पुरुषान्तर्भावेनतादृशज्ञानप्रतिबन्धकत्वस्याकल्पनात्तत्रतादृशप्रतिब

अतएववृष्ट्यादौकृतिसाध्यताज्ञानाभावान्नचिकीर्षा॥१४७॥बलवद्विष्टेति बलवद्विष्टसाधनताज्ञानंतत्रप्रति

बलवद्विष्टहेतुत्वमतिःस्यात्प्रतिबन्धिका॥ नद्विष्टहेतुत्वबुद्धेस्तुहेतुत्वङ्कस्यचिन्मते॥१४८॥श्री॥

बन्धकमतोवधविषसम्पृक्तान्नभोजनेनचिकीर्षाबलवद्द्वेषःप्रतिबन्धकइत्यन्ये नद्विष्टहेतुत्वेति॥ श्री॥ छ॥ श्री॥

न्धकाप्रसिद्ध्यातदभावरूपकारणस्याभावान्महत्यनुपपत्तिरितिवाच्यम् यत्पुरुषस्ययदागम्यागमनजन्यनरकेबलवद्द्वेषस्तदातत्पुरुषस्यतत्रे
च्छानुत्पादादगम्यागमनगोचरतत्पुरुषीयतत्कालीनेच्छायाअप्रसिद्ध्यातत्पुरुषतत्कालान्तर्भावेनतादृशकार्यकारणभावस्याभावेन।
तत्रतत्पुरुषीयागम्यागमनगोचरेच्छानुत्पादप्रयोजकस्यदुर्भिक्षापत्तेरितिचेन्न तद्धर्मप्रकारकद्वेषविशिष्टस्यतद्धर्मावच्छिन्नजनकत्व
ज्ञानस्यतत्रप्रतिबन्धकत्वकल्पनेनोक्तापत्त्यभावात्तद्धर्मप्रकारकद्वेषानुत्तरत्वादृशेच्छायान्तादृशद्वेषाभावस्तादृशद्वेषोत्तरतज्ज्ञोचरेच्छायान्त
द्धर्मावच्छिन्नजनकत्वज्ञानाभावःकारणम् बलवद्द्वेषइति पाकादियोचरेच्छायांबलवद्द्वेषविषयसाधनत्वज्ञानजन्यः पाकगोचरोद्वेषः श्रम॰
प्रतिबन्धकःपूर्वोक्तप्रतिबन्धकद्वयकल्पनामेसयालाघवादितिभावः॥ श्री॥ ॥ श्री॥ ॥ श्री॥ ॥ ॥ छ॥ ॥छ॥ छ ॥ छ॥॥ 

यत्र चोत्कटसुखोत्कटदुःखजनकत्वमेकस्मिन्कर्मणि गृहीतं तत्र सत्प्रतिपक्षस्थलइवेच्छाद्वेषयोरनुत्पत्तेः सम्मतेन तत्र कार्यकाले द्वेषाभाव
स्यासत्त्वेनेच्छोत्पादापत्तिः न च यत्र बलवद्द्विष्टसाधनत्वज्ञानेन तृप्तौ यत्क्षणे द्वेषो जनितस्तदुत्तरक्षणे इच्छोत्पादापत्तिस्तवापीति वाच्यम् तत्रेच्छोत्पाद
स्येष्टत्वात् क्षणविलम्बस्य शपथनिर्णेयत्वादित्यन्ये इत्यनेनास्वरसः सूचितः॥ ४॥ बलवदनिष्टाजनकत्वज्ञानमिति अत्रापि तद्धर्मप्रकारकद्वेषोत्तरे
च्छायां तद्धर्मावच्छिन्नाजनकत्वज्ञानं कारणम् तादृशद्वेषानुत्तरेच्छायां तु तद्धर्मप्रकारकद्वेषाभावः कारणमिति निष्कर्षो बोध्यः मूले कस्यचि
न्मतेइत्यनेनास्वरसः सूचितः न च बलवदनिष्टाननुबन्धित्वज्ञानत्वस्य हेतुतावच्छेदकत्वे बलवदनिष्टजनकत्वप्रकारकज्ञाननिरूपिताभावविशेष्यताशालि
त्वादेस्तादृशनिरूप्यनिरूपकभावघटितत्वेन गौरवात्तदघटितबलवदनिष्टसाधनत्वज्ञानाभावत्वेनैव हेतुत्वं युक्तम् न चाप्रामाण्यज्ञानानास्कन्दितबल

बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः १४८ द्वेषं निरूपयति। द्विष्टेति। दुःखोपायविषयकं द्वेषं प्रति बलवद्द्विष्ट

**द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम्॥ प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम्॥ १४९॥**

साधनताज्ञानं कारणमित्यर्थः॥ बलवद्द्विष्टसाधनताज्ञानमप्रतिबन्धकत्वेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः प्रयत्नं
निरूपयति। प्रवृत्तीति॥ १४९॥

वदनिष्टाननुबन्धित्वज्ञानत्वापेक्षया ऽप्रामाण्यनिश्चयानास्कन्दिततदननुबन्धित्वज्ञानत्वस्य प्रतिबन्धक
तावच्छेदकत्वे गौरवमिति वाच्यम् गुर्वादौ बलवदनिष्टसाधनत्वसन्देहेऽपीच्छाप्रवृत्त्योरुदयाद्बलवदनिष्टाप्रतिबन्धित्वनिश्चयस्यैवेच्छाप्रतिबन्धकता
यास्तदननुबन्धित्वसंशयस्यापि च कारणताया अवश्यवाच्यत्वात् पाचविपरीतगौरवादिति न च बलवदनिष्टाननुबन्धिज्ञानस्याप्रवर्त्तकत्वे तद्विषयस्य वि
धेयार्थत्वाभावात्कलञ्जं न भक्षयेदित्यादिवाक्यानामप्रामाण्यापत्तिरिति वाच्यम् तज्ज्ञानस्य प्रवृत्तिजनकत्वाभावेऽपि प्रवृत्तिप्रतिबन्धकबलवद
निष्टसाधनत्वज्ञानविघटकत्वेन प्रवृत्तिप्रयोजकत्वात् प्रवृत्तिप्रयोजकज्ञानविषयस्य विधेयार्थत्वानपायात्॥ ॥ ॥ ॥ ॥ ॥

का॰मु॰ अत्र यद्यपि यत्र प्रथमक्षणे द्वेषः द्वितीयक्षणे फलेच्छा तृतीयक्षणे फलसाधनताज्ञानं तत्र तृतीयक्षणे द्वेषनाशाद्भवत्येव चतुर्थक्षणे
दि॰ उपायेच्छा यत्र फलेच्छादिक्रमेणोत्पत्तिस्तत्र फलेच्छारूपकारणाभावादेव नोपायेच्छा एवमन्यत्रापि आत्मविशेषगुणानां योग
२२२ पद्यानङ्गीकारादिति वलवदनिष्टाननुबन्धित्वज्ञानस्य द्वेषस्य वा प्रतिबन्धकत्वं न युक्तम् नन्वुक्तस्य बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्व
न्तथापि द्वित्रिक्षणान्तरितेपि द्वेषे द्विष्टप्रवृत्त्योरनुदयस्यानुभविकतया ज्ञानयोरेव न यौगपद्यमित्यभ्युपगमाद्वा पूर्वोक्तप्रतिबन्धकत्वस्य हेतु
त्वस्य वावश्यकत्वमिति ध्येयम् तेन द्वेषेवस्य वस्य विशेषणेन। प्रवृत्तिरित्यादि प्रवृत्तित्वञ्च रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः निवृ

प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात्त्रिविधः प्रयत्न इत्यर्थः चिकीर्षेति मधुविषसम्पृक्तान्नभोजनादौ बलवदनिष्टा
नुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वय

एवम्प्रयत्नत्रैविध्यन्तान्त्रिकैः परिकीर्तितम्॥ चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा १५० उपादा
नस्य चाध्यक्षम्प्रवृत्तौ जनकम्भवेत्॥

१व्यतिरेकाभ्याम्प्रवृत्तौ कारणमित्यपि वदन्ति कार्यताज्ञानम्प्रवर्त्तकमि
तिगुरवः तथा हि ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तानापेक्षित्वमस्ति सा च कृतिसाध्यताज्ञानसाध्या॥ १॥

त्तित्वञ्च द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः॥ जीवनयोनियत्नत्वञ्च स्वाभाविकप्राणसञ्चारविषयकयत्नत्वम् ननु बलवदनि
ष्टाननुबन्धित्वज्ञानाभावस्य प्रवृत्त्यहेतुत्वे मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरत आह मध्विति चिकीर्षाभावादिति चिकीर्षाम्प्रति बलवद
निष्टाननुबन्धित्वज्ञानाभावस्य हेतुत्वादिति भावः। कृतिसाध्यताज्ञानादिवदिति अन्यथा कृतिसाध्यताज्ञानादेरपि चिकीर्षायामेव हेतुत्वं स्यात्तत्तु राम॰
प्रवृत्तौ व्यापारेण व्यापारिणो नान्यथासिद्धत्वमिति प्रकृतेपि समानमिति भावः प्रभाकरमतमाह कार्यताज्ञानमिति सा च चिकीर्षा च॥ श्लो॰१॥ २२२

नद्वाराकृतिसाध्यत्वप्रकारकेच्छाद्वारा द्वयोरेवेति एवकारोऽप्यर्थः स्वविशेषणेति स्वसमवर्त्तमानः पुरुषस्तद्विशेषणङ्काम्ये कामना नित्ये
कालेशौचादितद्ज्ञापकेन सम्बन्धः तत्सप्रतिसन्धानज्ञानमित्यर्थः॥ तस्य कार्यताज्ञानहेतुता लिङ्गज्ञानविधया तथाहि पाको मत्कृति
साध्यः मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वादित्यनुमानम् अत्र मदिष्टसाधनत्वमात्रोपादाने वृष्ट्यादौ व्यभिचार इति सम्पन्नतम् मदि
ष्टसाधने परकृतपाकादौ व्यभिचारवारणाय मत्कृतिं विनेत्यत्र मत्पदम् श्रमे व्यभिचारवारणाय मदिष्टसाधनत्वादिति मदीयश्रमस्य मच्छ
त्रोरिष्टसाधनत्वाज्जनदोषता दवस्थ्यमनस्तन्त्रापि मदिति॥ न च स्वेच्छाधीनकृतिसाध्यताज्ञानमेव प्रवर्त्तकमन्यथा नान्तरीयकश्रमे प्रवृत्त्याप
त्तेः स चास्यानुमानात्सिद्धमिति वाच्यम् स्वेच्छाधीनकृतिसाध्यत्वस्यैव साध्यत्वात् एवञ्च हेतावपि मत्कृतिं विनेत्यत्र स्वेच्छाधीनत्वमा

इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात् चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा तत्र कृतिसाध्यत्वप्र
कारस्तत्प्रकारकज्ञानञ्चिकीर्षायान्तद्द्वारा च प्रवृत्तौ हेतुः नत्विष्टसाधनताज्ञानन्तत्र हेतुः कृत्यसाध्येऽपि चन्द्रम
ण्डलानयनादौ प्रवृत्त्यापत्तेः कृत्यसाध्यताज्ञानम्प्रतिबन्धकमिति चेन्न तदभावापेक्षया कृतिसाध्यत्वज्ञानस्य
लघुत्वात् न च द्वयोरेव हेतुत्वङ्गौरवात् ननु त्वन्मतेऽपि मधुविषसम्पृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्याप
त्तिः कार्यताज्ञानस्य सत्त्वादिति चेन्न स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्त्तकत्वात्॥ ६॥ ॥

त्कृतिविशेषणन्देयम् अन्यथाऽन्येच्छाधीनमत्कृतिसाध्ये मदिष्टसाधने नान्तरीयकजलसंयोगादौ व्यभिचारापत्तेः एवं सति स्वेच्छा
धीनमत्कृतिघटितहेत्वभावादेव श्रमे व्यभिचारवारणसम्भवाद्विशेष्यदलप्रयोजनं यद्यपि न सम्भवति तथापि नीलधूमादिवद्धेतुत्वान्तरा
लाद्दोषः॥ एवमहमिदानीन्तनकृतिसाध्यसन्ध्यावन्दनः द्विजातित्वे सति विहितसन्ध्याकालीनशौचादिमत्त्वादित्यनुमानम् यो हि द्वि
जातित्वे सति विहितसन्ध्याकालीनशौचादिमान्स तत्कालीनकृतिसाध्यसन्ध्यावन्दन इति सामान्यतो व्याप्तिरिति न चैवं रीत्येष्टसाध
॥ नत्वहेतुकानुमानसम्भवेऽपि पक्षे स्वविशेषणवत्ताप्रतिस ॥ ६॥ ध

का॰मु॰ न्धानजन्यकार्यताज्ञानं न सम्भवति इष्टसाधनत्वस्य यागनिष्ठत्वेन पुरुषविशेषणत्वाभावात् इच्छायाश्च पुरुषविशेषणत्वेपि तस्या लिङ्
दि॰ त्वासम्भवात् लिङ्घटकत्वेपि पक्षे तद्वत्ताज्ञानानिर्वाहकत्वादिति वाच्यम् काम्यसाधनताज्ञानस्यापि पक्षे यागादौ स्वविषयसाधनत्वरू
२२३ पकामनासम्बन्धज्ञानात्मकत्वात् वस्तुतस्तद्वत्ताज्ञानं तत्सम्बन्धज्ञानं तज्ज्ञानमेव वा न तु पक्षेपि तत्त्वान्तर्भूतं इतिकामासाधनताज्ञानस्यापि
कामनासम्बन्धज्ञानात्मकतया कामनाज्ञानात्मकतया वानुपपत्त्यभावात् ननु स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रव
र्तकत्वं इष्टसाधनताज्ञानशून्यकालेपि पाके स्वविशेषणकृत्यादिघटितहेतुत्वं तत्र यद्युत्कार्यतानुमितिर्यथा पाकः स्वेच्छाधीनमत्कृतिसा
ध्यः श्रमादिभिन्नत्वे सति मत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात् यद्वा स्वेच्छाधीनमत्कृतिं विनाऽसत्त्वादिति तत्रापि प्रवृत्त्या
पत्तिरत आह काम्येहीति कामना यागपाकादिगोचरा कामनाकृचित्तथैवेपावः तथाच स्वविशेषणेत्यत्र विशिष्यता इष्टकामनारूपमेः

ता
काम्येहि पाकयागादौ कामना पुंविशेषणं तत्तश्च वलवदनिष्टाननुबन्धिकाम्यसाधनत्वज्ञानेन कार्यताज्ञानं
ततश्च प्रवृत्तिः तृप्तश्च भोजनेन प्रवर्त्तते तदानीं कामनायाः पुरुषविशेषणत्वाभावात्॥ १॥ १॥ १॥ १॥

वस्वविशेषणं वाच्यमेवं विशेषणवत्त्वमपि स्वविषयसाधनत्वरूपं वाच्यम् तेन न स्वेच्छाधीनेत्यादिद्वितीयहेतुज्ञानजन्यकार्यानुमिति स्थ
लेप्रवृत्त्यापत्तिरिति भावः ननु काम्यसाधनताज्ञानजन्यकार्यताज्ञानस्य प्रवर्तकत्वं मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरित्यत आह तत
श्च वलवदनिष्टेति॥ तथाच स्वविशेषणवत्ताप्रतिसन्धाने वलवदनिष्टाननुबन्धित्वविषयकत्वं विशेषणं देयमिति भावः ननु तृप्तस्यापि भो
जने प्रवृत्त्यापत्तिस्तस्याप्यतीतभोजनकामनाघटितलिङ्जन्यकार्यताज्ञानसत्त्वादत आह तृप्तश्चेति तदानीमिति कामनायास्तदानीम्पुरु
षविशेषणत्वाभावादित्यर्थः तथाच स्वविशेषणेत्यत्र तदानीन्तनत्वं विशेषणं देयमिति भावः॥ ननु स्वेच्छाधीनमत्कृति व्यतिरेकप्रयुक्तव्यतिरे राम
कप्रतियोगित्वादिलिङ्ज्ञानजन्यकार्यताज्ञानात् सन्ध्यावन्दने प्रवृत्त्यापत्तिः कर्तेरपि स्वविशेषणत्वादत आह॥ श्री १॥ १॥ ॥ ७॥ ॥ ७॥ २२३

नित्ये शौचादिकमिति आदिना विहिततत्कर्मकालस्य परिग्रहः न च कालस्य कथं पुरुषविशेषणत्वमिति वाच्यम् स्वहृत्तिजीवनवत्त्वसंबन्धेन तत्
स्य पुरुषविशेषणत्वात् विहितकालजीवित्वादेर्वादिपदेन ग्रहणात् तथा च नित्यगोचरप्रवृत्तिस्थले स्वविशेषणपदेन विशेष्यतत्कालीनशु
चित्वादिरूपविशेषणमेव ग्राह्यमिति न पूर्वोक्तातिप्रसङ्ग इति भावः नैयायिकः शङ्कते नन्विति तदपेक्षया बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाध
नताज्ञानजन्यकृतिसाध्यताज्ञानापेक्षया लाघवेनेति नियमादिघटितजन्यत्वापेक्षया विषयत्वस्य लघुत्वादिति भावः ननु बलवदनिष्टाजनक
त्वज्ञानत्वं हेतुः क्वचिद्व्यायाससाध्ये बहुतरस्यापि दुःखस्याबलवत्त्वात् क्वचिदल्पस्य दुःखस्य बलवत्त्वात् तत्तद्गतस्याबलवत्त्वस्य बलवत्त्वस्य
दुर्वचत्वादित्यत आह बलवदनिष्टाननुबन्धित्वं चेति इष्टोत्पत्तीति इष्टोत्पत्तिनान्तरीयकं यद्दुःखं तदपेक्षया तिरिक्तं यद्दुःखं तदजनकत्वमि

नित्ये च शौचादिकं पुरुषविशेषणत्वेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात्तत्र प्रवृत्तिः ॥ ननु तदपेक्षया ला
घवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानत्वेनैव हेतुत्वमस्तु बलवदनिष्टाननुबन्धित्वं चे
ष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न इष्टसाधनत्वकृ
तिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्साध्यत्वसाधनत्वयोर्विरोधित्वात् ॥ श्री१॥ ॥६॥ ॥१॥ छ॥ छ॥१॥

त्यर्थः ॥ एतेन मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरपास्ता इष्टोत्पत्तिनान्तरीयकदुःखादतिरिक्तस्य मरणदुःखस्य तेन जन
नात् अत्र केचित् सुखमात्रजनके कर्मणि इष्टोत्पत्तिनान्तरीयकदुःखमप्रसिद्धमिति तत्र प्रवृत्त्यभावप्रसङ्ग इति तदयुक्तम् कष्ट
दुःखमेति न्यायेन सुखजनके कर्मणि दुःखजनकत्वनियमेनाप्रसिद्ध्यभावात् मिश्रास्तु इष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वमुक्तस्यार्थे
इति नाप्रसिद्धिरित्याहुः ॥ नन्वेवं सति नरकसाधनत्वेन प्रमिते परदारादिगमनादौ रागोत्कटस्यान्न प्रवर्तेत इष्टोत्पत्त्यनान्तरीयकन
रकदुःखजनकत्वेन तस्य निश्चयादित्यत आह बलवद्द्वेषेति द्वेषे च बलवत्त्वं जातिविशेषः अत एव रागान्धस्य यदा गम्यागमनादिज
॥१॥६॥ न्यदुःखेन तादृशो द्वेषस्तदा तद्धेतावपि प्रवृत्तिः ॥

साध्यत्वसाधनत्वयोर्विरोधमुपपादयति असिद्धस्य हीति आद्यक्षणवृत्तित्वविशिष्टस्य पाकादेरित्यर्थः। सिद्धस्य अनाद्यक्षणविशिष्टस्य कृत्य-व्यवहितोत्तरक्षणसम्बन्धित्वघटितस्य कृतिसाध्यत्वस्य पाकोत्पत्तिक्षण एव पाकवृत्तित्वात् कालान्तरभाव्यो दनादिफलसाधनत्वस्योदनाव्यव-हितपूर्वक्षणसम्बन्धित्वघटितस्य चोत्पत्तिक्षणे पाकावृत्तित्वात्तयोरेकक्षणावच्छेदेनैकत्रावृत्तित्वरूपविरोधादिति भावः। यद्यपि कालान्तरभाव्यो दनाव्यवहितपूर्वक्षणवृत्तितावच्छेदकधर्मवत्त्वरूपमोदनसाधनत्वमाद्यक्षणवृत्तित्वविशिष्टेऽपि पाके सम्भवतीति कथं विरोधस्तथापि स्वरू-पयोग्यमिदन्न फललोपधायकमिति ज्ञानात्प्रवृत्त्यनुदयेन फलोपधायकत्वरूपेष्टसाधनताज्ञानस्यैव संशयसाधारणस्य प्रवृत्तिकारणत्व-स्य वाच्यम् पूर्वोक्तं फलोपधायकत्वञ्चाद्यक्षणविशिष्टे यागादौ न सम्भवतीति भावः॥ साध्यत्वसाधनत्वयोर्विरोधमुत्पाद्य तयोरेकज्ञानविष-यत्वन्न सम्भवतीत्याह॥ न चैकमेकेनैकदेति अव्याप्यवृत्तिपदार्थस्य स्वस्वावच्छेदकानवगाहि ज्ञानन्न सम्भवति मूले वृक्षः संयोगीत्येव प्रती-

**असिद्धस्य हि साध्यत्वं सिद्धस्य च साधनत्वम् न चैकमेकेनैकदा सिद्ध मसिद्धञ्चेति ज्ञायते तस्मात्कालभेदादुभ यञ्ज्ञायत इति मैवम् लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य तत्र हेतुत्वात् न च साध्यत्वसाधनत्वयोर्विरोधः॥ ६॥ ५॥**

तेः॥ तथा च साध्यत्वसाधनत्वयोरपि स्वावच्छेदकासिद्धत्वसिद्धत्वविषयकमसिद्धः पाकः कृतिसाध्यः सिद्धश्च पाक इष्टसाधनमिति ज्ञानं सम्भ-वाल... वनरूपं वाच्यम् तच्च न सम्भवति सिद्धत्वासिद्धत्वज्ञानयोः परस्परं विरोधित्वादित्यभिमानः॥ तस्मात्कालभेदादिति न चेदानीम् सिद्धः पा-कः कृतिसाध्यः अग्रे च सिद्धः पाक इष्टसाधनमिति ज्ञानादेव प्रवृत्तिरस्त्विति वाच्यम् इदानीन्तनाग्रेतनकालयोरननुगमात् प्राणित्वस्यापि पुरुषविशे-षणत्वेनाह मिदानीन्तनकृतिसाध्यविषमक्षणः प्राणित्वादित्याद्यनुमितिसम्भवाद्विषमक्षणसाधारणं स्वविशेषणवत्ताप्रति सन्धानजन्यकार्यताज्ञान-मितिबलवदनिष्टाननुबन्धीष्टसाधनताशौ... प्रतिसन्धानजन्यकार्यताज्ञानमप्रवर्तकं वाच्यम्। तदपेक्षया च स्वदनिष्टाननुबन्धीष्टसाधनताविष-

यत्तज्ज्ञानमतिलघ्विति तन्दैवकाम्यनित्यसाधारणकारणत्वेन कल्प्यत इत्यभिप्रायेण प्राभाकरमतं दूषयति नैवमिति ॥ ७ ॥ साध्यत्वसाधनत्वयो-
र्विरोधं दूषयति नचेति ॥ न हीत्यर्थः ॥ यदा कदाचिदिति ॥ यत्किञ्चित्कालीनस्य साध्यत्वस्य यत्किञ्चित्कालीनेन साधनत्वेन विरोधाभावादित्य-
र्थः ॥ तथा चैककालीनकृतिसाध्यत्वेष्टसाधनत्वयोर्विरोधेऽपि न क्षतिस्तथाज्ञानस्यास्माभिः कारणत्वानङ्गीकारात् किन्तु निर्विशेषितयोः साम-
न्यतः कृतिसाध्यत्वेष्टसाधनत्वयोर्ज्ञानस्यैव हेतुत्वाङ्गीकारादिति भावः ॥ तादृशञ्च ज्ञानं सम्भवतीत्याहुः एकदेति ॥ इदञ्च ज्ञानान्वयिज्ञा-
नात् ज्ञानसम्भवात् मूलाद्यनवगाहिनोऽपि हृष्टः स योगीति ज्ञानस्यानुभविकतया व्याप्यदृष्टे ज्ञानं स्वावच्छेदकविषयकमेवेति नियमे

यदा कदाचित्साध्यत्वसाधनत्वयोरविरोधादेकसाध्यत्वसाधनत्वयोश्च ज्ञानात् नव्यास्तु ममेदं कृतिसाध्यमिति
ज्ञानान्न प्रवर्त्तकमनागतेतस्य ज्ञातुमशक्यत्वात् ॥ किन्तु यादृशपुंसः कृतिसाध्यं यदिष्टं तादृशत्वस्य प्रतिसन्धा-
य तत्र प्रवर्त्तते तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यः तादृशश्चाहमिति
प्रतिसन्धाय पाके प्रवर्त्तत इत्याहुः ॥ तन्न स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना सम्भोगादौ
च तदभावात् इदन्तु बोध्यम् इदानीन्तनेष्टसाधनत्वादिज्ञानं प्रवर्त्तकम् तेन भाविर्यौवराज्ये बालस्य न
॥ प्रवृत्तिः इदानीं कृतिसाध्यत्वाज्ञानात् ॥ श्रीः ॥ ७ ॥

मानाभावात् पूर्वोक्तदोष इति ध्येयम् प्राभाकरानुयायिनवीनमतमाह नव्यास्त्विति ज्ञातुमशक्यत्वादिति सामान्यलक्षणप्रत्यासत्त्यनङ्गी-
कारे प्रत्यक्षस्योपलक्षज्ञानाभावेनानुमितेश्चासम्भवादिति भावः ॥ तदभावात् ॥ यादृशस्य पुंसः कृतिसाध्यं यदिष्टं तादृशत्वज्ञानाभावात् ॥
नन्विष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वे भाविर्यौवराज्ये प्रवृत्त्यापत्तिरत आह इदन्तु बोध्यमिति इष्टसाधनत्वादीत्यत्रादिपदोपग्र-
हीतस्येदानीन्तनकृतिसाध्यत्वस्य घटककृतौ विदानीन्तनत्वविशेषणस्य प्रयोजनमाह तेन भावीति ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

का॰मु॰ इष्टसाधनत्वघटकेच्छायास्तद्विशेषणस्य प्रयोजनमाह एवन्तु प्रवृत्तिरिति बलवदनिष्टेत्यत्र बलवद्द्वेषेण तद्विशेषणप्रयोजनमाह प्रवर्त्तेतैवेति प्रवृ-
टी॰ त्तौ प्रवृत्तेः पूर्वं नरकसाधनत्वज्ञानादिति नरकरूपबलवदनिष्टसाधनत्वज्ञानादित्यर्थः उत्कटरागादिनेति अगम्यागमनादिसुखउत्कटरागा-
२२५ दिनेत्यर्थः॥ नरकेति बलवदनिष्टेत्यर्थः॥ तिरोधानात् अनुसन्धानात् तादृशसुखे उत्कटरागसत्त्वेऽगम्यागमनजन्यनरके बलवद्द्वेषानुदया-
दिति भावः॥ प्रवृत्तिरूपेति कृतिसाध्यताज्ञानमित्यत्र प्रवृत्तित्वेन कृतेः प्रवेश इत्यर्थः॥ स्वेच्छाधीनकृतिसाध्यताज्ञानस्य हेतुत्ववादिमणि-
कृन्मतेऽपि स्वेच्छाधीनत्वं कृतिविशेषणं प्रवृत्तिरूपकृतिलाभायैवेति भावः॥ इत्थञ्च तद्व्यापारीभूतेच्छापि प्रवृत्तिसाध्यत्वप्रकारिका बोध्या ज्ञा-
नेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावादिति तेन प्रवृत्तिप्रवेशेन प्राणपञ्चकसञ्चारेण प्रवृत्तिरिति नच प्राणानामतीन्द्रियतयोपादा-

एवन्तु प्रत्यक्षभोजनेन प्रवर्त्तेत॥ तदानीमिष्टसाधनत्वाऽज्ञानात् प्रवर्त्तेतैव रोषदूषितचित्तो विषादिभक्षणे तदानी-
म्बलवदनिष्टाननुबन्धित्वज्ञानात् नचास्ति कस्यागम्यागमनशत्रुवधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्व-
बुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यम् उत्कटरागादिना नारकसाधनताधीतिरोधानात् तृष्णादौ तु कृतिसाध्य-
ताज्ञानाभावान्न चिकीर्षा प्रवृत्तौ किन्त्विष्टसाधनताज्ञानादिच्छामात्रम् कृतिश्च प्रवृत्तिरूपा बोध्या तेन जीवनयो-
नियत्नसाध्ये प्राणपञ्चकसंचारेण प्रवृत्तिः॥ १॥ ६॥

१ नप्रत्यक्षाभावादेव नप्राणोपादानकसञ्चारसाध्यकप्रवृत्त्यापत्ति-
रिति वाच्यम् प्राणवहननाड्युपादानकप्राणसञ्चारसाध्यकप्रवृत्त्यापत्तिवारणायैव प्रवृत्तिसाध्यताज्ञानहेतुत्वाङ्गीकारात् यद्यपि प्रा-
णसञ्चारवृत्तिविशेष्यतासम्बन्धेन कृतिसाध्यताज्ञानहेतुत्वाङ्गीकारादेव तथा प्रवृत्तिवारणं सम्भवति तथापि घटादौ जीवनयोनियत्नसा-
ध्यत्वभ्रमात्प्रवृत्त्यापत्तिवारणाय प्रवृत्तिसाध्यत्वज्ञानहेतुत्वमावश्यकमिति ध्येयम् एतेन प्राणसञ्चारे प्रवृत्तिवारणाय प्रवृत्तिसाध्यताज्ञानस्य
हेतुत्वेऽपि प्रवृत्तिसाध्यत्वभ्रमात्प्राणसञ्चारे प्रवृत्त्यापत्तिर्दुर्वारेत्यपास्तम् नच प्रवृत्तिसाध्यताज्ञानस्य हेतुत्वेऽपि भोजननान्तरीयके श्रमे साध्यत्वप्र- राम॰
प्रवृत्त्यापत्तिर्दुर्वारेति वाच्यम् तादृशश्रमे चिकीर्षाविरहादेव प्रवृत्त्यनुत्पत्तेः तत्र चिकीर्षाविरहश्च श्रमस्य दुःखरूपतया दुःखत्वज्ञानसेच्छा॥ २२५

प्रतिबन्धकत्वेनेच्छासामान्यसामग्रीविरहादेव एतेनानान्तरीयकश्रमे प्रवृत्त्यापत्तिवारणाय स्वेच्छाधीनकृतिसाध्यताज्ञानस्य हेतुत्वम्वा
च्यमिति मणिकृन्मतमपास्तम् नचसुखेप्रवृत्तिसाध्यताज्ञानेच्छयोःसत्वात्तत्रसाध्यतास्य विषयतासम्बन्धेन प्रवृत्त्यापत्तिरितिवाच्य
म् साध्यतयाप्रवृत्तिम्प्रति फलत्वेज्ञानस्यप्रतिबन्धकत्वात् वस्तुतस्तुतत्तद्धर्मावच्छिन्नविषयतासंबन्धेन ज्ञानम्प्रतितत्तद्धर्मस्येच्छाया हेतुता
यास्तत्रतत्रव्यवस्थापितत्वात् तत्रचकार्यतावच्छेदककोटौज्ञानत्वस्थाने गुणत्वमेव निवेशनीयम् एवञ्च सुखत्वान्यवृत्तिविषयतासम्ब
न्धेन गुणत्वस्यकृतिसाध्यता ज्ञानजन्यतावच्छेदकीभूतयत्साध्यतास्य विषयतासम्बन्धेन प्रवृत्तित्वन्तद्व्यापकतयातदवच्छिन्ना
जनकसुखत्वभेदस्य सुखत्वेऽभावादेव न तत्र साध्यतया प्रवृत्त्यापत्तिः व्याप्यधर्मावच्छिन्नजनकसामग्र्याः फलजनने व्यापकधर्माव
च्छिन्नजनकसामग्र्या अपेक्षितत्वात् अनयैवचरीत्या प्राणसञ्चारत्वेश्रमत्वेचसाध्यतास्य विषयतावच्छेदकतासम्बन्धेन प्रवृत्तिवार
णम्बोध्यम् एतदेवहृदिनिधाय प्राणसञ्चारस्य प्रवृत्त्ययोग्यत्वादेव न तत्र प्रवृत्तिरिति मिश्रैरभिहितमिति दिक्॥ ७॥ ॥ इत्यञ्चेति

॥ इत्यञ्च प्रवर्त्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमर्थः ॥ श्लो ८ ॥

प्रवृत्तिम्प्रतीष्टसाधनत्वादिधियोहेतुत्वेचेत्यर्थः॥ इष्टसाधनत्वादीत्यादिना बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वयोःपरिग्रहः॥ अत्रच
निष्फलेप्रवृत्त्यभा वादिष्टसाधनत्वस्येष्टसाधनेपि मधुविषसम्पृक्तान्नभोजनेऽप्रवृत्तेर्बलवदनिष्टाननुबन्धित्वस्यकृत्यसाध्ये सुमेरुशृ
ङ्गाहरणादावप्रवृत्तेः कृतिसाध्यत्वस्य च ज्ञानंहेतुः तच्च विधितइतीष्टसाधनत्वादिकं विध्यर्थइतिभावः॥ ननु भाविपौवराज्यादौ प्रवृ
त्तेर्वारणायेदानीन्तनकृतिसाध्यताज्ञानादेः प्रवर्त्तकत्वम्वाच्यम् तच्च न विधिवाक्यात्ततः शक्यकृतिसाध्यत्वेष्टसाधनत्वप्रकारकज्ञान
स्यैवोत्पत्तेरितिकथम्प्रवर्त्तकज्ञानं विधितइति अत्रवदन्ति नविधिः साक्षात्प्रवर्त्तकज्ञानमुत्पादयति किन्तु विधिवाक्यादिष्टसाधनत्वे
कृतिसाध्यत्वेचावगते किमिष्टमित्याकाङ्क्षायां स्वर्गकामादिपदसमभिव्याहारात्स्वर्गसाधनमितिज्ञानमानुमानिकम्मानसम्वोत्पद्यते
।अन्यथा विशेषरूपेण फलज्ञानाभावात्प्रवृत्त्येनुपपत्तेः॥ एवमिदानीन्तनत्वान्तर्भावेनकृतिसाध्यत्वादिज्ञानमनुमानादि ॥ ६ ॥ ७॥

का॰सं॰ टि॰ २२६

त्ति अत एवोक्तम्मणिकृतापि एवंविधिजन्यज्ञानजन्यन्ज्ञानम्प्रवर्त्तकमिति॥ छ॥ ॥ अत्र भट्टपादाः लोके प्रवृत्तिर्द्वेधा स्वेच्छाधीनापरप्रेरणाजन्या च तत्राद्यायाम्प्रवर्त्तनाया अनुपयोगेपि द्वितीयप्रवृत्तौ सा प्रयोजिका आचार्यप्रेरणं दं करोमीति व्यवहारात् प्रवर्त्तनाच प्रवर्त्तयितुः प्रवृत्त्यनुकूलव्यापारविशेषः॥ स च चेतनस्याभिप्राय एव अचेतनस्य तु वेदस्याभिधानामकः कश्चिच्छब्दसमवेतः॥ तथा चाचार्याभिप्रायज्ञानाद्यथा शिष्यः प्रवर्त्तते तथाभिधाज्ञानाद्विधिस्थलेप्रवृत्तिरिति सैव लिङर्थः सैव च शाब्दभावना लिङ्त्वांशेनोच्यते अर्थभावनात्वाख्यातत्वांशेन तदुक्तम् अभिधांभावनामाहुरन्यामेव लिङादयः॥ अर्थात्मभावनात्वन्या सर्वाख्यातस्य गोचर इति अभिधाशब्दः तन्निष्ठाभावनाऽभिधाभावनार्थो यागादिरात्मावा अर्थात्मकत्वञ्चार्थगोचरत्वमर्थाश्रितत्वं वा तथा च यागादिगोचरात्माश्रिता प्रवृत्तिरर्थभावना अत्र च शाब्दभावनाया अर्थभावनैव भाव्या अर्थभावनायाश्च फलं स्वर्गादीनि वोध्यं तदुक्तम् लिङोऽभिधा सैव च शाब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः सम्बो

इत्थञ्च विश्वजिता यजेत इत्यादौ यत्र फलन्न श्रूयते तत्रापि स्वर्गः फलङ्कल्प्यते नन्वहरहः सन्ध्यामुपासीतेत्यादाविष्टानुत्पत्तेः प्रवृत्तिः कथम्॥

धः करणतदीयम्प्रयोचनाचाङ्गतयोपयुज्यते इति अस्यार्थः लिङोऽभिधावाच्यं तस्याः किम्भाव्यमित्याकाङ्क्षायामुक्तम्भाव्या चतस्या इति केनभाव्या इत्याकाङ्क्षायां सम्बन्धेति सम्बन्धबोधः लिङादिपादशक्तिज्ञानम् तत्रालस्येन निवर्त्तमानम्पुरुषन्तु निरूत्तेजयतीति सा सहकारिणीत्याह प्ररोचनेतीति वदन्ति॰ तन्न॰ लोके स्वेच्छाधीनप्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुत्वेन कॢप्तत्वादन्यत्रापि प्रवृत्तौ तदेव हेतुरस्तु किमतिरिक्तप्रवर्त्तनाज्ञानस्यातिरिक्तहेतुत्वेन अत एव वेदेपि नप्रवर्त्तनाज्ञानं हेतुः॥ शब्दशक्तिभिन्नायामभिधायाम्मानाभावाच्च अत एव मण्डनमिश्राः पुंसान्नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्त्तकः प्रवृत्तिहेतुन्धर्मं च प्रवदन्ति प्रवर्त्तनामित्यादिना प्रवृत्त्यनुकूलत्वेनेष्टसाधनत्वमेव प्रवर्त्तनेत्युक्तवन्तः॥ छ ॥ नन्वेवं विश्वजिता यजेतेत्यादौ फलाश्रवणेनेष्टसाधनताज्ञानाभावात्प्रवृत्तिर्न्नस्यादत आह इत्थञ्चेति इष्टसाधनत्वादेर्विध्यर्थत्वे चेत्यर्थः॥ ननु नित्येसन्ध्योपासनादौ फलाभावान्नेष्टसाधनत्वज्ञानम्प्रवर्त्तकन्त्वानद्विषयोविध्यर्थरसभिप्रायेण शङ्कते नन्विति॥ श्रीः॥ श्रीः ॥छ॥ श्रीः ॥ ॥ ॥ छ॥ श्रीः॥ राम २२६

नचार्थवादिकमिति सन्ध्यामुपासते ये तु सततं शंसितव्रताः॥ विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमित्यर्थः नित्यत्वहान्यापत्तेरिति नित्यत्वकाम्यत्वयोर्विरोधेऽत्यभिमानः। ननु तयोर्विरोधित्वे मानाभावः अहरहः सन्ध्यामुपासीतेत्यादिश्रुतिसन्ध्यामुपासते इत्यर्थवादयोरेकवाक्यताबलेन तत्कालजीविफलकामस्य सम्वलिताधिकारः कल्प्यत इत्यत आह कामनाभाव इति अकरणापत्तेरिति अकरणे प्रत्यवायानुत्पत्त्यापत्तेरित्यर्थः॥ कामनारूपाधिकाराभावादनधिकृताकरणस्य प्रत्यवायजनकत्वाभावादिति भावः॥ ननु तथापि नित्यस्थलीयफलश्रुतेर्वैयर्थ्यमित्याशङ्क्यार्थवादतया स्तुतिमात्रे तात्पर्यं कल्प्यत इत्याह इत्यन्त्वेति कल्पनादिति इदमुपलक्षणम् अर्थवादोपस्थितकामनाया अधिकारत्वेपि अकुर्वन्विहितङ्कर्मेत्यादिना शौचे सति विहिताननुष्ठानस्य प्रत्यवायजनकत्वबोधनात् कामनासम्वलितस्य शुचित्वादेर्नाधिकारत्वं

नचार्थवादिकम्ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम् तथा सति काम्यत्वे नित्यत्वहान्यापत्तेः॥ कामनाभावे चाकरणापत्तेः॥ इत्यन्त्व यत्र फलश्रुतिस्तत्रार्थवादत्वमिति चेन्न ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात् नच कामनाभावेऽकरणतापत्तिः त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात् नतु वेदबोधितकार्यताज्ञानात्प्रवृत्तिरिति सम्भवति इष्टसाधनत्वमज्ञात्वा यतादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात्॥

१ किन्तु नित्यस्थले फलकामनाशुचित्वाद्योरधिकारयोः सम्वलनं तथा च कामनाविरहेपि शुचित्वादिरूपाधिकारसत्वात्तदा सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वमेव कामनाया अधिकारत्वेपि तदधिकारवतः शौचादिविरहिणः सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वं न कल्प्यते शुचितत्कालजीवितत्वरूपाधिकारैकदेशवतोप्यकरणे प्रत्यवायजनकत्वङ्कल्प्यतेनेन सम्वलिताधिकारत्वेपि सति विरहाच्चेत्यपि द्रष्टव्यम्॥ एतेन तत्र नियमेन फलकामनासत्वे मानाभावेपि न क्षतिरिति सूचितम् ननु नित्यगोचरप्रवृत्ता विष्टसाधनताज्ञानङ्कारणमेव नेत्यनेनैवोपपत्तौ किमर्थं नित्यस्यापि काम्यत्वङ्कल्पनीयमत आह नत्वितिस्वेष्टसाधनत्वमिति अव

काशु
दि॰
२२७

व्यतिरेकाभ्यां प्रवृत्तितावच्छिन्नं प्रतीष्टसाधनताज्ञानस्य हेतुत्वादिति भावः। अत एव कुसुमाञ्जलौ सन्ध्योपासनमफलमपि क्रियते वेदबोधितत्वादित्याशङ्क्य गुरुमतमेतत् गुरुगुरोर्मतमित्यभिधायैवोपेक्षितमाचार्यैः॥ ६॥ यच्च पण्डापूर्वं स्वतःप्रयोजनं नित्यस्य कर्मण इति प्राभाकरमतं तदपि दूषयति यदपीति कामनाभावे पण्डापूर्वात्मकफलकमनाभावे रात्रिसत्रन्यायादिति यथाहि रात्रिसत्रशब्दवाच्यानां ज्योतिर्गौरित्यादिवाक्यानां कर्मणां फलजिज्ञासायामश्रुतत्वात् स्वर्गादिफलत्वे गौरवाद्धि विश्वजिन्न्यायापवादेन प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्यर्थवादश्रुतौ प्रतिष्ठैव फलमिति सिद्धान्तितं तथात्राप्यार्थवादिकं ब्रह्मलोक एव फलं लाघवादित्यर्थः अन्यथा फलाभावे

यदपि पण्डापूर्वं फलमिति तदपि न कामनाभावेऽकरणतापत्तेः सौल्यात् कामनाकल्पनेऽत्रार्थवादिकं फलमेव रात्रिसत्रन्यायात् कल्प्यताम् अन्यथा प्रवृत्त्यनुपपत्तेः॥ तेनानुत्पत्तिं प्रत्यवायस्यान्ये मन्यन्ते॥ एवं संध्यामुपासते ये तु सततं शंसितव्रताः विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् एवं दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् इति प्रीत्यात्मकमेव फलमस्तु न च पितृप्रीतिः कथं फलं व्यधिकरणत्वादिति वाच्यम् गयाश्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात् अत एवोक्तं शास्त्रदर्शितं फलमनुष्ठानकर्त्तरीत्युत्सर्ग इति पितॄणां मुक्तत्वे तु स्वस्वर्गादि फलं यावत् नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गजनकत्वात् पण्डापूर्वार्थं प्रवृत्तिश्च न सम्भवति न हि तत्सुखं दुःखाभाववत् स्वतःपुरुषार्थः न वा तत्साधनं ६॥

तेन आर्थवादिकफलकल्पने लाघवेन तत्र तत्रार्थवादिकं फलं दर्शयति अनुत्पत्तिमित्यादिना अत एव पितृप्रीतेः श्राद्धफलत्वादेव उत्सर्ग इतीति श्राद्धादिफलस्य कर्तृमात्रगतत्वे तु व्यभिचाराभावान्नियम एव स्यादिति भावः। पण्डापूर्वस्वीकारेऽपि तत्साधनताज्ञानस्य प्रवर्त्तकत्वं न सम्भवतीत्याह पण्डापूर्वार्थमिति न वा तत्साधनमिति [illegible] न फलत्वाभावात् तत्साधनताज्ञानं प्रवर्त्तकमि

एम·
२२७

ननु त्वन्मतेऽपि प्रत्यवायानुत्पत्तेः कथं फलत्वं स्वतः पुरुषार्थत्वाभावात् न वा दुःखानुत्पत्तिरूपपुरुषार्थसाधनत्वेन तत्त्वेच्छाविषयत्वं दुःखानुत्पत्तेः प्रागभावरूपायास्तज्जन्यत्वादित्याशङ्क्य परिहरति प्रत्यवायेत्यादिना अनुत्पत्त्यादिष्वित्युद्देश्यत्वस्य प्रत्यर्थः ॥ कथं प्रवृत्तिरिति पूर्वोक्तरीत्या प्रत्यवायानुत्पत्तेः फलत्वाभावेन तत्साधनताज्ञानस्य प्रवृत्त्यहेतुत्वात् संध्यावन्दनादौ प्रवृत्तिरित्यर्थः प्रत्यवायाभावः प्रत्यवायप्रागभावः ॥ तदभावे सन्ध्यावन्दनादिनित्याभावे तदभावः प्रत्यवायाभावस्याभावः । तदभावे प्रत्यवायाभावस्याभावे तदभावः दुःखप्रागभावाभावो दुःखरूपः ॥ योगक्षेमसाधारणेति योगोऽप्राप्तस्य प्राप्तिः क्षेमः सिद्धस्य संरक्षणम् प्रवृत्तिम्प्रतीष्टसाधनताज्ञानस्य हेतुता यासाधनतायाः क्षेमसाधारण्या एव प्रविष्टत्वादिति भावः ॥ प्रागभावस्य प्रतियोगिविकल्पग्रासेन फलत्वासंभवात्प्रत्यवायानुत्पत्त्यभाव एव नित्यस्य फलं

प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेत् इत्थम् यथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः एवं प्रत्यवायाभावसत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणतया दुःखप्रागभावम्प्रत्यपि सुवचत्वात् एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थैकदेशे नञर्थान्वयः इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वञ्च न विध्यर्थः किन्तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते ॥ १ ॥ २ ॥ ३ ॥ ॥ ६ ॥ ४ ॥

स्वरूपसम्बन्धविशेषात्मकं क्षेमसाधारणजन्यतया अत्यन्ताभावे सत्त्वादिति तु नव्याः एवमेव योगक्षेमसाधारणमेवा ननु न कलञ्जमित्यत्र कलञ्जभक्षणाभाव इष्टसाधनमित्यन्वयबोधाभ्युपगमे बाधकाभावादित्यत आह विध्यर्थैकदेश इति विध्यर्थनञर्थयोः कथमन्वयः विध्यर्थेष्टसाधनत्वाद्यन्वितनञर्थस्याभावस्य कलञ्जभक्षणे कथमन्वय इत्यर्थः अशक्यत्वादिति कलञ्जभक्षणे तस्य बाधादिति भावः । बलवदनिष्टाननुबन्धित्वमात्रमिति विधेः कृतिसाध्यत्वादिषु त्रिषु शक्तिस्वीकारेण क्वचित्कस्यचित्क्वचित्कस्यचिद्विध्यर्थस्य बोधस्वीकारादिति भावः ॥ प्रवृत्तिम्प्रति कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानत्वेनैकस्यैव हेतुत्वे लाघवात् कृतिसाध्य ॥ १ ॥ श्लो ६ ॥ ॥ श्लो ६ ॥ ४ ॥

न्वादिप्रत्येकविषयकज्ञानत्वेनगौरवादतोविधेरपिविशिष्टमेवशक्यत्वाच्यम् एवञ्चनिषेधस्थलेविशिष्टाभावोविधिसमभिव्याहृतनञा वोध्यतेइत्यभिप्रायवानाह अथवेति विशेषणाभावेविश्राम्यतीति एवञ्चेष्टसाधनत्वादिमतिकलञ्जभक्षणादौविशिष्टाभावोवोध्यमानोवल वदनिष्टाननुवन्धित्वाभावेपर्यवस्यतीतिभावः।विशिष्टस्यविध्यर्थत्वेश्येनेवलवदनिष्टाननुवन्धित्वरूपविशेषणवाधात्कथंविशिष्टस्य वि ध्यर्थस्यवोधइत्याशङ्कते ननुश्येनेनेति श्येनेनेति कर्मनामधेयमभिचरन्वैरीमारणङ्कामयन् कथमिति श्येनेनस्यवाधितत्वादि तिभावः अर्थःविधिजन्यवोधविषयः।वैधत्वान्ननिषेधइतीति यत्तीयपश्वालम्भानुरोधेनमाहिंस्यादितिनिषेधस्यवैधहिंसेतरहिंसापर त्वादितिभावः॥अभिचारइति नथाचाभिचारमहीनञ्चत्रिभिः कृच्छ्रैर्व्यपोहतीति तत्रप्रायश्चित्तोपदेशवैयर्थ्यापत्त्यानिषेधविधेस्तद

अथवावलवदनिष्टाननुवन्धित्वविशिष्टेष्टसाधनत्वेसतिकृतिसाध्यत्वंविध्यर्थः॥तदभावश्चनञावोध्य मानोविशिष्टाभावोविशेष्यवत्तिविशेषणाभावेविश्राम्यति ननुश्येनेनाभिचरन्यजेतेत्यादौकथंवलवदनिष्टाननु वन्धित्वमर्थः श्येनस्यमरणानुकूलव्यापारस्यहिंसात्वेननरकसाधनत्वात् नचवैधत्वान्ननिषेधइतिवाच्य म् अभिचारेप्रायश्चित्तोपदेशात् नचमरणानुकूलव्यापारमात्रंयदिहिंसातदाखड्गकारस्यकूपकर्तुश्चहिं सकत्वापत्तिर्गरललग्नान्नभक्षणजन्यमरणे आत्मवधत्वापत्तिश्चेतिवाच्यम्॥ ॥ ॥ ॥ ॥॥

तिरिक्तपरत्वन्नसम्भवतीतिभावः॥नचैवंयज्ञीयपशुहिंसायाअपिप्रत्यवायजनकत्वापत्तिरितिवाच्यम् अनुपदिष्टप्रायश्चित्तहिंसे तरहिंसापरत्वान्माहिंस्यादितिनिषेधविधेरितिसाक्षान्मरणानुकूलव्यापारएवहिंसानहिश्येनस्तथेतिमाहिंस्यादिति निषेधाविषयत्वात्स्ये ववलवदनिष्टाननुवन्धित्वमित्यभिप्रायेणासाक्षात्परम्परासाधारणमरणानुकूलव्यापारमात्रस्यहिंसात्वेदोषमाह मरणानुकूलव्याप रमात्रंयदिहिंसातदेति साक्षात्परम्परासाधारणः सर्वोपिव्यापारोयदिहिंसातदेत्यर्थः॥ ॥ ॥ननुमरणोद्देश्यकत्वनिवेशेऽन्योद्दे श्येनप्रक्षिप्तनाराचेनयत्रब्राह्मणमृतिस्तत्रप्रायश्चित्तन्नस्यात्॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तस्य हिंसात्वाभावेन मा हिंस्यादिति निषेधाविषयत्वात् तत्राह अन्योद्देश्यकेति वाचनिकमिति ननु मा हिंस्यादिति निषेधविषयतयेति भावः अदृष्टाद्वारकत्वेनेति श्येनस्यादृष्टाद्वारैव वैरिमरणसाधनत्वादिति भावः। नन्वस्तु श्येनस्य हिंसात्वं किमदृष्टाद्वारकत्वविशेषणेनेत्यत आह अत एवेति अदृष्टाद्वारकत्वविशेषणादेवेत्यर्थः॥ न हिंसात्वमिति तथा च तादृशशिवपूजादेर्हिंसात्ववारणाय आवश्यकेनादृष्टाद्वारकत्वविशेषणेन श्येनस्यापि हिंसात्ववारणमिति भावः। ननु साक्षान्मरणजनकत्वविशेषणादेव तादृशशिवपूजनश्येनादेर्वारणे किमदृष्टाद्वारकत्वेन गुरुविशेषणेनेति तदस्यः शङ्कते। न च साक्षादिति अदृष्टाद्वारकत्वविशेषणं विनैव श्येने बलवदनिष्टाननुबन्धित्वमुपपादयतामस्मत्तमाह कैश्चिदिति हिंसाफलमिति साक्षान्मरणफलको व्यापारः फलमित्यर्थः तस्य खड्गाभिघातादेः पापजनकत्वमिति अभिचारसहीनत्वेत्यादिना भिचार वि

मरणोद्देश्यकत्वस्यापि विशेषणत्वात् अन्योद्देश्यकस्य प्रनाराच हननं ब्राह्मणस्य तु वाचनिकम्प्रायश्चित्तमिति चेन्न श्येनवारणायादृष्टाद्वारकत्वेन विशेषणात् अत एव काशीमरणार्थं कृत शिवपूजादेरपि न हिंसात्वम् न च साक्षान्मरणजनकस्यैव हिंसात्वं श्येनस्य तु न तथा किन्तु तज्जन्यापूर्वमिति वाच्यम् खड्गघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः केचित्तु श्येनस्य हिंसाफलत्वं तु मरणं तेन श्येनजन्यखड्गाघातादिरूपा हिंसाभिचारपदार्थस्तस्य पापजनकत्वम् अतः श्येनस्यैव धर्मत्वात् पापाजनकत्वेपि अग्निमपापम्प्रति स्यो ॥ यस्तेनोन प्रवर्त्तन्ते इत्याहुः

स्य पापजनकत्वं नो धनात्साक्षान्मरणजनकव्यापारस्यैवाभिचारपदार्थत्वादिति भावः॥ न च पूर्वन्वेत्यादिना साक्षान्मरणजनकव्यापारस्यैव हिंसात्वमित्याशङ्कितत्वान्नेन पौनरुक्त्यमिति वाच्यं पूर्वं साक्षान्मरणजनकस्य श्येनजन्यापूर्वस्य हिंसात्वमाशङ्कितमिह च तथाभूतस्य खड्गाभिघातादेरपि भेदात् न वादिपदेन श्येनजन्यापूर्वस्य तथाभूतस्य ग्रहणात्कथमेदइति वाच्यम् श्येनजन्यापूर्वस्यैनत्म्म तेः खड्गाभिघातम्प्रत्येव व्यापारतया तस्य मरणजनकत्वाभावात् न च साक्षान्मरणजनकव्यापारस्य हिंसात्वे खड्गघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानुपपत्तिस्तदवस्थैवेति वाच्यम् तत्र खड्गघातादुत्तरमेव ॥ं

का॰मु॰ सन्निपातादिदोषसोऽन्यामरणम्प्रतितस्य व्यापारस्तया व्यापारेणव्यवधानासम्भवात् कुतस्तर्ह्यास्तिकानां श्येनेन प्रवृत्तिरत आह अभि-
दि॰ मेति तथाच पातकप्रयोजकत्वान्नतत्रास्तिकानाम्प्रवृत्तिरिति भावः॥ अत्र नव्याः॥ मोऽस्तु श्येनस्य मा हिंस्यादिति निषेधविषयत्वन्तथा
२२९ व्यभिचारतया पापजनकत्वं सर्वसम्मतम् अभिचारस्योपपातकमध्ये मनुना परिगणितत्वादिति कथन्तस्य बलवदनिष्टाननुबन्धित्वम्॥
यच्चोक्तं श्येनजन्यखड्गाभिघातादेरेवाभिचारतया पापजनकत्वन्न श्येनस्येति तदपि न अभिचारमहीनञ्चैत्यत्राभिचारपदेन तज्जनक
श्येनादेर्ग्रहणादन्यथा प्रत्यभिचारेणा यत्र न खड्गघातादुत्पत्तिस्तत्र प्रायश्चित्तन्न स्यात् एवमपि श्येनेन पापप्रयोजकतया बलवदनि-
ष्टाप्रयोजकत्वोपपादनस्याशक्यत्वाच्च प्रवृत्तिं प्रति बलवदनिष्टाप्रयोजकत्वज्ञानस्यैव जनकतया तद्विषयस्यैव विध्यर्थत्वात् तथाच श्ये-
नस्य बलवदनिष्टाननुबन्धित्वमुपपाद्य विधेर्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वे शक्तिरयुक्ता किन्तु
त्रिषु शक्तित्रयं स्वीकृत्य क्वचित्कस्यचित् क्वचित्कस्यचिदर्थस्य बोध इत्यङ्गीकरणीयम् श्येनेनेत्यादौ तु बलवदनिष्टाननुबन्धित्वस्य बोधो
न भवत्येव परन्त्विष्टसाधनत्वकृतिसाध्यत्वयोरेवेति किञ्च विशेषणविशेष्यभावे विनिगमनाविरहेणापि विशिष्टे शक्तिर्न युक्ता न च प्रत्ये-
कं शक्तिं स्वीकृत्य क्वचित् कस्यचिदर्थस्य बोधोपगमे नियामकाभाव इति वाच्यम् तात्पर्यस्यैव नियामकत्वात् प्रत्येकशक्तिपक्षेऽगम्यङ्ग-
च्छेदित्यादिवाक्यानामिष्टसाधनत्वादिप्रमाजनकतया प्रामाण्यापत्तिरित्यपि न॥ इष्टापत्तेः॥ तत्राप्रामाण्यव्यवहारस्तु कदाचिद्बलवदनि-
ष्टाननुबन्धित्वभ्रमजनकत्वनिबन्धनः॥ न च बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वे सति कृतिसाध्यः पाक इत्येव बोधो न तु कृतिसाध्य-
त्वे सतीत्यादिरूप इति विशिष्टशक्तिपक्षेऽपि न विनिगमनाविरह इति वाच्यम्॥ तथैव बोधो नान्यथेत्यस्य शपथनिर्णेयत्वात् तस्माद्बलवद-
निष्टाननुबन्धित्वादिषु प्रत्येकं शक्तिरिति प्रथमकल्प एव युक्तः॥ तत्रापि बलवदनिष्टाननुबन्धित्वन्नार्थः यागादिजन्यनान्तरीयकदुःख-
स्यापि यस्य कदाचित्॥ यस्य कस्यचिद्बलवद्द्वेषविषयतया यजेतेत्यादीनामप्रामाण्यापत्तेः॥ न कलञ्जं भक्षयेदित्यादिनिषेधविधिवदश्वमे-
धेन न यजेतेत्यादीनामपि प्रामाण्यापत्तेश्च अश्वमेधादौ यद्वाऽयःपुरुषः प्रवर्तते तत्कालीनतत्पुरुषीयबलवद्द्वेषविषयाजनकमर्थ इति श्ये॰
नसन् कालभेदेन पुरुषभेदेन च विधिशक्तिकल्पने गौरवात् कालविशेषपुरुषविशेषाणां विशिष्य ज्ञातुमशक्यतया कालविशेषपुरुष- २२९
[illegible] नेत्या ॥ ६ ॥

दिनिषेधविधिवत्त्वकलञ्जम्भक्षयेदित्यादिनिषेधविधीनामप्रामाण्यापत्तेश्चतत्रयद्यायःपुरुषःप्रवर्त्ततेतत्कालीनतत्पुरुषीयबलवद्द्वेष विषयाजनकत्वस्यतत्रापिसत्वात् किन्तुवैदिकविधेःपापाजनकत्वमर्थःतदभावएवनकलञ्जम्भक्षयेदित्यादौनञाबोध्यते श्येनकत्वभुक्तौतेष्या दिवाक्यस्यप्रामाण्यनिर्वाहायरोगाजनकत्वमप्यर्थःएवमुद्धेनोद्देहेनैकःपर्वतमारोहेदित्यादावपितत्तदनिष्टाजनकत्वमर्थोबोध्यःनच शत्याननुगतत्वरकत्वरोगत्वादीनान्द्वेषविषयतावच्छेदकत्वेनोपलक्षणीभूतेनानुगमय्यतदवच्छिन्नप्रतियोगिताकाभावकूटएकशक्त्या भ्युपगमात् रोगाद्यजनकत्वादौलौकिकलिङ्गेलक्षणाभ्युपगमाद्देतिवदन्ति॥ ७॥ ॥विध्यर्थश्चाप्ताभिप्रायः॥सचस्वेष्टसाधनतानुमाप कइष्टसाधनताज्ञानञ्चप्रवर्त्तकमित्युदयनाचर्यमतमाह आचार्यास्त्विति इत्यादाविन्यादिना॥पाकङ्कुर्यामित्युत्तमपुरुषपरिग्रहः॥ आ

आचार्यास्तु आप्ताभिप्रायोविध्यर्थः॥ पाकङ्कुर्यादित्यादावाज्ञादिरूपेच्छावाचित्ववत्। लिङ्मा त्रस्येच्छावाचित्वंलाघवात् एवञ्चस्वर्गकामोयजेतेत्यादौयागःस्वर्गकामकृतिसाध्यतयाआप्तेष्टइत्यर्थः ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमायप्रवर्त्तते कलञ्जभक्षणेतदभावान्नप्रवर्त्तते यत्तुवेदेपौरुषे यत्वन्नाभ्युपेतितत्प्रति विधिरेवतावद्गर्भइवश्रुतिकुमार्याःपुंयोगेमानम्॥ ६॥ ९॥ ७॥ ७॥ ॥

ज्ञादीत्यादिनाध्येषणापरिग्रहः॥तथाचपाकङ्कुर्याःपाकङ्कुर्यामिति मध्यमोत्तमपुरुषयोराज्ञाध्येषणारूपेच्छावाचित्वङ्लृप्तन्त दृष्टान्तेनप्रथमपुरुषेपीच्छावाचित्वमनुमेयमितिभावः॥ लाघवादिति बलवदनिष्टाननुबन्धीष्टसाधनत्वाद्यपेक्षयेच्छात्वेनवि धिशक्तौलाघवादित्यर्थः॥इत्यर्थः इतिबोधः॥अनुमायेति अत्रचयागोममस्वर्गकामस्यबलवदनिष्टाननुबन्धीष्टसाधनम्मत्कृति साध्यतयाप्तेनेष्यमाणत्वात् मन्मात्रकृतिसाध्यत्वयेष्यमाणमन्नोजनवदित्यनुमानमवधेयम् तदभावात् आप्तेष्टत्वाभावेनहेतुकेष्ट साधनत्वज्ञानाभावात् ननुवेदेवक्तुरभावात्कस्येच्छालिङाबोधनीयेत्यतआह यत्त्विति विधिरेवेति वक्तृभिन्नेच्छायाबोधनेविधेः ॥ सामर्थ्याभावाद्विधिरेववेदवक्तारीश्वरेमानमितिभावः॥

नचकर्त्रस्मरणमितिकर्तुः वेदकर्तुः अस्मरणंस्मृतिभिरबोधनम् तथाचवेदोऽपौरुषेयः अस्मर्यमाणकर्तृकत्वादित्यनुमानंवाधकमित्यर्थः॥कपिलकणादेति कपिलकणादगौतमादिभिस्तच्छिष्यैश्चाद्यपर्यन्तमित्यर्थः॥कर्तृस्मरणस्यसकर्तृकत्वबोधकस्मृतेरित्यर्थः॥नन्वीश्वरस्यवेदवक्तुःसर्गादौकेनचित्स्याप्यादृष्टत्वादननुभवेऽस्मरणन्तदभावेऋषीणांस्मृतिप्रणयनञ्चनसम्भवतीतिचेन्न पौरुषेयत्वानुमानेनवेदवक्तारमनुभूयतन्मूलकश्रुतिस्मृतिप्रणयनयोःसम्भवात् अन्यथावेदस्यसकर्तृकत्वानङ्गीकारेतत्रैवस्मृतिप्वेव वेदस्यसकर्तृकत्वेश्रुतिस्मरद्वर्यस्मृतिमपिप्रदर्शयति एवमिति ननुवेदस्यनित्यत्वबोधकभारतादेवतस्याः कर्तृकत्वेप्रमाणम्भविष्यतीत्याशङ्कतेस्वयम्भूरिति नित्यइत्यर्थः। एषभगवानित्यपिवेदविशेषणंस्तुतिमात्रमिति तथाच पूर्वोक्तश्रुतिस्मृत्योर्विरोधेनास्यभारतस्यनस्वार्थेतात्पर्यम

नचकर्त्रस्मरणंवाधकम् कपिलकणादादिभिराद्यपर्यन्तङ्कर्तृस्मरणस्यैवप्रतीयमानत्वात् अन्यथास्मृतीनामप्यकर्तृकत्वापत्तेः तत्रैवकर्तृस्मरणमस्तीतिचेद्वेदेपिछन्दांसिजज्ञिरेतस्मादित्यादिकर्तृस्मरणमस्त्येव एवम्प्रतिमन्वन्तरञ्चैषाश्रुतिरन्याविधीयतेइत्यपिद्रष्टव्यम् स्वयम्भूरेषभगवान्वेदोगीतस्त्वयापुराशिवादिऋषिपर्यन्ताःस्मर्तारोऽस्यनकारकाइतितु वेदस्यस्तुतिमात्रम् नचपौरुषेयत्वेभ्रमादिसम्भवात् प्रामाण्यंस्यादितिवाच्यम् नित्यसर्वज्ञप्रणीतत्वेननिर्दोषत्वात् अतएवपुरुषान्तरस्यभ्रमादिसंभवान्नकपिलादेरपिकर्तृत्वंवेदस्य॥ ६॥ ७॥

पितुस्तुतिपरत्वमितिभावः भ्रमादिसम्भवात् पुरुषस्यभ्रमप्रमादादिदोषसम्भवादित्यर्थः।नित्यसर्वज्ञत्वेनेति नित्यसर्वविषयकज्ञानवत्वेनेत्यर्थः निर्दोषत्वात् भ्रमादिशून्यत्वात् अतएवनित्यसर्वज्ञत्वभावादेव॥ ॥ ७॥॥ ननुनित्यसर्वज्ञपुरुषप्रणीतत्वापेक्षयानित्यनिर्दोषत्वंवेदस्योक्तत्यतदेववेदप्रामाण्येप्रयोजकमस्तुतथाच सकर्तृत्वानुमानेवाधइत्यतोवेदस्यनित्यत्वेवाधकमाह किञ्चेति तत्सन्दर्भस्येति तत्तिष्ठानुपूर्वीविशेषस्येत्यर्थः॥ आनुपूर्व्यानित्यत्वेननित्यसमवेतनित्यस्यजातित्वे नानुपूर्व्याजाति[illegible]तिरितिसम-भावः॥ अत्रचाप्रेच्छाविषयत्वसम्बन्धेनज्ञा[illegible]त्रपसके[illegible]तःकनकत्वसंगे॥ श्रीः६॥ ६॥ ॥ ७॥ ७॥ ७॥६॥

पि सत्त्वाद्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसाध्यस्य च तत्राभावेन व्यभिचारात्कथं तस्य तत्त्वानुमापकत्वम् बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रकारकेच्छाया लिङर्थत्वे च लाघवाद्बलवदनिष्टाननुबन्धीष्टसाधनत्वमेव लिङर्थोस्तु कृतमाप्तेच्छयेत्यस्वरसआचार्यास्तित्यनेन सूचितः॥ नन्विष्टसाधनत्वस्य न विधितो बाधः संभवति स्वर्गत्वावच्छिन्नसाधनत्वस्य यागे बाधात् गङ्गास्नानादिजन्यस्वर्गे व्यभिचारात् स्वर्गनिष्ठवैजात्यावच्छिन्नसाधनत्वस्य यागे सत्वेपि तद्वैजात्यस्य विधिबोधितस्वर्गसाधनत्वान्यथानुपपत्त्या कल्पनीयस्य प्रागनुपस्थित्या तद्घटितकारणत्वे विधिशक्तिग्रहायोगादिति चेन्न स्वरूपसंबंधविशेषरूपायास्वकारणताया विध्यर्थत्वोपगमादित्येके॥ अन्यथा

किञ्च वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात्तु तदन्तर्गतस्य सन्दर्भस्य वेदस्यानित्यत्वमिति सङ्क्षेपः॥ १॥ ॥उपादानस्येति॥ उपादानस्य समवायिकारणस्याध्यक्षम् प्रत्यक्षम् प्रवृत्तौ कारणमिति निवृत्तिरिति द्विष्टसाधनताज्ञानस्य निवृत्तिम्प्रति

उपादानस्य चाध्यक्षम्प्रवृत्तौ जनकम्भवेत्। निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः १५१ यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत्॥ १॥

॥ जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः॥१४९॥१५०॥१५१॥ यत्न इति जीवनयोनियत्नो यावज्जीवनमनुवर्त्तते स चातीन्द्रियः तत्र प्रमाणमाह॥ ॥ सिद्धिनिरूपकतानवच्छेदकनियतोत्तरवर्त्तितावच्छेदकधर्मवत्स्वर्गकत्वमेव स्वर्गकारणत्वमित्यन्ये॥ वस्तुतस्तु स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव स्वर्गकारणत्वम् तच्च यागे न बाधितं स्वर्गनिष्ठवैजात्यरूपस्वर्गधर्मावच्छिन्नम्प्रति यागस्याव्यभिचाराभावात् ननु विधेरिष्टसाधनत्वे शक्तित्वेपि स्वर्गसाधनत्वस्य कथन्ततो बोधः स्वर्गसाधनत्वादौ विधिशक्तिकल्पने तु शक्त्यानन्त्यम् न च विधिप्रत्ययोपस्थितेष्टे स्वर्गपदोपस्थितस्वर्गस्याभेदेनान्वयात् स्वर्गाभिन्नेष्टसाधनत्वस्य बोधः सम्भवतीति वाच्यम् स्वर्गपदस्य समासान्तर्गततया तदर्थस्यान्यत्रान्वयासम्भवादिति चेन्न स्वर्गसाधनत्वादौ विधेः शक्तिकल्पनेन तथाबोधनिर्वाहात् न चैकैकस्य बोधे विधेर्विनिगमकाभावः स्वर्गादिपदसमभिव्याहाराधीनतद्धर्मघटितसाधनत्वेतात्पर्यग्रहस्यैव वि

नचैवंविधिशक्तानन्त्यंस्वर्गत्वादिधर्मावच्छिन्ननिरूपितसाधनत्वेष्वेकशक्त्युपगमात् नचशक्यतावच्छेदकभेदाच्छक्तिभेदः इष्टतावच्छेदकत्वेनस्वर्गत्वादीन्यनुगतीकृत्यतदवच्छिन्ननिरूपितसाधनत्वेएकशक्त्युपगमात् नचेष्टतावच्छेदकत्वेनैवशाब्दबोधेस्वर्गत्वादीनाम्भानंस्यात्तुखरूपतइतिवाच्यम् इष्टतावच्छेदकत्वस्योपलक्षणतयाशक्तिविषयत्वाद्विशेषणस्यैवशाब्दबोधेभानोपगमात् उपलक्षणत्वञ्चतत्पदजन्यबोधाविषयत्वेनशक्तिविषयत्वन्तत्पदजन्यबोधविषयत्वेनशक्तिविषयत्वमेवचविशेषणत्वमित्यन्यत्रविस्तरः समवायिकारणस्येति तत्साध्यकप्रवृत्तिम्प्रतितत्समवायिकारणात्मकतदुपादानगोचरलौकिकप्रत्यक्षस्यहेतुत्वम् नचशब्दसाध्यकप्रवृत्तिर्मृदङ्गादौनस्यात्तदुपादानस्यगग

शरीरइति प्राणसञ्चारोहिप्रयत्नसाध्यः इत्यञ्चप्राणसञ्चारस्यसर्वस्ययत्नसाध्यत्वानुमानात् प्रत्यक्षप्रयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः। सएवजीवनयोनियत्नः। गुरुत्वन्निरूपयति अतीन्द्रियमिति अनित्येति अनित्येद्व्यणुकादौतद्गुरुत्व

शरीरेप्राणसञ्चारेकारणन्तत्प्रकीर्त्तितम् १५२ अतीन्द्रियङ्गुरुत्वंस्यात्पृथिव्यादिद्वयेतुतत् अनित्येतदनित्यंस्यान्नित्येनित्यमुदाहृतम् १५३ तदेवसमवायिस्यात्पतनाख्येतुकर्मणि सांसिद्धिकन्द्रवत्वंस्यान्नैमित्तिकमथापरम् १५४ सांसिद्धिकन्तुसलिलेद्वितीयंक्षितितेजसोः॥

१ मनित्यन्नित्येपरमाणौनित्यङ्गुरुत्वमित्यनुवर्त्तते ॥तद्गुरुत्वमसमवायि असमवायिकारणम् तदेवेति पतनाख्यइति आद्यपतनेइत्यर्थः द्रवत्वन्निरूपयति सांसिद्धिकमिति द्रवत्वंद्विविधं॥सांसिद्धिकन्नैमित्तिकञ्चेत्यर्थः॥द्वितीयम् नैमित्तिकम्॥

१ नस्यातीन्द्रियत्वात् एवञ्ध्वंससाध्यकप्रवृत्तिरपितत्समवायिनोऽप्रसिद्धेरितिवाच्यम् इष्टापत्तेः शब्दसाक्षात्कारसाध्यकंप्रवृत्तेरेवमृदङ्गादिगोचरयाउपगमादिति प्राचीनमतानुसारेणेदम्॥ नवीनमतेत्वधिष्ठानमात्रमुपादानम्बोध्यम् तेनयोगादेर्हविः शब्दस्यमृदङ्गादिः प्राणसञ्चारादेश्चप्राणवहनाड्यादिरुपादानमिति बोध्यम् १४९।१५०।१५१ मूलेद्वेषादिति फलमनोद्वेषो हिष साधनज्ञानाज्ञानञ्च निवृत्तिस्मृतिकारणमित्यभिप्रायेणोक्तम् प्राणसञ्चारोहीति॥ ॐ॥

अधिकश्वासादिः प्राणसञ्चारो यत्नसाध्यः प्रत्यक्षयत्नसाध्यतया दृष्टः धावतः प्रयत्नोत्कर्षेण श्वासक्रियोत्कर्षदर्शनादिति भावः। इत्थञ्चेति दृ
ष्टान्तसिद्धावित्यर्थः सर्वस्येति। एकत्र यत्नसाध्यत्वस्यानुभविकत्वेन तद्दृष्टान्तेन प्राणसञ्चारत्वावच्छेदेन सर्वत्र भोक्तृयत्नजन्यत्वानुमानादिति।
भावः स एव प्राणसञ्चारहेतुत्वेनानुमीयमान एव नन्वास्तु जीवनयोनियत्ने मानाभावः प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्ममनोयोगस्य
वाज्जीवनान्तप्रयोजकादृष्टाद्यसम्भवाद्ध्यानुमानस्य चाप्रयोजकत्वात् अन्यथैकत्र यत्ने ज्ञानजन्यत्वदृष्टान्तेन जन्ययत्नत्वावच्छेदेन

परमाणाविति जलपरमाणौ द्रवत्वन्नित्यमित्यर्थः। अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यं। कुत्रचि
त्तैजसे कुत्रचित्पृथिव्याञ्च नैमित्तिकं द्रवत्वन्तत्र कौवा नैमित्तिकार्थस्तद्दर्शयति १५३।१५४।१५५। नैमित्तिकमिति वह्नी
ति अग्निसंयोगजन्यं नैमित्तिकन्द्रवत्वम् तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्याञ्चेन इत्यर्थः द्रवत्वमिति हेतुमि

परमाणौ जले नित्यमन्यत्रानित्यमिष्यते १५५ नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु द्रवत्वं स्यन्दने हेतु
र्निमित्तं सङ्ग्रहे तु तत् १५६ स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ तैलान्तरे तत्प्रकर्षो दहनस्यानुकूल
ता १५७ संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने॥

त्ति असमवायिकारणमित्यर्थः सङ्ग्रहे सक्तुकादिसंयोग
विशेषेन द्रवत्वं स्नेहसहितमिति बोद्धव्यम् तेन द्रुतसुवर्णादीनान्न सङ्ग्रहः १५६ स्नेहन्निरूपयति। जले इति जल एवेत्यर्थः
।असौ स्नेहः। ननु पृथिव्यामपि तैले स्नेह उपलभ्यते तेन चासौ जलीयस्तथा सति दहनप्रातिकूल्यप्रसङ्गात् अत आह॥ तै
लान्तर इति। तत्प्रकर्षात्॥ ॥ शे

ज्ञानजन्यत्वकल्पनापत्त्या सुषुप्तौ ज्ञानादेरप्यतीन्द्रियस्य कल्पनापत्तेरिति प्राहुः १५२ पतनसम
वायिभिन्नत्वरूपं पतनासमवायित्वरूपाद्भावतिव्याप्तमतो व्याचष्टे असमवायिकारणमिति द्वितीयादिपतनस्य वेगासमवायिकारणकत्वा
दाह आद्येति एवञ्च संयोगासमवधानकालीनक्रियाया गुणासमवायिकारणिकाक्रियात्वात्संयोगजन्यक्रियावदित्यनुमानेन गुरुत्वसिद्धिरिति भावः

अग्निसंयोगजन्यमिति अग्निसंयोगासमवायिकारणकमित्यर्थः। वक्ष्यमाणातिप्रसङ्गादाह स्नेहसहितमिति नच सांसिद्धिकमेव तथाच सांसिद्धिकद्रवत्वत्वेन तद्धेतुत्वान्न सुवर्णादिद्रवत्वस्य सङ्ग्रह इतिभावः॥ नचावश्यकस्नेहहेतुत्वेनैवानतिप्रसङ्गे सांसिद्धिकद्रवत्वस्य सङ्ग्रहहेतुत्वे मानाभाव इतिवाच्यम् स्नेहत्वेन सांसिद्धिकद्रवत्वत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहेणोभयस्यापि हेतुत्वात् १५६ असौ तैले प्रतीयमानः स्नेहो जलीयः तैलान्तर्गतजलभागनिष्ठस्तथासति तैलान्तर्जलभागस्वीकारे दहनप्रातिकूल्यप्रसङ्गात् दहननाशप्रसङ्गात् दहनाशम्प्रतिस्नेहप्रकर्षात्तैले उपलभ्यमानः स्नेहोपि जलीयस्तत्स्य प्रकृष्टत्वादग्नेरानुकूल्यम् अपकृष्टस्नेहं हि जलं वन्हिं नाशयतीतिभावः १५७ संस्कारन्निरूपयति संस्कारभेद इति वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविध इत्यर्थः॥ ७॥ मूर्त्तेमात्र इति कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः॥ शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते तेन च पूर्वकर्मनाश

मूर्त्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् १५८ स्थितिः स्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि अतीन्द्रियोसौ विज्ञेयः क्वचित्स्पन्देपि कारणम् १५९॥

स्ततउत्तरकर्म एवमग्रेपि विना च वेगङ्कर्मणः प्रतिबन्धकत्वात् पूर्वकर्मनाशउत्तरकर्मोत्पत्तिश्चनस्यात् यत्रच वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः १५८ स्थितिस्थापकेति अतीन्द्रिय इति अकृष्टशाखादीनाम्परित्यागे पुनर्गमनस्य॥ योगेन जलस्य हेतुत्वादितिभावः १५७ वेगो जन्यत इति वेगत्वन्तु जातिविशेषः प्रत्यक्षसिद्धः॥ तेनेति॥ कर्मनाशकस्योत्तरसंयोगस्य तदानीमभावाद्वेगस्यैव कर्मनाशकत्वङ्कल्प्यत इतिभावः तत इति॥ पूर्वकर्मनाशानन्तरमित्यर्थः॥ एवमग्रेपीति॥ उत्तरकर्मणापि पूर्ववेगनाशस्ततो वेगान्तरोत्पत्तिरित्येषा दिगित्यर्थः॥ विनाचवेगमिति वेगं विना कर्मनाशो नस्यादित्यन्वयः॥ नाशकान्तराभावादितिभावः ननु पूर्वकर्मणो नाशाभावे का क्षतिरत आह कर्मोत्पत्तिश्चनस्यादिति॥ अत्र हेतुः कर्मणः प्रतिबन्धकत्वादिति अत्र केचित् उत्तरसंयोगेनैव पूर्वकर्मनाशोत्तरं कर्मणोः॥ ६॥ ०॥ ७॥ ६॥ ॥ ५॥ ॥ ७॥ ० 

संभवान्नत्पूर्वकर्मनाशकर्मोत्पत्तिस्वीकारे प्रयोजनाभावात्। वेगेन तस्माद्वेगेन गच्छतीति कर्मजनकतया प्रत्यक्षमेव वेगे प्रमाणमित्याहुः॥१५८॥ पुनर्गमनस्येति यथापूर्वसंयोगजनकक्रियाया इत्यर्थः॥ ॥ स्थितिस्थापकसाध्यत्वादिति॥ वेगस्यनूतनदेशसंयोगजनकक्रियाजनकत्वान्नतु यथापूर्वसंयोगजनकक्रियाजनकत्वमिति न वेगेन स्थितिस्थापकस्यान्यथासिद्धिरिति भावः॥ स्थितिस्थापकत्वं जातिविशेषः क्रियाविशेषजनकतावच्छेदकतया सिद्धः॥ स्थितिस्थापकश्च क्रियाविशेषजनकः स्वजन्यक्रियानाश्योऽतीन्द्रियश्चेति मूले उक्तप्रायम्॥१५९॥ इ

स्थितिस्थापकसाध्यत्वात् केचिदिति चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तत्र प्रमाणमिति भावः। असौ स्थितिस्थापकः क्वचित् कृष्णशाखादौ॥१५९॥ भावनाख्य इति तस्य संस्कारस्योपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तं। तत्संशयात्तस्यानुत्पत्तेर्निश्चय इत्युक्तं तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः नतु स्मरणं प्रत्युपेक्षान्यनिश्च

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत्॥१६०॥ स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते॥

एतत्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणम् इत्यञ्च संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्तिति चेन्न विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वे हेतुतायाः सिद्धत्वात् किञ्चोपेक्षास्थले संस्कारकल्पनायाः गुरुत्वात् संस्कारं प्रति उपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात् असौ संस्कारः तत्र प्रमाणं दर्शयति स्मरणे इति यतः स्मरणं प्रत्यभिज्ञानञ्च जनयत्यतः संस्कारः कल्प्यते॥

एतच्च उक्तप्रकारेणोपेक्षाज्ञानात्स्मृतिवारणे च वस्तुतः संस्कारं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्व एव विनिगमकमस्तीत्याह किञ्चेति संस्कारकल्पनाया गुरुत्वादित्यस्य स्मृतिं प्रत्येवोपेक्षान्यनिश्चयत्वेन हेतुत्व इत्यादिः॥ सिद्धत्वादित्यग्रिमस्यापि पञ्चम्यन्तस्यानेनान्वयः॥ उद्देश्यवाचकपदस्य प्रागपेक्षितत्वात्तथान्वयप्रदर्शनार्थमुदीच्यसाप्यसाविन्यस्य प्राक्धारणमिति बोध्यम् तत्र संस्कारे॥ अतः संस्कारः कल्प्यत इति अथानुभवध्वंस एव व्यापारोऽस्तु प्रतियोग्यभावयोरेकत्राजनकत्वमित्यस्याप्रयोजकत्वात् न चानुभवस्य स्मृतिं प्रति प्रतिबन्धकत्वापत्तिरिति वाच्यम्॥ श्रीः॥ ॥ श्रीः॥ ॥ ॥ ॥ ॥ ॥ ॥

का॰मु॰ संसर्गाभावत्वावच्छिन्नकारणताश्रयीभूताभावप्रतियोगित्वस्यैवं प्रतिबन्धकतापदार्थत्वादिह च संसर्गाभावत्वेनाजनकत्वात् न चानुभवद्वितीया-
टि॰ यक्षणोत्पन्नसंस्कारेण तृतीयक्षणे स्मरणसंभवात्ध्वंसस्य व्यापारत्वन्न सम्भवति फलस्य प्राक्कालेऽनुभवध्वंसस्याभावादिति वाच्यम् तत्रा-
२३४ पि क्षणविलम्बेनैव स्मरणाभ्युपगमादिति चेन्न संस्कारानङ्गीकारे कदाचिदनुभूतस्य सर्वदा स्मरणापत्तेः। अनुभवध्वंसात्मकव्यापारस्य सर्वदा सत्त्वा-
त् न चोद्बोधकाभावादस्मरणमिति वाच्यम् यत्र वस्तुविशेषज्ञानात्मकोद्बोधकेन दशपञ्च वा घटादेः स्मरणानि जातानि तत्त्वधिकानि तत्र घटादिस्मृ-
तौ न वस्तुज्ञानस्यैव नियतोद्बोधकत्वया तत्स्वे उद्बोधकाभावस्य वक्तुमशक्यत्वात् वस्तुतस्त्वनुपदं वक्ष्यमाणापूर्वसाधकयुक्त्या संस्कारसिद्धिर्निरा

विना व्यापारमपूर्वानुभवस्य स्मरणादिजननाऽसामर्थ्यात् स्वस्वव्यापारान्यतराभावे कारणत्वासंभवात् न च प्रत्यभिज्ञाप्र
तितत्तत्संस्कारस्य हेतुत्वे प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम् अप्रयोजकत्वात् परे त्वनुद्बुद्धसंस्का

धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिकारणम् ।१६। गङ्गास्नानादियागादिर्व्यापारः सत्तु कीर्तितः ॥ ६॥

रात्प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञाप्रतिहेतुत्वङ्कल्प्यत इत्याहुः अदृष्टं नि
रूपयति धर्मेति स्वर्गादीति स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्म इत्यर्थः तत्र प्रमाणं दर्शयितु
॥ माह यागादीति

बाधेति ध्येयम् स्वस्वव्यापाराभावे कार्योत्पत्त्यव्यवहितपूर्वक्षणे स्वस्वव्यापारान्यतराभावे कारणत्वासंभवादिति कार्याव्य-
वहितप्राक्क्षणवृत्ति स्वस्वव्यापारान्यतरकत्वस्यैव कारणतापदार्थत्वाभावादिति भावः॥ अप्रयोजकत्वादिति। संस्कारजन्यत्वस्य स्मृतित्वे प्रयो-
जकत्वाभावादित्यर्थः। मणिकृन्मतमादर्शयति परेत्विति तन्मतेऽन्तराकल्पनीयस्मृतिव्यक्तावुद्बुद्धसंस्कारस्य हेतुत्वकल्पनं मन्यन्ते तु प्रत्यभिज्ञायान्त-
द्धेतुत्वकल्पनमिति समानमन्तरा स्मृतिव्यक्तिकल्पने प्रत्यभिज्ञायान्तद्धेतुत्वकल्पने च तवाधिकङ्गौरवमित्याहुरित्यनेनास्वरसः सूचितः स्वर्गादीत्य राम॰
त्र स्वर्गपदेन सुखमात्रस्यादिपदेन शरीरेन्द्रियादेः परिग्रह इति प्रदर्शयति स्वर्गादिसकलेत्यादिना अधर्मो नरकादीनामित्यत्राप्येवं तत्र धर्मे ॥ २३२

यागादीति आदिना होमदानपरिग्रहः यागत्वञ्च देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छात्वम् देवतोद्देश्यकत्वन्देवतास्वत्ववद्विशेष्यकत्वम् शब्दमयी देवतेति पक्षेतु तस्मा इदमित्यादौ पत्तानविषयत्वमुद्देश्यत्वम् होमत्वञ्चाग्निसंयोगानुकूलक्रियानुकूलघृतादित्यक्तिर्नोदनोद्व्यापारत्वम् दानत्वञ्च मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागत्वमिति सम्प्रदायः॥ यागत्वहोमत्वादयो मानसप्रत्यक्षगम्या जातिविशेषा इत्यन्ये। श्राद्धस्यापि त्रैपेक्ष्या यागत्वेन ब्राह्मणापेक्षया दानत्वेन न तत्र सांकर्यं तेन दर्शयुक्तमित्यपरे। अन्यथा धर्माभावे चिरविनष्टस्याप्यनुभवस्य स्मृतिजनकत्वादाह निर्व्यापारतयेति चिरध्वस्तमिति चिरकालनष्टम् कर्मातिशयमपूर्वं विना फलाय फलजननाय नालं न समर्थमित्यर्थः॥

यागादिव्यापारतया धर्मः कल्प्यते अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात्॥ तदुक्तमाचार्यैः चिरध्वस्तं फलायालं न कर्मातिशयं विनेति ननु यागध्वंस एव व्यापारः स्यात् न च प्रतियोगितत् ध्वंसयोरेकत्राजनकत्वं सर्वत्र तथात्वे मानाभावात् न च तन्मते फलानन्त्यम् तन्मते चरमफलस्यापूर्वनाशकत्वात् तथात्वमिति वाच्यम् कालविशेषस्य सहकारित्वादित्यत आह गङ्गास्नानेति गङ्गास्नानस्य हि स्वर्गजनकत्वे अनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्य एकमपूर्वमेव कल्प्यते लाघवादिति भावः॥ ननु ध्वंसोऽपि न व्यापारोऽस्तु न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्॥ १॥ १॥ ७॥ ॥ श्लो १॥ ७॥ ॥ ११॥

तथात्वे ध्वंसप्रतियोगिनोरेकत्रजनकत्वाभावे एकमेवापूर्वं कल्प्यत इति वस्तुतस्तु यागस्यापि ध्वंसो न व्यापारः तथात्वे कीर्तितयागात्स्वर्गोत्पादवारणाय स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदो निवेशनीयः तत्र च कीर्तितत्वस्यैकस्याभावेन कीर्तितत्वावच्छिन्नप्रतियोगिताकभेदनिवेशनमशक्यमतः कीर्तितव्यक्तीनां तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक एव भेदो निवेशनीयः एवञ्च दशकीर्तितयागस्थले परस्परं तत्तद्व्यक्तिभेदसत्त्वेन स्वर्गोत्पादवारणाय भेदकूटस्यैव कारणतावच्छेदकत्वमुपगन्तव्यम् तत्र च विशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावानन्त्यम् अपूर्वस्वीकारे तु क्षणिकतया कीर्तितयागानामेलनासम्भवेन भेदानामेकत्र निवेशे प्रयोजनाभावः॥ १॥ ५॥

याहृशकीर्त्तितयागादपूर्वमापादनीयन्तद्देशावच्छिन्नयागव्यक्तेस्तदानीमभावात् न चापूर्वे सम्बन्धेन कीर्त्तितयागव्यक्तीनामेलनं सम्भवतीति स्वर्गजनकतावच्छेदककोटौ कीर्त्तितभेदानामेकत्र निवेश आवश्यक इति वाच्यम् अपूर्वाङ्गीकारेऽपि वा स्वर्गसम्भवे स्वर्गजनकतावच्छेदककोटौ कीर्त्तितभेदानामनिवेशात् कीर्त्तितयागादुत्पत्त्यादेर्नध्वंसजनकतावच्छेदककोटौ कीर्त्तितभेदनिवेशस्यासम्भवादित्यन्येषामपि दिशीति॥ नः पन्थाः कारणत्वमिति घटकत्वसम्बन्धार्थः एवमपेक्षापि कोर्यकालवृत्तित्त्वमेवेति यथा समवायिकारणस्य कारणत्वे कार्यकालवृत्तित्त्वम् घटकत्वे समवायिकारणस्य कारणत्वेन थेत्यर्थः तेन कर्मनाशाजलस्पर्शादिना तस्य यागादेः पूर्वम् कर्मनाशाजलस्पर्शादितः पूर्वं च वृत्तत्वादि

अनन्यथासिद्धनियतपूर्ववर्त्तित्वस्य तत्रापि सत्त्वात् अव्यवहितपूर्ववर्त्तित्वं हि च स्तुः संयोगादेः कारणत्वेन तु सर्वत्र कार्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वेऽस्त्यत आह कर्मनाशेति यदि हि अपूर्वं न स्यात्तदा कर्मनाशाजलस्पर्शादिना नाश्यत्वम् धर्मस्य न स्यात् न हि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति भावः एतेन देवताप्रीतेरेव फल

कर्मनाशाजलस्पर्शादिना नाश्यत्वसौमतः १६२ अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः॥६॥

त्वमित्यपास्तम् गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसंभवाच्च देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात् प्रीतेः सुखरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात् जन्यसुखस्य तत्राभावात् तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते॥१६१॥ ॥१६२॥ अधर्मेति नरकादिसकलदुःखानां नारकीयशरीरादीनाञ्च साधनमधर्म इत्यर्थः तत्र प्रमाणमाह॥ ६॥ ७॥ ७॥

ति उत्पन्नत्वाद्धि नष्टत्वाच्चेत्यर्थः॥ योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वादिच्छात्मकयागस्य तृतीयक्षण एव नष्टत्वादिति भावः॥ एवमग्रेऽपि धर्मः क्षरतीत्यस्य धर्मो यागादिः क्षरति फलभाङ् भवतीत्यर्थः कतपा कर्मनाशाजलस्पर्शादेः स्वध्वंससंब  न्धेन स्वर्गादिफलम्प्रति न्धकत्वमेव युक्तमिति न सत् एकाश्वमेधानन्तरमश्वमेधः कृत इति कीर्त्तितेन तदुत्तरम्पुनरश्वमेधकरणेऽपि स्वर्गानुदयापत्तेः॥ न च तदश्वमेधजन्यत्वम् स्वर्गत्वावच्छिन्नम्प्रति तत्कीर्त्तनत्वं न प्रतिबन्धकत्वात् नाश्वमेधान्तरात्स्वर्गानुदयप्रसङ्ग इति वाच्यम्॥ ७॥ ७॥ ॥ ६॥ ॥ ६॥

यदश्वमेधस्य कीर्त्तनं तत्तदश्वमेधजन्यस्वर्गप्रसिद्ध्यात्तादृशप्रतिबध्यप्रतिबन्धकभावस्य कल्पयितुमशक्यत्वात् तच्चापूर्वं दर्शपूर्णमास
योर्हि विधंपरमापूर्वं ङ्कलिकापूर्वं च्चेति तथाहि यदाग्नेयोष्टाकपालोऽमावास्यामाग्योर्णमास्यां चाच्युतो भवति उपांशुयाजमन्तरा यजति ताभ्या
मेतममीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति पञ्चभिर्वाक्यैर्विहितेभ्यः षड्भ्य आ
ग्नेयादिभ्यः षड्उत्पन्नान्यपूर्वाणि तान्येव कलिकापूर्वाण्युच्यन्ते तेभ्यश्च परमापूर्वमिति ननु षडपूर्वाण्यावश्यकानि साक्षादेव स्वर्गं हेतवः सन्तु कि
म्परमापूर्वेणेति चेन्न दर्शपूर्णमासाभ्यां यजेतेत्यनेनोभयत्वावच्छिन्नस्य स्वर्गसाधनत्वावगमादुभयत्वावच्छिन्नस्यैकव्यापारकल्पनाद् द्वित्वस्य।
पूर्वाणां चोभयत्वावच्छिन्नाजन्यत्वात् दर्शपूर्णमासाभ्यामिति विधिप्रवृत्तिसमये चिरविनष्टस्य दर्शपूर्णमासस्य व्यापारतयैकस्यैवापूर्वस्य कल्प
नाच्च नचैवमनन्तरं षण्णां यागानां ङ्क्मिकत्वात्तानेषडपूर्वकल्पनागौरवं तत्सफलमुखत्वात् नच पञ्चभिः पञ्चापूर्वद्वारा षष्ठे नच सा साक्षादेव पर

प्रायश्चित्तेति यदि ह्यधर्मो नस्यात्तदा प्रायश्चित्तादिनानाश्यत्वं नस्यात् नहि तेन ब्रह्महननादीनान्नाशः प्रतिबन्धो वा विधा

प्रायश्चित्तादिनाश्यो सौ जीववृत्तीत्विमौ गुणौ॥१६३॥

तुं शक्यते तस्य पूर्वमेव वृत्तत्वादितिभावः॥ जीवेति ईश्वरस्य धर्माधर्माभावादितिभावः॥१६३॥ ॥ ॥ ॥ ॥ ॥

मापूर्वजन्यत्वामिति किं षष्ठे कलिकापूर्वेणेति वाच्यम् षष्ठेनाप्युत्तराङ्ग दक्षिणासहकारेणैव परमापूर्वजननात्तायत्कालं पष्टस्य यागस्यानवस्थित्या तज्ज
न्यापूर्वस्यावश्यकत्वात् अत्र परमापूर्वं प्रति स्वर्गं प्रति च दर्शत्व पूर्णमासत्वव्यापकेन दर्शपूर्णमासोभयसाधारणवैजात्येन कारणत्वमित्येके दर्श
त्वेन पूर्णमासत्वेन च कारणत्वं दण्डचक्रवन्मिलितानां फलोपधानमित्यपरे अत्र त्रयात्मकदर्शजन्यमपूर्वमेकं कलिकापूर्वत्रयव्यापारकम्
एवन्त्रयात्मकपूर्णमासजन्यमेकमपूर्वं ङ्कलिकापूर्वत्रयव्यापारकं ताभ्यां स्वर्गजनकापूर्वोत्पत्तिस्तच्च परमापूर्वं फलशिरस्कापूर्वमि
त्युच्यत इति नवापूर्वाप्रक्ष इत्येके तत्रैव फलशिरस्कापूर्वमानाभावादष्टापूर्वाण्यन्ये कलिकापूर्वषट्केनैव परमापूर्वसम्भवाद्व्यापारीभूतापू
र्वद्वये मानाभावात्पूर्वोक्तासप्तापूर्व्येव युक्तेति नव्याः॥ इदञ्चापूर्वं ज्ञानेष्विपि तृप्तादौ कर्त्तृनिष्ठम्॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

का॰मु॰ दि॰ २३५

न्मद्यनइत्येके भोक्तृनिष्ठमितितुसम्प्रदायः॥प्राभाकरास्तुयागक्रियासर्वात्मनानैवनश्यति किन्तुसूक्ष्मरूपेणस्वर्गादेहारम्भकेषुयागसम्बन्धि
द्व्यारम्भकेषुयागकर्त्रयात्मनिवावस्थायफलमारभतइत्याहु॥नन्वज्ञानेच्छादिरूपस्ययागस्यात्मनोयोग्यविशेषगुणतयाक्षणचतुष्टया
नवस्थायित्वनियमात् ज्ञानेच्छादीनांसदानुभवेनसमानाधिकरणत्वोत्तरक्षणनिर्गुणनाश्यत्वस्वीकारात् अन्यथैवंरीत्याजगतएवसूक्ष्मरूपेण
यासर्वदावस्थानप्रसङ्गादित्यलंविस्तरेण१६०।१६१।१६२॥ छ्लो॥ श्॥ नन्वगङ्गादिदर्शनादिनाईश्वरेकृतेनधर्मादेरुत्पत्तिरतआह मूलेइमौतु।

इमौ धर्माधर्मौ॥अतोज्ञानिनाकृते अपिसुकृत दुष्कृतकर्मणीनफलायालमितिभावः ज्ञानादपीति अपिनाभोगपरि
ग्रहः नन्वतत्त्वज्ञानस्यकथन्धर्माधर्मनाशकत्वन्नाभुक्तङ्क्षीयतेकर्मकल्पकोटिशतैरपीतिवचनविरोधात् इत्यत्राहतत्त्व
ज्ञानिनांइष्टिनिकायव्यूहेनसकलकर्मणाम्भोगेनक्षयइतिचेन्न तत्रभोगस्यवेदबोधितनाशकोपलक्षकत्वात् कथमन्य

इमौतुवासनाजन्यौज्ञानादपिविनश्यतः शब्दोध्वनिश्चवर्णश्चमृदङ्गादिभवोध्वनिः॥१६४॥कण्ठ
संयोगादिजन्यावर्णास्तेकादयोमताः सर्वःशब्दोनभोवृत्तिः श्रोत्रोत्पन्नस्तुगृह्यते॥१६५॥ श्॥ ग्रं

था प्रायश्चित्तादिनाकर्मणान्नाशः तदुक्तंज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेऽर्जुन क्षीयन्तेचास्यकर्माणितस्मिन्दृष्टेप
रावरेइति नन्वतत्त्वज्ञानिस्तर्हिशरीरावस्थानंसुखदुःखादिकंचनस्यात् ज्ञानेनसर्वषाङ्कर्मणान्नाशादितिचेन्नप्रारब्धे
तरकर्मणामेवनाशात् तत्तच्छरीरभोगजनकंहियत्कर्मतत्प्रारब्धन्तदभिप्रायमेवनाभुक्तमितिवचनमितिशब्दन्निरू
वासनाजन्याविति ईश्वरेमिथ्याज्ञानजन्यवासनाविरहान्नधर्मादेरुत्पत्तिरितिभावः नन्वधर्माधर्मौप्रतिवासनाया ॥पयतिशब्दइति॥॥
हेतुत्वेमानाभावइत्यतआह मुक्तावल्यामतइति ज्ञानिनातत्त्वज्ञानवताअवचनविरोधादिति तेनादृष्टनाशमात्रेभोगस्यहेतुत्वप्रतिपादनादिति
भावः इत्यत्त्वेति कर्मणाम्भोगैकनाश्यत्वेचेत्यर्थः॥अन्यथाउपलक्षकत्वाभावेसर्वकर्माणीति सर्वकर्मजन्यादृष्टानीत्यर्थः॥भस्मसात्कुरुतेना
शयतिस्मृतिन्दर्शयित्वाश्रुतिन्दर्शयति क्षीयन्तेचेति तदभिप्रायमेवप्रारब्धकर्माभिप्रायमेव॥ ६॥ छ्लो॥ ५॥ ॥ ६॥ २॥ ६॥ ६॥ छ्ले॥ छ्लो०॥

राम॰ २३५

गौरवादिति दशशब्दानामनन्तप्रागभावानामनन्तध्वंसानामनन्तहेतुहेतुमद्भावानाञ्च कल्पने गौरवादित्यर्थः १६४।१६५।१६६॥ उक्तप्रतीतिविरोधादिति उत्पादविनाशशालिप्रत्ययविरोधादित्यर्थः इत्यञ्चेति प्रत्यभिज्ञानस्य सजातीयविषयत्वे चेत्यर्थः॥ द्वयोरपीति उत्पादप्रतीतिप्रत्यभिज्ञानयोरित्यर्थः॥ ७॥ ७॥

नभोवृत्तिः अकाशसमवेतः॥ दूरस्थशब्दस्याग्रहणादाह श्रोत्रेति ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह वीचीति १६४।१६५ आद्यशब्देन बहिर्दशदिगवच्छिन्नोऽन्यशब्दस्तैर्नैव शब्दैर्जन्यते तेन चापरस्तद्व्यापकः एवं क्रमेण। श्रोत्रोत्पन्नो गृह्यत इति कदम्बेति आद्यशब्दाद्दशदिक्षु दशशब्दा उत्पद्यन्ते तैश्चान्ये दशशब्दा उत्पद्यन्त इति भावः अस्मिन्मते। कल्पनागौरवादुक्तम् कस्यचिन्मत इति १६६ ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसङ्गतमत आह उत्पन्न इति शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम् इत्यत्रोत्पादविना

वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते १६६ उत्पन्नः को विनष्टः
क इति बुद्धेरनित्यता सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते १६७ तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् त
स्मादनित्या एवेति वर्णाः सर्वे मतं हि नः १६८॥ इति श्रीविश्वनाथपञ्चाननकृता कारिकावली समाप्ता॥ ❋॥

शबुद्धिर्भ्रमरूपैवेत्यत आह सोऽयमिति साजात्यमिति तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः उक्तप्रतीतिविरोधात् इत्यञ्च द्वयोरपि प्रतीत्योरभ्रमत्वमिति १६७ ननु सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह तदेवेति यदौषधमन्येन कृतं तदौषधमन्यापि कृतमित्यादि दर्शनादिति भावः १६८॥ इति श्रीमहोपाध्यायविद्यानिवासभट्टाचार्यपुत्रश्रीयुतविश्वनाथपञ्चाननभट्टाचार्यविरचिता सिद्धान्तमुक्तावली समाप्ता॥ ७॥ ७॥ ((अत्र मीमांसकाः स एवायं ककार इति प्रत्यभिज्ञया गकारादेस्तावत्कालावस्थानस्य विषयीकृतत्वेनान्तराभूतशब्दादिनाऽनाशे नाशकाभावाद्वर्णनित्यत्वसिद्धिः नच प्र ः॥ ५

न्यभिज्ञातत्ज्ञातीयत्वविषयिणी बाधकाभावात् अन्यथा सर्वत्रापि तथाभावेऽभेदोच्छेदापत्तिः नचतारत्वमन्दत्वरूपविरुद्धधर्माध्यासो बाधकः प्रत्यभिज्ञानबलेन तस्य नित्यत्वसिद्धौ तारत्वादेर्व्यञ्जकवायुधर्मत्वस्य कल्पनात् श्रोत्रेण वायुधर्मस्य तारत्वादेरपि ग्रहणसम्भवात् यस्त्वतारः स एवान्यापेक्षया मन्द इति प्रतीतेस्तारत्वमन्दत्वयोरविरोधाच्चेत्याहुः तन्न तथा सति कत्वादेरपि व्यञ्जकवायुधर्मत्वापत्त्या ककारगकारयोरपि भेदो न सिद्ध्येदिति वर्णैक्यापत्तेः॥ वस्तुतस्तु वर्णनित्यत्वपक्षे कण्ठताल्वाद्यभिघातानाङ्कत्वादिकङ्कार्यतावच्छेदकम्वर्णनित्यतापक्षे तु कसाक्षात्कारत्वमिति गौरवात् नचनित्यत्वमतेपि लौकिकविषयितया कत्वमेव तज्जन्यतावच्छेदकमिति गौरवाभाव इति वाच्यम् कोलाहलप्रत्यक्षस्यासङ्ग्रहप्रसङ्गात् नहि कोलाहलप्रत्यक्षं कत्वादिविषयकम् अन्यथा तुल्ययुक्त्या घटाद्युत्पादकस्यापि घटप्रत्यक्षत्वमेव कार्यतावच्छेदकमिति तदपि नियमेवस्यादिति नचानित्यत्वमते प्रत्यभिज्ञाया स्तज्जातीयत्वविषयत्वेन तज्जातीयोयमिति स्यान्न तु सोयमितीति वाच्यम् यत्र प्रत्यभिज्ञायाञ्जातित्वेन गत्वादेर्भानन्तत्रैव तज्जातीयोयमित्याकारः यत्र तु स्वरूपतो भानन्तत्र सोयमित्याकार इत्यभ्युपगमादिति अत्रेदम्बोध्यम् शब्दो द्विविधः ध्वन्यात्मको वर्णात्मकश्च॥ तत्र ध्वन्यात्मकसंयोगजन्याद्यशब्दम्प्रति गगनं समवायिकारणम् भेर्याकाशसंयोगोऽसमवायिकारणम् भेरीदण्डसंयोगादिर्निमित्तकारणम् विभागजन्यध्वन्यात्मकाद्यशब्दम्प्रति तु वंशदलाकाशविभागोऽसमवायिकारणम् वंशदलद्वयविभागो निमित्तकारणम् वर्णात्मकाद्यशब्दम्प्रति तु कण्ठताल्वादिनाकाशसंयोगोऽसमवायिकारणम् कण्ठताल्वादिना वाय्वादिसंयोगो निमित्तकारणम् द्वितीयादिशब्दम्प्रति तु आद्यशब्दोऽसमवायिकारणम्। नच भेर्याकाशसंयोगकण्ठाद्याकाशसंयोगादीनां शब्दम्प्रति कारणत्वे मानाभाव इति वाच्यम् भावकार्यस्यासमवायिकारणजन्यत्वनियमेन तत्कारणत्वस्वीकारात् तादृशनियमे मानाभावे तु मास्तु तेषाङ्कारणत्वम्भेरीदण्डसंयोगादिनिमित्तकारण सहकृतेनाकाशेनैव शब्दोत्पत्तिसम्भवादिति प्रथमादिशब्दानाञ्च स्वकार्यशब्देनैव नाशः चरमस्य तूपान्त्यशब्देनोपान्त्यशब्दनाशेन वा नाश इति॥॥

१६७॥ मूलेन द्वेवौषधमित्यादिना सैवेयन्दीपकलिकेत्यादेः परिग्रहः नतु तत्रापि व्यक्तिभेद एव विषयोस्त्वतो भावार्थम्प्रकाशयति यद्वौषधम्मया कृतमित्यादिना अत्र च स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासाद्धि न भेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वान्न व्यक्तिभेदो विषयः किन्तु न सजातीयाभेदो विषय इति भावः॥ १६८॥ भा[illegible]शास्त्रसारमुक्तावलीकिरण एव पित्त-

प्रदिष्टः ॥ सद्युक्तिभिर्दिनकरेण करेणसौ यन्नीतः प्रकाशपदवीं सुधियां मुदेस्तु ॥ १ ॥ मुक्तावलीप्रकाशोयः स्वाज्ञान तिमिरापहः तेन
सन्तोषमायातु नीलकण्ठः सतां प्रियः ॥ २ ॥ ❀ ॥ ६ ॥ इति श्रीमद्दिनकरभट्टविरचिता न्यायसिद्धा न्तमुक्तावलीदीपिका समाप्ता
॥ ❀ ॥ ६ ॥ अथ निरूपणक्रमः ॥ ७ ॥ ६ ॥ ६ ॥ अत्र प्रमेयसन्दर्भः क्रमेणैव विलिख्यते प्रागुद्देशः पदार्थानां साधर्म्यविनिरूपणम् ॥
॥ १ ॥ प्रसङ्गात्तत्र निर्दिष्टं कारणत्वं सविस्तरम् अन्यथासिद्धयः पञ्च उक्ताः क्षित्यादिका गुणाः ॥ २ ॥ पुनः क्षित्यादिषु प्रोक्ता गुणभे
दा अशेषतः क्षित्यादिभेदसहितास्तत्रात्मविनिरूपणे ३ बुद्धेः प्रपञ्चो निर्दिष्टः सन्निकर्षोपि षड्विधः लौकिकोलौकिकस्तत्र त्रिवि
धा तु मितिः स्मृता ॥ ४ ॥ सविस्तारं विनिर्दिष्टा हेत्वाभासाश्च तत्र हि उपमानं शाब्दबोधप्रकारोऽथ तद्गुणः ॥ ५ ॥ मनो निरूपितम
थात्मगुणानां मूर्त्तेतरेतिता अमूर्त्तमूर्त्तेनित्यादि पाकोन्तविनिरूपणम् ६ गुणप्रकारविस्तारः शब्दान्त इति सङ्ग्रहः ॥ ❀ ॥ श्री सम्वत् १९४३
मिती श्रावणशुक्ल १३ गुरुवासरे ॥ शुभम्भूयात् ॥

॥ श्रीकाशीविश्वनाथपुरीमें महल्ला छोटकी पिअरी पर बाबू कोलेश्वरसिंहके मकानमें बा
बू किशुनदयालसिंहके गनेसप्रभाकर छापाखानेमें कारकावलीमुक्तावली दिनकरी रामरु
द्री टिप्पणीसहित छापीगयी जिसको लेना होय सो नईसडक पर बाबू कोलेश्वरसिंहके दुका
नपर मिलैगी सोधा बालशास्त्रीप्रभुणेन बहुत शुद्धता पूर्वक लीन्हार तिवारी छापाखान
ने संवत् १९४३ ॥ श्रावणशुक्ल १३ गुरुवासरे श्रीशुभम्भूयात् राम राम राम